अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाँ रेताँसि जिन्वति ॥

विरूपस्यार्षम् । अग्निः मूर्धा । लुप्तोपममिदं द्रष्टव्यम् । मूर्धानमिव । यादृशं मनुष्यस्य शिरः सर्वाङ्गानां प्रधानं तादृशः प्रधानं स्वामीत्यर्थः । कस्य । उच्यते । दिवः द्युलोकस्य । स्वर्गलोकस्येत्यर्थः । ककुत् । एतदपि लुप्तोपमम् । ककुदमिव । यथा बलीवर्दस्य ककुदं प्रधानं तादृशः प्रधानः । पतिः स्वामी । कस्याः । पृथिव्याः पृथिवीलोकस्य । अयं अपां रेतांसि । आप इत्यन्तरिक्षनाम । रेत इत्युदकनाम । अन्तरिक्षस्य सारभूतानि उदकानि । अथवा अपां वीर्याणि रेतांसि । उदकानीत्यर्थः । अथवा अपां वीर्याणि जिन्वति प्रीणयति आप्यायतीत्यर्थः । कुत एतत् । अग्निर्वा इतो वृष्टिं समीरयति इति श्रुतेः ॥

विरूपः । अग्निः मूर्धा धारकः । दिवः ककुत् उच्छ्रितः । पतिश्च पृथिव्याः भुवः । अयं अपां रेतांसि कारणानि मेघान् । जिन्वति प्रेरयति वैद्युतरूपोऽयमग्निः । अथवा कार्यं रेतः । अपां कार्याणि वृक्षादीनि । जिन्वति तर्पयति परिणमयति ॥ (७)

इमम् ऊ षु त्वमस्माकँ सनिं गायत्रं नव्याँसम् । अग्ने देवेषु प्र वोचः ॥

शुनःशेपस्यार्षम् । उ सु इति द्वावपि पादपूरणौ । इमं त्वं अस्माकं स्वभूतं सनिम् । षणु दाने । सनिं पुरोडाशादिकं दानम् । गायत्रं स्तोत्रं च । नव्यांसं नवतरम् । अन्यैरकृतं पूर्वमित्यर्थः । हे अग्ने देवेषु प्रवोचः । देवेष्विति सप्तमीबहुवचनं चतुर्थीबहुवचनस्य स्थाने द्रष्टव्यम् । देवेभ्यः प्रकर्षेण कथय ॥

शुनःशेपः । अत्र ऊ सु इतीमौ पादपूरणौ । त्वं हे अग्ने । इममिति लिङ्गव्यत्ययः । इदम् । गायत्रं स्तोत्रम् । गायतेर्गायत्रम् । अस्माकं अस्मदीयं अस्माभि

क्रियमाणम् । सनिम् । सनोते सनि । सनोतिश्च सम्भजनकर्मा दानकर्मा च । सभजनीयमिति वा दातृकाममिति वा । नव्यास नवीयास नवतरम् । अत्रापि लिङ्गव्यत्यय । देवेषु देवेभ्य इत्यर्थ । प्रवोच प्रब्रूहि । अथ स्तोता आयुष्मान् गायति । त गच्छत इति प्रेरयेत्यर्थ ॥ (८)

तं त्वा गोपवनो गिरा जनिष्ठदग्ने अङ्गिर । स पावक श्रुधी हवम् ॥

गोपवनस्यार्षम् । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्य । य उक्तगुणोऽग्नि त त्वा गोपवन । आत्मान परोक्षरूपेण प्रतिनिर्दिशति । गोपवनो नामायमृषि । गिरा स्तुतिलक्षणया वाचा । जनिष्ठत् जनितवानित्यर्थ । हे अग्ने अङ्गिर । अङ्गानि शरीरावयवा । स्तद्वत् अङ्गि शरीरम । तस्य स्थितिहेतुरशितपीतरस । तत्करोतीति णिच् । अङ्गिरसयति । जाठरो ह्यग्नि अन्न रसीकरोति । तस्य सम्बोधन हे अङ्गिर शरीरस्थितिहेतोरशितपीतरसस्य कर्त इत्यर्थ । यत एव स्तुतवान् । अतो ब्रवीमि । स त्व हे पावक शोधयित श्रुधि शृणु । हव आह्वानम् । श्रुत्वा च एहि अस्मद्यज्ञमित्यर्थ ॥

गोपवन आत्रेय । त य सर्व जना स्तुवन्ति तम् । त्वा त्वाम् । गोपवन ऋषि । गिरा स्तुत्या । अजनिष्ठत् जनयति वर्धयति । स्तूयमाना हि देवता वर्धन्ते । हे अग्ने । अङ्गिर अङ्गिरस पुत्र । अङ्गिरसा वा एकोऽग्नि (ऐ ब्रा ६ ३४) इति ऐतरेयकम् । अगेवा अङ्गिरा । गन्तव्य सर्वग । स त्वम् । हे पावक शोधक । श्रुधि शृणु । हव स्तोत्र गोपवनस्य ॥ (९)

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥

वामदेवस्यार्षम् । परीत्यप अक्रमीदित्याख्यातेन सम्बन्धयितव्य । वाजपति । वाजमन्नम् । तस्य पति स्वामी । कवि मेधावी । अग्नि ।

हव्यानि हवींषि हवि । अक्रमीत् । क्रमिर्गत्यर्थ । शुद्धोऽपि च ण्यर्थे द्रष्टव्य । परिक्रमितवान् परिगमितवान् । नीतवानित्यर्थ । क्व प्रति । सामर्थ्यात् देवान् । किं पुन कुर्वन् हवींषि नीतवान् । उच्यते । दधत् ददन्नित्यर्थ । रत्नानि धनानि । दाशुषे यजमानाय ॥

वामदेव । इय पशो पर्यग्निकरणे मैत्रावरुणे नोच्यते । मन्त्रलिङ्ग च तथाविध भवति । अत: अग्नीषोमीयस्य पशो पर्यग्निकरणे क्वचित् ब्राह्मणे प्रस्तोतृविनियोगेनैव भाष्यम् । पर्यक्रमीत् परिक्रामति परितो गच्छति । हव्यानि हवींषि । वाजपति. अन्नाना पति । कवि क्रान्तदर्शी । सर्वविषयप्रज्ञ इत्यर्थ । अग्नि. दधत् प्रयच्छन् । रत्नानि रमणीयानि धनानि । दाशुषे यजमानाय ॥ (१०)

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥

प्रस्कण्वस्यार्षम् । उच्छब्द वहन्तीत्याख्यातेन सम्बन्धयितव्य । व्यवहिताश्च (पा. १. ४. ८२) इति पाणिनीयस्मरणात् । उ इति पादपूरण । त्यच्छब्दस्तच्छब्दपर्याय । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याह्रियते । यं सर्वप्राणिनो नित्य नमस्यन्ति तम् । जातवेदसं जातप्रज्ञं जातधनं वा । देवं दानादिगुणयुक्तम् । उद्वहन्ति । के । अर्थात् रश्मय । कीदृशा रश्मय । केतव प्रज्ञानवन्त इत्यर्थ । किमर्थमुद्वहन्ति । दृशे दर्शनाय । विश्वाय । षष्ठ्यर्थे एषा चतुर्थी । सर्वस्य जगत । कमुद्वहन्ति । सूर्यमादित्यम् । उदिते ह्यादित्ये सर्व जगत्पश्यति नानुदिते । एकमेवेदं ज्योति त्रिधा विभक्तमित्येवमाग्नेयत्वमविप्रतिषिद्धम् ॥

प्रस्कण्वः काण्वः । इय सौरी । आग्नेयसमाख्या तु छत्रिणो गच्छन्तीतिवत् प्राणभृत उपदधातीतिवच्च द्रष्टव्यम् । सूष्टिन्यायेन वा । भूयस्त्वादाग्ने-

यीनाम्। उद्वहन्ति केतव प्रकाशस्वभावा रश्मय । रश्मिषु पूर्वदृष्टेषु पश्चात् सूर्यो दृश्यते इति ।

अ॰जा गोजा (ऋ वे ४ ४० ५)

इति च निगमान्तरम्। गोभ्यो रश्मिभ्यो जायते इति हि गोजा इत्युच्यते। तत्र रश्मीना पूर्वदृष्टत्वमात्रेण। अथवा अश्वा सूर्यस्य हरित उद्वहन्ति। उ इति पादपूरण । त्य त थ सर्वे नमस्यन्ति। जातवेदसम्। जात प्रभूत वेदो वित्त ज्ञान वा यस्य स जातवेदा । जातान् प्राणिना वेत्तीति वा। देव दानादिगुणकम्। सूयम्। सुवते प्रेरणकर्मण सर्वेर्वा। दृशे द्रष्टुम्। विश्वाय विश्व इत्यथ । दृशे विख्ये च (पा ३ ४ ११) इति तुमर्थेनिपातनात् रूपसिद्धि । समानकर्तृकेषु छन्दसि तुमर्थीया दृश्यन्ते। अथवा दृक् दर्शनम्। दर्शनाय। विश्वाय इति षष्ठ्यर्थे चतुर्थी। विश्वस्य तमसावृतस्य अपश्यतो दर्शन धर्म॥ (११)

कविमग्निमुपस्तुहि सत्यधर्माणमध्वरे। देवममीवचातनम्॥

मेधातिथेरार्षम्। अन्तरात्मनश्चाय प्रैष । हे मदीय अन्तरात्मन्। कवि मेधाविनम्। अग्निमुपस्तुहि सत्यधर्माण सत्यकर्माणम्। अध्वरे यज्ञे। देव दानादिगुणयुक्तम्। अमीवचातनम्। अमीवो रोग । तस्य चातयितारम्। नाशयितारमित्यर्थ ॥

मेधातिथि । कवि क्रान्तदर्शिनम्। अग्नि उपस्तुहि। अभिष्टुहि इति आत्मानमेवाह मेधातिथि । सत्यधर्माण सत्यकर्माणम्। अध्वरे यज्ञे। देव दानादिगुणकम्। अमीवचातनम्। अमीवा अमित्रा । तेषा चातन नाशयितारम्। रोगा वा अमीव ॥ (१२)

शं नो देवीरभिष्टये शं नो भवन्तु पीतये। शं योरभिस्रवन्तु नः॥

सिन्धुद्वीपस्य अम्बरीषस्य वा आर्षम्। तृतस्य वा आप्तस्य वा। शमिति सुखनाम। श सुखम्। नोऽस्माकम्। देवी दानादिगुणयुक्ता ।

भवन्तु । का । आप । क पुन सुखा भवन्तु । उच्यते । अभिष्टये अभिगमनाय । अपा हि किमभिगमनम् । स्नानादिभिस्तत्पुनरासेवनम् । तदर्थं सुखा भवन्त्वित्यर्थ । किमभिष्टय एव केवलम् । उच्यते । पीतये पानाय चास्माक सुखा भवन्त्वित्यर्थ । श शमन यु अपनयनमित्यर्थ । द्वे अप्यते प्रथमैकवचने चतुर्थ्येकवचनस्य स्थाने द्रष्टव्ये । शमनाय । कस्य सामर्थ्या द्रोगाणाम् । यावनाय च । कस्य । सामर्थ्याद्भयानाम् । अभिस्रवन्त्व स्माकम । अग्निप्रसादेनेत्येवमाग्नेयत्वम् ॥

सिन्धुद्वीप । श सुखाय । न भवतु देवी देव्य गच्छन्त्य आप । दिव्यते गतिरपि अर्थो भवति । अभिष्टये अभीष्टये अभ्याप्तये च अभीष्टना भवन्तु । श न इति पुनर्वचनमादरार्थम् । पीतये पानायापि भवन्तु । न । श शान्तिरुपद्रवाणा । यो भिस्रश अभिष्टि । तदुभय अभिस्रवन्तु अभि क्षरन्तु । न अस्मभ्यम ॥　(१३)

**यस्य नूनं परीणसि धियो जिन्वसि सत्पते। गोपाता यस्य ते गिर ॥**

उशनस आर्षम् । कमिति सुखनाम । कस्य सुखस्येत्यर्थ । नून निश्चयन । परीणसि । सप्तम्येकवचनमिद द्वितीयाबहुवचनस्य स्थाने द्रष्टव्यम् । परीणस । बहूच इत्यर्थ । धिय प्रज्ञा । जिन्वसि प्रीणयसि पूरयसि । प्रज्ञासुखाभ्या पूरयन् सुखिन करोतीत्यर्थ । सत्पते सता पालयित । कस्य पुन प्रज्ञासुखेन पूरयसि । उच्यते । गोपाता यस्य ते गिर । गोशब्देनात्र सोम उच्यते । साता इत्यपि सनोते सम्भजनार्थस्य रूपम् । सोमान् या सम्भजन्ते ता गोपाता । सोमाना सम्भक्त्य । सोमै सह या क्रियन्ते इत्यर्थ । यस्य यजमानस्य । ते तव सम्बन्धिन्य । गिर स्तुतय । सोमन सहूताभि स्तुतिभि यस्त्वा स्तौतीत्यर्थ ॥

उशनसाहूयमानस्याग्नेरोगमनाद्विप्रमस्तद्रमान ऋषि आह। कस्य यजमानस्य। धिय स्तुती कर्माणि यज्ञात्मकानि वा। नून मद्य। जिन्वसि तर्पयसि कामैः। परिण इति महन्नामेदम्। परिपूर्णात् णसे व्याप्तिकर्मण इद रूपम्। महति यज्ञे। सत्पते सता आर्याणां यज्वना पते पालयित। यस्य ते तव। गिर स्तुतय। गापाता गवा सातौ लाभे निमित्त भवन्ति। यस्य ते स्तोतार गवा सभक्तारो भवन्ति। स त्व इदानीं कस्य यज्ञे स्तुती परिचर्यां वा स्वी करोषि॥ (१४)

प्रथमस्य तृतीया दशत्या।

---

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे।
प्रप्र वय अमृतं जातवेदसं प्रिय मित्रं न शंसिषम्॥

भरद्वाजस्यार्षम्। यज्ञायज्ञेति सप्तम्या स्थाने अयमाकार। वीप्सायां च द्विर्वचनम्। यज्ञे यज्ञे। अन्यत्र चान्यत्र च यज्ञे इत्यर्थ। व। द्वितीयाबहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम्। त्वाम्। अग्नये। चतुर्थ्येकवचनमिद द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्। अग्निम्। गिरा गिरा अन्यया चान्यया च स्तुत्या इत्यर्थ। चशब्द समुच्चयादेरर्थस्यासम्भवात् पादपूरण। दक्षसे। दक्षतेर्धातोरुत्साहार्थस्यैतद्रूप बलनाम च। अन्तर्णीतमत्वर्थ द्रष्टव्यम्। चतुर्थी च द्वितीयार्थे। उत्साहिन बलवन्त चेत्यर्थ। प्रप्रेति प्रशब्द पादपूरण इति पादपूरणार्थं द्विर्वचनम्। प्रेत्यय शंसिषमित्यनेन सम्बन्धयितव्य। वयमित्येतत् प्रथमाबहुवचन एकवचनस्य स्थाने द्रष्टव्यम्। अहम्। अमृतममरणधर्माणम्। जातवेदसम्। वेद इति धननाम। ज्ञान वा। जात धन ज्ञान वा यस्य स जातवेदा।

तं जातवेदसम् । उत्पन्नज्ञानमुत्पन्नधनं वेत्यर्थः । प्रियं मित्रं न । नशब्द उपरिष्टादुपचारत्वादुपमार्थीय । प्रियं मित्रमिव । शंसिषम् । शंस स्तुतौ । यथा कश्चित्प्रियं मित्रं स्तौति तद्वत् स्तूयेम अहमित्येतदाशास्महे ॥

## अथ बार्हतम्

यज्ञा यज्ञेति चाग्नेय्यो बृहत्योऽग्रोर्ध्वेर्विशति ।
अध ज्मो अध वेत्यैन्द्री प्रेत्विति ब्रह्मणस्पते: ॥
ऊर्ध्व ऊ ष्विति यूपस्य स्तुतिरग्ने जरितेति ।
समास्या प्राणभृत्यायामिति पूर्वमुदीरितम् ॥

बार्हस्पत्यः। यज्ञा यज्ञा । सप्तम्येकवचनस्य सुपा सुलुक् (पा. ७. १. ३९) इत्यादिना आकारादेशः । यज्ञे यज्ञे । व इति विभक्तिव्यत्ययः । यूयमिति वा त्वमिति वा । हे स्तोतार इति वा हे स्तोतरिति वा । अग्नये अग्न्यर्थम् । गिरा गिरा स्तुत्या स्तुत्या । चेति चणो निपातस्य रूपम् । च: चेदर्थे वर्तते । तद्योगाच्च दक्षसे इति आख्यातस्य उदात्तत्वम् । निपातैर्यद्यदिहन्तकुविन्नेच्चेचण्-कच्चिद्यत्रयुक्तम् (पा ८. १. ३०) इति । अन्यथा सर्वानुदात्तत्वं स्यात् तिङ्-तिङ: (पा. ८ १. २८) इति । दक्षसे । दक्षतिः समर्धयतिकर्मा । समर्धयसीति वा समर्धयथेति वा । यदि यूयं मे सहायभूताः स्तोत्रैः अग्नये समृद्धिमुत्पादयथ तदा इत्यध्याहार्यः । प्रप्रेति द्विरुक्तिः पादपूरणार्था प्रसमुपोदः पादपूरणे (पा. ८. १. ६) इति । प्रशंसिषमिति सवन्धनीयः । वयं इति आत्मनि बहुवचनम् । प्रशंसिषमिति वचनव्यत्ययः वयमित्यनेन सामानाधिकरण्यात् । शंसिषमिति पञ्चमलकारान्तम । लोडर्थे लेट् । लेटो सिपि कृते लेटोऽडाटौ (पा. ३ ४. ९४) इत्यडागमः । सिप् बहुलं लेटि (पा. ३. १. ३४) इति सिप् । आर्धधातुकस्येड्वलादेः (पा. ७. २. ३५) इति सिपो विकरणस्य इडागमः । इतश्च लोपः परस्मैपदेषु (पा. ३. ४. ९७) इति इकारलोपः । प्रशंसिषं प्रकर्षेण स्तवानि स्तवाम वयम् । अमृतं अमरणधर्माणं अग्निम् । जातवेदसम् । जातवेदो व्याख्यात. । प्रिय देवाना यजमानाना वा । मित्रं न सुहृदमिव प्रियं अग्निम् ॥ (१)

पाहि नो अग्न एकया पाह्युत द्वितीयया ।
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥

भर्गस्यार्षम् । पाहि रक्ष । न अस्मान् । हे अग्ने । एकया । *परस्तात् गी इति गिरा निर्देशात् गिरा एकया ऋग्लक्षणया । तृतीया-* निर्देशात् स्तुत सन्निति वाक्यशेषः । पाहि । उत अपि च । रक्ष द्वितीयया गिरा यजुर्लक्षणया । अपि च रक्ष तिसृभिर्गीर्भिः ऋग्यजुःसामलक्षणाभिः । हे ऊर्जां पते । ऊर्ज. अन्नानि । तेषां पतिः स्वामी ऊर्जां पतिः । तस्य सम्बोधनं हे ऊर्जांपते अन्नानामधिपतिभूत । पाहि चतसृभिः ऋग्यजुः-सामनिगदलक्षणाभि । वसो । लुप्तमत्वर्थं चैतत् द्रष्टव्यम् । हे धनवन् ॥

भर्गः प्रगाथः । पाहि रक्ष । नः अस्मान् । हे अग्ने । एकया गिरा रक्षाणीत्युदीरितया । पाहि उत अपि च । द्वितीयया । पाहि गीर्भिः तिसृभिः हे ऊर्जां पते अन्नाना स्वामिन् । पाहि चतसृभिः गीर्भिः । हे वसो वासक स्वतेजसा विश्वम् । यद्वा अस्मदीयाभि. गीर्भिः स्तुतिभिः हेतुभिः पाहि ॥ (२)

बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा ।
भरद्वाजे समिधानो यविष्ठ्य रेवत्पावक दीदिहि ॥

तृणपाणेरार्षम् । बृहद्भि महद्भि । हे अग्ने अर्चिभि । किम् । उपरिष्टाद्वक्ष्यति । दीदिहि दीप्यस्व । हे अग्ने । किंचान्यत् । शुक्रेण देव शोचिषा प्रभासेनेत्यर्थ । भरद्वाजे समिधानः । ताच्छील्येऽयं शानच् । प्रत्यक्षकृतत्वाच्च मन्त्रस्य अव्यतिरिक्तप्रातिपदिकार्थप्रथमान्तम् । अतो यत्त-च्छब्दाध्याहृत्यैकवाक्यता नेयम् । यस्त्वं भरद्वाजे ऋषौ मयि यजति सम्यग्दीपनशीलः स त्वं हे यविष्ठ्य अतिशयेन युवतम । रेवत् धनवत् ।

पावक शोधयित । दीदिहि दीप्यस्व । हे अग्ने धनसंयुक्तं तद्दीदिहि । धनं ददद्दीप्यस्वेत्यर्थ ॥

शंयुः । बृहद्भिरर्चिभिः हे अग्ने देव । शुक्रेण शुभ्रेण । शोचिषा दीप्त्या च । भरद्वाजे मम भ्रातरि । समिधान' समिद्धः त्वम् । समिन्धेः लटः कानच् । हे यविष्ठ्य युवतम । रेवत् रयिमत् । धनयुक्तमिति क्रियाविशेषणम् । दीदिहि दीप्यस्व । दीदिहि इति वैदिको धातुः दीप्तिकर्मा ॥　　　(३)

त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः ।
यन्तारो ये मघवानो जनानां ऊर्वे दयन्त गोनाम् ॥

वसिष्ठस्यार्षम् । त्वे । युष्मद' परस्य षष्ठ्येकवचनस्य शेभावेन (पा. ७. १. ३९) युष्मदश्च त्वादेशेन इदं रूपम् । त्वे तव हे अग्ने स्वाहुत । जुहोतेर्दानार्थस्येदं रूपम् शोभनदान । प्रियासः प्रिया । सन्तु भवन्तु । सूरयः मेधाविनः स्तोतारः । कीदृशाः । उच्यते । यन्तारः स्तुतिभिर्हविर्भिश्च अवत्रोद्धारः । ये मघवानः हविर्लक्षणेन धनेन धनवन्तः । जनानामूर्वे दयन्त गोनाम् । यजमानमनुष्याणा स्वभूतानाम् । गोनां गवाम् । ऊर्वे दयन्त । उरुशब्दस्य बहुनाम्न. द्वितीयैकवचने छान्दसमादिर्दीर्घत्वम् । लुगमिपूर्वत्वं च छान्दसत्वादेव भवति । यणादेशे । ऊर्वे बह्वित्यर्थः । दयन्त विभजन्ति । गोनाम् । द्वादशशतसङ्ख्यापरिमाणादि गवां विभजत इत्यर्थः ॥

वसिष्ठः । त्वे इति षष्ठ्येकवचनस्य शे सुपा सुलुक् (पा. ७. १. ३९) इत्यादिना । त्वे तव । प्रियासः प्रियाः । सन्तु सूरयः स्तोतारः । हे स्वाहुत स्वभिहुत यजमानैः । यन्तारः । यमिर्दानकर्मा । प्रदातारः । ये च मघवानः

धनवन्त । धनवाचिना मवशब्दात् ईवनिपौ छन्दसि इति मत्वर्थीयो वनिप्। जनाना मध्ये यन्तार ये इति सबन्ध । ऊर्व समूहम्। दयन्त प्रयच्छन्ति। गोना गवाम्। ऊर्व ये त्वत्प्रीणनार्थ प्रयच्छन्ति ते च तव प्रिया सन्तु इति। अथवा जनाना इति चतुर्थ्यर्थे षष्ठी। जनेभ्य तत्र स्तोतृभ्य ये ददति ते च तव *प्रिया सन्तु ॥* (४)

अग्ने जरितर्विश्पतिस्तपानो देव रक्षसः ।
अप्रोषिवान् गृहपते महानसि दिवस्पायुर्दुरोणयुः ॥

भरद्वाजस्यार्षम्। हे अग्ने जरित स्तोत । विश्पति । विशो मनुष्या तेषा पति । तपन सन्तापयन्। देव दानादिगुणयुक्त । रक्षस राक्षसान्। अप्रोषिवान् अप्रोषित । सर्वदा सन्निहित इत्यर्थ । गृहपत गृहस्य स्वामिन । दिवस्पायु द्युलोकस्य पालयिता । दुरोणयु । दुरोण इति गृहनाम । तद् इच्छति स दुरोणयु । एष पदार्थ । वाक्यार्थस्तु अग्ने जरित देव गृहपत । चत्वार्येतान्यामन्त्रितानि । आमन्त्रणयोगाच्च प्रत्यक्षकृतो मन्त्र । विश्पति तपान अप्रोषिवान् दिवस्पायु दुरोणयु रित्येतानि अव्यतिरिक्तप्रातिपदिकार्थप्रथमान्तानि । अतोऽत्र यत्तच्छब्दा वध्याहृत्य *क्रियापदमेकवाक्यता याति । यश्च विश्पति तपान राक्षसान्।* महान् असि यश्च अप्रोषिवान् यश्च दिवस्पायु यश्च दुरोणयु त त्वा हे अग्ने जरित देव गृहपते । स्तौमीति वाक्यशेष ॥

भग । हे अग्ने जरित स्तोत यजमानार्थ देवानाम् । अथवा कर्मण्येवेद रूपम्। जरित जरणीय । स्तुत्येत्यर्थ । विश्पति विशा जनाना यजमानाना पति भर्ता स्वामी । तपान तपन्। रक्षस राक्षसान् । रक्ष शब्द पुल्लिङ्गोऽपि दृश्यते छन्दसि ।

प्रति स्म रक्षसो दह (ऋ. वे. १०. ८७. २३)

इति ।

यो वा रक्षाः शुचिरस्मीत्याह (ऋ. वे. ७. १०४. १६)

इति च । हे देव अप्रोषिवान् अप्रोषितः यजमानानां गृहेभ्यः । लिटः क्वसुः । गृहपते यजमानगृहाणां पालयितः । महांश्च त्वमसि । दिवः द्युलोकस्य । देवानामित्यर्थः । पायु रक्षकः हविषा प्रदानात् । दुरोणयुः गृहकामश्च असि ॥ (५)

अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥

प्रस्कण्वस्यार्षम् । हे अग्ने विवस्वन् विवासनकरं तमसाम् । उपसः स्वभूतम् । किं तत् । सामर्थ्याज्ज्योतिः । चित्रं विचित्रं पूज्यं वा । राधः । लुप्तोपममेतत् । उज्ज्वलत्वात्प्रीतिकरत्वसामान्याद्वा राध सदृशम् । हे अमर्त्य मरणवर्जित । आ इत्ययमुपसर्गः वहेत्याख्यातेन सम्बन्धयितव्यः । दाशुषे । दाश्वान् यजमानः । तस्यार्थाय । हे जातवेदः उत्पन्नधन उत्पन्नज्ञान वा । आवह त्वं अद्यास्मिन्नहनि । ज्योतिर्द्वारेण चेदं उपस एव आवहनमुच्यते । उपसमावह इत्यर्थः । न केवलमुपसमेव । किं तर्हि । अन्यानपि देवान् । कीदृशान् । उच्यते । उषर्बुधः । उषसि उदयकाले यज्ञागमनार्थं ये बुध्यन्ते ते उषर्बुधः । तांश्चेत्यर्थः ॥

प्रस्कण्वः । हे अग्ने । विवस्वत् । विवासयति तमांसि इति विवस्वान् । उषसः उषःसंबन्धि । चित्रं चायनीयं दर्शनीयम् । राधः तेजः राधयति प्रकाशयतीति । दृश्यते इति शेषः । तस्मादावह दाशुषे यजमानाय । हे जातवेदः । त्वं अद्य देवान् उषर्बुधः । उषसि बुध्यन्ते यज्ञगृहं गन्तुमिति उषर्बुधः । उषसि हि तेजो दृश्यते । अतः उषर्बुधो देवान् आवह ॥ (६)

त्व नश्चित्र ऊत्या वसो राधांसि चोदय ।
अस्य रायस्त्वमग्न रथीरसि विदा गाध तुचे तु न ॥

तृणपाणेरार्षम्। वसो इति सम्बोधनश्रुत चोदय विदा इति च मध्यम पुरुषश्रुते प्रत्यक्षकृतोऽय मन्त्र । न च चित्र इ्यतदामन्त्रणम्। अतो यत्त च्छब्दावध्याहृत्य एकवाक्यता नेया। यस्त्व चित्र विचित्र पूज्यो वा स न । कर्मप्रवचनीय प्रतिशब्दाऽध्याहर्तव्य । अस्मान्प्रति ऊत्या। सहयोगलक्षणैषा तृतीया। पालनेन सह। ह वसो प्रशस्त धनवन् । त्व राधासि धनानि । चोदय प्रेरय। पालय अस्मान् धनानि च देहीत्यर्थ । किं कारणम्। उच्यत। अस्य राय । राय धनम्। यदिद पृथिव्या धनमस्य सर्वस्य । हे अग्ने रथी । रथीशब्द सारथिवचन । स इह प्रेरकत्वसामान्यात् अग्नौ प्रयुक्त । प्रेरयितासि । दातासीत्यर्थ । किंच विदा वेत्थ जानीहि। ज्ञाने मात्र दान लक्ष्यते। दहीत्यर्थ । किम्। गाधम्। गाधशब्दोऽय अगाध मुदकमित्यवमादिषु प्रयोगेषु उदकमध्य या भूमि पादयोराश्रयत्व प्रतिपद्यते तस्या वाचक । इह तु स्थानसामान्यादाश्रयस्थाने प्रयुक्त । आश्रयस्थानम्। कस्मै। उच्यते। तुच। तुगित्यपत्यनाम। तस्मादिय सप्रदाने चतुर्थी। अपत्याय। तु इति पादपूरण । न अस्माकम्॥

शंयु । त्य न अस्मभ्यम्। राधासि धनानि। चोदय प्रेरय। चित्र दर्शनीय । त्व ऊत्या रक्षया सह। हे देव वसो वासक। अस्य योऽय दृश्यते त्रैलोक्यवर्ती तस्य सवस्य। राया धनस्य। रथी नेता। असि। त्व हे अग्ने। विदा इति पञ्चमलकारान्तम्। वेत्य लभय। गाध प्रतिष्ठाम्। तुचे तोकाय अपत्याय। तु क्षिप्रम्। न अस्मान्। तुचेऽपि पर्याप्ता प्रतिष्ठा अस्मान् लभय॥ (७)

त्वमित्सप्रथा अस्यग्ने त्रातर्ऋत कविः ।
त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥

भर्गस्यार्षम् । त्वम् । इदिति पादपूरणः । सप्रथा असि सर्वतः पृथुर्भवसि । हे अग्ने त्रातः सर्वस्य जगतः पालयितः । ऋतः सत्यः अविसंवादी । कविः मेधावी । त्वां विप्रासः विप्राः ब्राह्मणाः । हे समिधान सम्यग्दीप्यमान । हे दीदिव दानवन् । आविवासन्ति वेधसः मेधाविनः ऋत्विजः । असीति मध्यमपुरुषः । अग्ने त्रात इति सम्बोधनश्रुतः प्रत्यक्षकृतो मन्त्रः । न च सप्रथा इत्येवमादीनि आमन्त्रितानि । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेयानि । यस्त्वं सप्रथा असि यश्च ऋतः यश्च कविः तं त्वा हे अग्ने त्रातः समिधान दीदिव विप्रा आविवासन्ति वेधसः ॥

भर्गः । परश्चापि । त्वं सप्रथाः सर्वतः पृथुः । असि । इत् इति पादपूरणः । हे अग्ने । त्रातः रक्षितः । ऋतः सत्यः । कविः प्राज्ञः । त्वमसि । त्वां विप्रासः विप्राः प्राज्ञाः । वेधसः विधातारः कर्मणाम् । आविवासन्ति परिचरन्ति हे समिधान समिद्ध यजमानैः । हे दीदिव दादिवन् दीप्त । मतुवसोरु सम्बुद्धौ छन्दसि (पा ८ ३ १) इति नकारस्य रुत्वम् ॥ (८)

आ नो अग्ने वयोवृधं रयिं पावक शंस्यम् ।
रास्वा च न उपमाते पुरुस्पृहं सुनीती सुयशस्तरम् ॥

भर्गस्यार्षम् । आ इत्ययमुपसर्गः रास्वेत्याख्यातेन सम्बन्धयितव्यः । नः अस्मभ्यम् । हे अग्ने वयोवृधम् । वयः अन्नम् । तद्वर्धयति तद्वयोवृधम् । अन्नस्य वर्धयितृ इत्यर्थः । किं तत् । उच्यते । रयिं धनम् । हे पावक शोधयितः । शंस्यं शंसनीयम् । श्लाघ्यमित्यर्थः । आराम्व आभिमुख्येन

देहीत्यर्थ । चेति पादपूरण । न अस्माकम् । उपमाते । उपमाता निर्माता । तस्य सम्बोधन हे उपमाते । स्रष्ट इत्यर्थ । एतदुक्त भवति । त्वमेवास्माक स्रष्टा त्वमवास्मभ्य शरीरस्थित्यर्थ धन देहीत्यर्थ । कीदृश पुनर्धन ददामि । उच्यते । पुरस्पृह बहुना स्पृहणीयम् । सुनीती । नीतिशब्दो मार्गवचन । तस्मादिय तृतीया । नीत्या मार्गेण । प्रतिग्रहा दिनेत्यर्थ सुयशस्तरम् । यश कीर्ति । शोभन यश यस्य तत् सुयश । अतिशयेन सुयश । सुयशस्तरम् । अतिशयेन कीर्तिमदित्यर्थ ॥

आरास्व प्रयच्छ । हे अग्ने । न वयोवृध अन्नस्य वर्धनम् । न रयि धनम् । शस्य प्रशस्यम् । हे पावक । उपमाते उपमानभूत विश्वस्य । पुरुस्पृह बहुभि स्पृहणीयम् । सुनीती सुनीत्या सुमार्गेण । सुयशस्तर अतिशयेन यशस्वरम् । यशसा सयुक्तमित्यर्थ ॥ (९)

यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये ॥

सौभरेगार्षम् । य विश्वा विश्वानि सर्वाणि । दयते ददाति । वसु । एकवचनमिद बहुवचनस्य स्थाने द्रष्टव्यम् । वसूनि धनानि । होता आह्वाता देवानाम् । मन्द्र स्तुत्य । जनाना मनुष्याणा ऋत्विग्यजमाना नाम् । मधो न । नशब्द उपरिष्टादुपचारत्वादुपमार्थीय । मधुन इव । पात्रा पात्राणि । प्रथमानि उत्कृष्टानि । अस्मै । इदमप्येतदो रूपम् । व्यत्ययेन च इदशब्दस्तच्छब्दस्य स्थाने द्रष्टव्य । तस्मै । प्रेत्ययमुपसर्ग यन्त्वित्या ख्यातेन सम्बन्धयितव्य । स्तोम स्तोत्राणि । प्रयन्तु प्रकर्षेण गच्छन्तु । वाक्याना गमन न सम्भवति । अतो गमनेनात्र करण प्रतिपाद्यते । क्रियन्ते । एतदुक्त भवति । यथा मधुन स्वादुयुक्तसोमपात्राणि क्रियन्ते

तद्वत् स्तोमा अपि क्रियन्त इत्यर्थ. । कस्मै । उच्यते । अग्नये अग्नेरर्थाय इत्यर्थः ॥

सौभरिः । यः होता । अग्निरित्यर्थः । अग्निर्हि देवानां आह्वाता । विश्वा विश्वानि । दयते ददाति । वसु वसूनि । शेश्छन्दसि (पा. ६. १. ७०) इति शेर्लुक् । मन्द्रः मदनीयः । मदि स्तुतिकर्मा । जनाना यजमानानां मन्द्रः । अस्मै अग्नये । इमं उद्दिश्य । स्तोमाः अस्मदीयाः । प्रयन्तु प्रगच्छन्तु स्तोमाः स्तोत्राणि । मधोर्न मादयितुः सोमस्येव । पात्रा पात्राणि । प्रथमानि मुख्यानि ॥ (१०)

प्रथमस्य चतुर्थी दशत्या ।

---

एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥

वसिष्ठस्यार्षम् । एना अनया । व । बहुवचनमिदं एकवचनस्य स्थाने द्रष्टव्यम् । त्वाम् । अग्निं नमसा । नमः स्तुतिः । तया । अथवा नमः अन्नं हविर्लक्षणम् । तेन हेतुना । तस्य भक्षणार्थमित्यर्थः । ऊर्जो नपातम् । ऊर्क् अन्नम् । तस्य नपातं पौत्रम् । कथं पुनरसावन्नस्य पौत्रः । अन्नाद्धि बलं जायते । बलान्मथ्यमान एष जायते । एवमग्नेरन्नस्य पौत्रत्वम् । आहुवे आह्वयामि । प्रियं चेतिष्ठं अतिशयेन चेतितारम् । ज्ञातारमित्यर्थः । अरतिं अलमतिम् । अथवा यजमानं देवांश्च प्रतिगन्तारम् । स्वध्वरं शोभनानां यज्ञानां कर्तारम् । विश्वस्य दूतं सर्वस्य यजमानस्य सन्देशहरम् । अमृतं मरणवर्जितम् ॥

वसिष्ठ । एना । एनेति तृतीयैकवचनस्य पूर्वसवर्ण । अनन्वादेशे छान्दसत्वात् इदशब्दस्य एनादेश । एनमिति वा अग्नेर्विशेषणम् । द्वितीयैकवचनस्य आकार । एन पूर्वेषु सूक्तेषु प्रकृतम् । अग्निम् । व युष्मदथम् । नमसा स्तोत्रेण आहुवे आह्वयामि हे यजमाना । ऊर्ज अन्नस्य बलस्य वा । नपात पुत्रम् । स्वीयरश्मि काष्ठे वर्धत इति वा बलेन मध्यमानो जायत इति वा ।

स जायसे मथ्यमान सहो महत्त्वामाहु सहसस्पुत्रमङ्गिर ।
(ऋ वे ५ ११ ६)

इति हि निगम । प्राणाद्धि बलान्मथ्यमानोऽग्निर्जायते (ऐ ब्रा ८ २८) इति चैतरेयकम् । प्रियमस्माकम् । चेतिष्ठ ज्ञातृतमम् । अरतिम् । अतेररतिश्च स्वामी । स्वामिनम् । स्वध्वर सुयज्ञम् । विश्वस्य यजमानस्य दूत इति वा विश्वस्य जगत अरतिमिति वा सम्बन्ध । अमृत अमरणधर्माणम् ॥ (१)

**शेषे वनेषु मातृषु स त्वा मर्तास इन्धते ।**
**अतन्द्रो हव्य वहसि हविष्कृत आदिद्देवेषु राजसि ॥**

भर्गस्यार्षम् । शेष इत्यपत्यनाम । तस्मादिय निमित्तसप्तमी । चर्मणि द्वीपिन हन्ति (महाभाष्य २ ३ ३६) इति यथा । अपत्य निमित्तभूते । अपत्यार्थमित्यर्थ । वनेषु । वन इत्युदकनाम । तस्मादिय निमित्तसप्तमी । उदकेषु निमित्तभूतेषु । उदकार्थं चत्यर्थ । कीदृशषु उदकेषु निमित्तभूतेषु । उच्यते । मातृषु सर्वस्य जगत निर्माणभूतेषु । समित्ययमुपसर्ग इन्धत इत्याख्यातेन सम्बन्धयितव्य । त्वा त्वा । मर्तास यजमानमनुष्या । समिन्धते सम्यक् दीपयन्तीत्यर्थ । कीदृश त्वा समिन्धते । उच्यते । यस्त्व अतन्द्र तन्द्रा आलस्यम् । अविद्यमाना तन्द्रा यस्य सोऽतन्द्र । अनलस इत्यर्थ । हव्य हवींषि । वहसि देवान्प्रति नयसीत्यर्थ । न केवल हविरेव नयसि । किं तर्हि । हविष्कृत । हविषा सह या क्रियन्ते

ता हविष्कृत स्तुतय । ताश्च नयसीत्यर्थ । आत् इत् । द्वावपि पादपूरणौ । यश्च त्वं देवेषु देवाना मध्ये राजसि दीप्यमे ॥

भर्गः । शेषे गूढ तिष्ठसि । वनेषु अरण्येषु । काष्ठेषु इत्यर्थः । मातृषु अरणीषु । वनेष्विति सामानाधिकरण्येन अन्वय । त्वा त्वा मथितजातम् । समिन्धते मर्तासः मर्त्याः यजमाना । अतन्द्र अनलसः । हव्य वहसि । हविष्कृतः हविषा कर्तुः यजमानस्य । आत् इत् तदानीमेव । देवेषु राजसि ॥ (२)

अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः ।
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिर· ॥

सौभरेरार्षम् । अदर्शि एकवाक्यताप्रसिध्यर्थ यच्छब्दोऽध्याहर्तव्य । य अग्नि अदर्शि दृश्यते अवगम्यते । ज्ञायत इत्यर्थ· । गातुवित्तमः । कैगैरैशब्दे इत्येतस्य रूपम् । गातुः शब्दयिता स्तुतीना उच्चारयिता । तं यो वेत्ति स गातुवित् । अतिशयेन गातुवित् गातुवित्तम· । स्तुतीनामुच्चारयितुरतिशयेन वेत्तीत्यर्थ । यस्मिंश्च अग्नौ । व्रतानि कर्माणि हविर्नयनादीनि । आदधु आहितवन्त । तदायत्तानि कृतवन्त इत्यर्थः । के । सामर्थ्याद्देवा । उप उ सु । त्रयोऽपि पादपूरणा । यच्छब्दश्रुतेः तच्छब्दोऽध्याहर्तव्य । तं जातं जातमात्रम् । आर्यस्य यजमानस्य । वर्धनं वर्धयितारम् । अग्निं नक्षन्तु । लोडयं लडर्थे द्रष्टव्य· । नक्षतिर्व्याप्तिकर्मा । नक्षन्ति । तं व्याप्नुवन्ति इत्यर्थ । नो गिर वाचः अस्माकं स्वभूताः स्तुतय· ॥

सौभरि· । अदर्शि दृश्यते अनावृत एवाग्नि· । गातुवित्तम. अतिशयेन मार्गलम्भकः । यस्मिन् अग्नौ । व्रतानि कर्माणि । आदधुः आदधति यज्वानः ।

उपां । उप उ इति निपातद्वयसमुदाय । उपनक्षन्तु । नक्षति व्याप्तिकर्मा । उपव्याप्नुवन्तु । सु सुष्ठु जात मथितम् । आर्यस्य यज्ञशीलस्य । वर्धन वर्धयितारम् । अग्नि न अस्मदीया । गिर स्तुतय ॥ (३)

अग्निरुक्थे पुरोहित ग्रावाणो बर्हिरध्वरे ।
ऋचा यामि मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम् ॥

मनोरार्षम् । अग्नि प्रथमैकवचनमिद द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । उक्थे यज्ञ । पुरोहित पूर्वस्या दिशि आहवनीयात्मना निहित स्थापितमित्यर्थ । ग्रावाण । इदमपि प्रथमाबहुवचन द्वितीयाबहुवचनस्य स्थाने द्रष्टव्यम् । अभिषवग्रावाणश्च । बर्हिश्च । क्व यद्बर्हि । उच्यते । अध्वरे यज्ञ । ऋचा । अर्च्यते अनया इति ऋक् स्तुति । तया ऋचा । स्तुत्येत्यर्थ । यामि । नेदं याचते रूपम् । किं तर्हि । ईमहे यामीत्यर्चेति कर्मसु पाठात् याते रूपम् । यामि अत्र यज्ञे कर्म याचे । प्रार्थयामीत्यर्थ । न केवलमग्न्यादीनेव प्रार्थयामि । किं तर्हि । मरुतश्च । ब्रह्मणस्पते । देवा । इदमपि प्रथमाबहुवचन द्वितीयाबहुवचनस्य स्थाने द्रष्टव्यम् । देवाश्च अन्यानपि । किं पुन प्रार्थयामि । उच्यते । अव पालन तर्पण वा । वरेण्य वरणीयम् ॥

मनुर्वैवस्वत । इय वैश्वदेवसूक्तस्था । अग्नि उक्थे शस्त्रे । पुरोहित पुरस्कृत । आग्याज्य हि प्रथम शस्त्र आग्नेयम् । ग्रावाण च सोमाभिषवप्रयुक्ता । बर्हिश्च स्तीर्णम् । अध्वरे यज्ञे अस्मिन् । इत्थ यज्ञपरिकरक्लृप्तौ सत्या ऋचा स्तुत्या । ऋच स्तुतौ इत्यस्मात् धातो' भावे क्विप् । ऋक् । तया यामि याचामि । मध्यमाक्षरलोप । युष्मान् इति शेष । मरुतो ब्रह्मणस्पते देवा इति त्राणि सबोधनानि । हे मरुतो ब्रह्मणस्पते बृहस्पते । बृहस्पतिरेव ब्रह्मणस्पति । ब्राह्मणस्पत्य प्रगाथ शसति (ऐ ब्रा. ३. १७) । बृहस्पतिपुरोहिता

वै देवा अयजन् स्वर्गं लोकं (ऐ. ब्रा. ३. १७) इत्यादि ब्राह्मणान्तरेषु तथा. पर्यायप्रसिद्धेः । देवा इति च आद्युदात्तत्वात् सम्बोधनम् । आमन्त्रितस्य च (पा. ६. १. १९८) इति हि पादादौ आमन्त्रितस्य आद्युदात्तत्व स्मर्यते । अवः अन्नम् । अवतेस्तृप्तिकर्मणः अव. । वरेण्य श्रेष्ठम् ॥　　　　　　　　　　(४)

अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम् ।
अग्निं राये पुरुमीळ्ह श्रुतन्नरोऽग्निः सुदीतये छर्दिः ॥

पुरमीढस्यार्षम् । अन्तरात्मन प्रैष । हे मदीय अन्तरात्मन् अग्निं ईडिष्व स्तुहीत्यर्थ । किमर्थम् । उच्यते । अवसे पालनाय तर्पणाय वेत्यर्थः । केन पुनः स्तौमि । उच्यते । गाथाभि वृत्तविशेषै स्तुतिलक्षणाभिर्वाग्भि । कीदृशं पुनस्तं स्तौमि । उच्यते । शीरशोचिषम् । शीरं व्यापि । शोचिर्दीप्तिः । व्यापिनी दीप्तिर्यस्यासौ शीरशोचि । तं शीरशोचिषम् । व्यापिदीप्तिमित्यर्थ । अथवा जठरात्मना आश्रयणीया दीप्तिर्यस्य । अग्निं राये । रयिरिति धननाम । धनार्थम् । ईडिष्वेत्येतदनुषज्यते । हे पुरमीढ मदीय अन्तरात्मन् । कीदृशमग्निम् । उच्यते । श्रुतं विख्यातम् । नरः । प्रथमैकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । नरं नराकारम् । अग्नि । प्रथमैकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । अग्निमेव ईडिष्व । सुदीतये शोभनस्य दानस्यार्थाय । छर्दिः । प्रथमैकवचनमिदं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम् । छर्दिषे गृहस्य अर्थायेत्यर्थ ॥

सुदीति. पुरुमीळ्हो वा द्वौ वा । अग्निं ईडिष्व । ईडतिर्याञ्चाकर्मा भवति । ईडिष्व स्तुहि । याचस्व इति वा । अवसे रक्षणाय । गाथाभिः गीतिभिः । शीरशोचिष श्रयते. शीरम् । शोचिः दीप्तिः । प्रवृद्धशोचिषम् । अग्निं राये धनार्थं ईडिष्व । हे पुरुमीळ्ह इत्यत्र आत्मानमेव आमन्त्रयते यदि पुरुमीळ्हः ऋषिः । यदि सुदीति ऋषिः तदा सखाय पुरुमीळ्हं अग्निं ईडिष्व इति शास्ति ।

श्रुत विश्रुत अग्निम्। नरः इति उत्तरपादेन संबध्यते। नरः नेता अग्नि। सुदीतये महाम्। छर्दिः गृहम्। प्रयच्छतु इति शेषः। पुरुमीढश्चेदपि: मम सख्ये सुदीतये छर्दिः प्रयच्छतु इति.। उभयोर्ऋषित्वे अन्यतरस्य कीर्तन इतरस्य उपलक्षणार्थम्॥ (९)

श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः।
आ सीदतु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे॥

प्रस्कण्वस्यार्षम्। श्रुधि शृणु। हे श्रुत्कर्ण। शृणुतः कर्णौ यस्य स श्रुत्कर्णः। तस्य सम्बोधन हे श्रुत्कर्ण। वह्निभि वोढृभि। देवैरन्यैरग्निभि। हे अग्ने सयावभि। त्वया सह ये यान्ति ते सयावान। तै सयावभि। सहगामिभिरित्यर्थ। किं पुन शृणोमि त्वया हूत सन्। आसीदतु बर्हिषि मित्र अर्यमा च। प्रातर्यावभि प्रातर्यागे ये यान्ति ते प्रातर्यावाण। तै. प्रातर्यावभि अन्यैरपि देवै सह। अध्वरे अस्मदीये यज्ञे॥

प्रस्कण्वः। श्रुधि शृणु स्तोत्र मदीयम्। हे श्रुत्कर्ण। शृणोतीति श्रुत। स्तोत्रश्रवणप्रिय अवहितकर्ण। अग्ने वह्निभि। वहन्तीति वह्नयः। ताभिः वहनसमर्थाभिः वोढृभि जगतः। देवैः सयावभिः। सह यान्तीति सयावानः। तत्र नित्यं. सहचारिभि देवै. सार्धं आसीदतु अत्रोपविशतु। बर्हिषि मित्रः अर्यमा च। प्रत्येक आख्यातमन्वयात् आसीदतीत्येकवचनम्। प्रातर्यावभिः सार्धं अध्वरे अस्मिन्। एते वाव देवाः प्रातर्यावाणो यदरपा अश्विनौ (ऐ. ब्रा. २. १५) इति चैतरेयकम्॥ (६)

प्र दैवोदासो अग्निर्देव इंद्रो न मज्मना।
अनु मातरं पृथिवीं विवावृते तस्थौ नाकस्य शर्मणि॥

सोमरेरार्षम्। प्रेत्ययमुपसर्गः तस्थाविध्याख्यानेन सम्बन्धयितव्य। दैवोदास। दिवोदास ऋषिः। तेन समिन्धित दैवोदास। अग्निः

देवः । इन्द्रो न । नशब्द उपरिष्टादुपचारत्वादुपमार्थीय । अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोग इति पादपूरण । इन्द्र इव । मज्मना स्वेन बलेन । अन्विति पादपूरण । मातरं सर्वस्य आश्रयत्वप्रतिपत्त्या मातृभूताम् । पृथिवीम् । विवावृते परिवर्तयति । यस्य संपचिद्रोगेण अन्यरूपां करोति । वैद्युतो ह्यग्नि स्वेन बलेन मेघान् घ्नन् पृथिवीं वर्तयति । प्रतस्थौ च प्रतिष्ठते । स्वेनैव बलेन गच्छतीत्यर्थ । क पुनर्गच्छति । उच्यते । नाकस्य शर्मणि द्युलोकस्य सम्बन्धिनि गृहे । द्युलोकं यद्गृहं तस्मिन् गच्छतीत्यर्थ ॥

सौभरि । प्रेत्युपसर्गदर्शनादाख्याताध्याहारः । प्रगच्छतु देवोऽग्निः । दैवोदासः दिवोदासेन अभिहितः पूर्वं अग्निः । अथवा प्रभवतीति समाप्तिः । देवोऽग्निः । इन्द्रो न इन्द्र इव । प्रभवति मज्मना बलेन । अय च अनु मातर पृथिवीमनु । पृथिव्यामित्यर्थः । विवावृते विशेषेण वर्तते । तस्थौ तिष्ठति । नाकस्य अन्तरिक्षस्य । शर्मणि स्थाने वैद्युतरूपः । छन्दसि लुङ्लङ्लिटः (पा. ३. ४. ६) इति लडर्थे लिट् ॥ (७)

अध ज्मो अधवा दिवो बृहतो रोचनादधि ।
अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥

मेधातिथेरार्षम् । अध ज्म । ज्मेति पृथिवीनाम । तस्मादियं पञ्चमी । पञ्चमीनिर्देशाच्च आगत्येति वाक्यशेष । अथवा पृथिवीतः आगत्य । अथवा दिव द्युलोकात् । कीदृशात् द्युलोकात् । उच्यते । बृहतः महत । रोचनात् दीप्तात् आगत्य । अधीति पादपूरणः । अया अनया । वर्धस्व तन्वा शरीरेण । गिरा स्तुतिलक्षणया वाचा । मम स्वभूतया । स्तूयमान इति वाक्यशेषः । वर्धस्व । मम जाता जातानि । ममापत्यानीत्यर्थः । हे सुक्रतो सुप्रज्ञ सुकर्म वा । पृण प्रीणयेत्यर्थः ॥

मेधातिथिः मेध्यातिथिश्च उभावृषी । इयमैन्द्री इत्युक्तमेव । अध अथ । ज्मेति पृथिवीनाम । ततः पञ्चम्येकवचने पूर्वसवर्णो ह्रस्वः । पृथिव्या इत्यर्थः । अथवा दिवः अन्तरिक्षात् । बृहतः रोचनात् लोकात् स्वर्गात् वा । आगच्छेति शेषः । अधीति पादपूरणः । आगत्य च अया अनया । तन्वा ततया । मम गिरा स्तुत्या । वर्धस्व । आपृण आपूरय कामे' । जाता जातानि । जातान् जनान् मदीयान । हे सुक्रतो सुकर्मन् इन्द्र ॥ (८)

**कायमानो वना त्वं यन्मातृरजगन्नपः ।**
**न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभुवः ॥**

विश्वामित्रस्यार्षम् । कायमान । चायृ पूजानिशामनयोरित्यस्य चकारस्य ककारापत्त्या रूपम् । वना । वनशब्देनात्र वनावयवकाष्ठान्युच्यन्ते । तानि । त्वं । यत अजगत् आगच्छसि । यच्च मातृ सर्वस्य जगत निर्माणभूता अप गच्छसि तेनैवमुच्यते वना त्वं यच्च मातृ अजगन्नप । न तत्ते अग्ने । नेत्ययं प्रमृषे इत्यनेन सम्बन्धयितव्य. । ते तव । हे अग्ने । न प्रमृषे न प्रमृष्यते । निवर्तनं गमनम् । तत्र च आत्यन्तिक गमनं मरणलक्षणमिति । कस्मात् । उच्यते । यत् यस्मात् दूरे सन् । यो हि दूरे भवति स न दृश्यते । अत दूरभवनेनात्रादर्शनं लक्ष्यते । यस्मात् अदृश्य सन् । इह अभुव भवसि । दृश्यसे इत्यर्थ ॥

विश्वामित्रः । इय वद्युतस्याग्नेः स्तुतिः । कायमानः । कै शब्दे । शब्दायमानः त्वम् । वना वनानि । यत् यदा । मातृः विश्वस्य अपः अजगन् । अजगन्निति गमेः लुङि रूपम् । द्विर्वचनं छान्दसम् । तस्मिन् च्लेः लोपः । हलि आलोप । मो नो धातोः (पा ८. २. ६४) इति मकारस्य नकारः । लङर्थे लुङ् । गच्छसि । तदा हे अग्ने ते निवर्तनम् । न प्रमृषे न प्रमर्षणीयम् प्रमर्षणं प्रहसनम् । कृत्यार्थे तवैकेन्केन्यत्वनः (पा. ३. ४. १४) इति

केनुप्रत्ययः। निवर्तन स्फुरणम्। यत् यस्मात्। त्व दूरे अन्तरिक्षे सन्। इह अन्तिके। आ मुवः इति लेडन्तम्। आ समन्तात् भवेः। तस्मात् ते निवर्तनं न प्रमर्षणीय भवति ॥ (९)

नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते।
दीदेथ कण्व ऋतजात उक्षितो यन्नमस्यन्ति कृष्टयः ॥

प्रस्कण्वस्यार्षम्। मनु. प्रजापति। त्वा देवं सन्तम्। निदधे नीचैर्भूमौ धारितवान्। जनाय यजमानाय। ज्योति तेजोरूपं दृष्टादृष्टकार्यार्थम्। स तथाभूतः कण्वेन मनुना च दीदेथ। ऋतजातः यज्ञार्थ जात। उक्षितो महानुपचित.। यं कृष्टयो मनुष्याः। नमस्यन्ति नमस्कुर्वन्ति ॥

कण्वः। निदधे आहितवान्। त्वा हे अग्ने। मनुः वैवस्वतः। ज्योतिः ज्योतीरूपं सन्तम्। जनाय मनुष्याय। शश्वते विभवे। अहरहर्वा। सर्वेषां मनुष्याणां अर्थाय स्वगृहपरिपालनार्थम्। स त्वम्। दीदेथ इति लोडर्थे लिट्। दीप्यस्व। कण्वे मयि। ऋतजातः ऋते यज्ञे यो जातः स ऋतजातः। यद्वा ऋताय यज्ञार्थं जात इति। उक्षितः सिक्तः हविर्भि.। यं त्वा नमस्यन्ति कृष्टयः मनुष्याः ॥ (१०)

प्रथमे पञ्चमी दशत्या।

---

देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम्।
उद्वा सिञ्चध्वं उप वा पृणध्वं आदिद्वो देव ओहत ॥

वसिष्ठस्यार्षम् । हे ऋत्विजः देवो द्रविणोदाः अग्निः युष्माकं सम्बन्धिनीम् । आज्यपूर्णां स्रुचम् । विवष्टु कामयते । तां च पूर्णां कृत्वा उत्सिञ्चध्वम् । पश्चादुपपृणध्वं अग्नौ विक्षिपत । वाशब्दः समुच्चये । अथ स एवाग्निः युष्मान् ओहते वर्धयति ॥

वसिष्ठः । देवः वः द्रविणोदाः धनाना दाता अग्निः होता । युष्मदीया पूर्णां आसिच आसिक्ता हविषा जुहूम् । विवष्टु कामयताम् । द्वित्वसन्ध्यक्षरौ छान्दसौ । उत्सिञ्चध्वं च सोमेन पातम् । समुच्चयार्थे वाशब्दः । उपपृणध्वं उपप्रयच्छत यजत । सोमम् । ध्रुवग्रहणे पूरयत च होतृचमसं प्रयच्छत च सोमं अग्नये । आत् इत् अनन्तरमेव । वः युष्मान् । देवः अग्निः । ओहते वहतु प्रापयतु कामान् ॥ (१)

**प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।**
**अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥**

कण्वस्यार्षम् । प्रैतु ब्रह्मणस्पतिः । ब्रह्म अन्नम् । तस्य पतिः स्वामी । प्रैतु देवी सूनृता वाक् । अच्छ आप्तुम् । वीरम् । वीराः पुत्राः पौत्राश्च । तान् यः करोति उत्पादयति स वीरयति । वीराणां फलभूताना कर्तारमित्यर्थः । नर्यं नृभ्यो हितम् । पङ्क्तिराधसम् । धाना करम्भः परीवापः पुरोडाशः पयः इत्येषा हविःपङ्क्तिः । द्विनाराशंसं प्रातःसवनं द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयसवनं एषा नाराशंसपङ्क्तिः । पशुरुपवसथ्यः त्रीणि सवनानि पशुरनूबन्ध्य इत्येषा सवनपङ्क्तिः । एताभिः पङ्क्तिभिः यः साध्यते एता वा साधयति स पङ्क्तिराधाः । तं पङ्क्तिराधसम् । देवा अन्येऽपि । यज्ञं नयन्तु आत्मानं गमयन्त्वित्यर्थः । नः अस्माकं स्वभूतम् । यज्ञं प्राप्तुं सम्भावयितुमित्यर्थः ॥

कण्वः द्वयोः । प्रैतु प्रगच्छतु अग्नीषोमाभ्यां प्रणीयमानाभ्यां पुरस्तात् गच्छतु । ब्रह्मणस्पतिः । ब्रह्मणा मन्त्रेण श्रेष्ठः ब्रह्मणस्पतिः । ब्रह्मैव ब्रह्मणस्पतिः । ब्रह्म वै बृहस्पतिः ब्रह्मैवात्मा एतत् पुरोगवमकर्णं वै ब्रह्मण्वद्रिष्यति (ऐ: ब्रा. १. १३) इति चैतरेयकम् । प्रैतु देवी सूनृता वाक् । वीरम् । वीरयति पापान् इति वीरः । तम् । नर्यं नरेभ्यः हितम् । पङ्क्तिराधसं पङ्क्तिभिः हविष्पङ्क्त्यादिभिः आराधनीयं समर्थनीयं यज्ञम् । अच्छ अभि । नयन्तु नः अस्मान् । देवाः हे ब्रह्मणस्पते तव अनुग्रहात् ॥ (२)

ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥

कण्वस्यार्षम् । ऊर्ध्व इत्येतत्तिष्ठेत्यनेन सम्बध्यते । ऊर्ध्वः प्रस्करोति यः स ऊर्ध्व । तिष्ठ व्यापयस्वेत्यर्थः । ऊ सु इति द्वावपि पादपूरणौ । नः ऊतये अस्माकं पालनार्थमित्यर्थः । कथं पुनर्व्यापयस्व । उच्यते । देवो न । नशब्द उपरिष्टादुपचारत्वादुपमार्थीयः । देव इव । सविता । ऊर्ध्व । तिष्ठेत्येतदनुषज्यते । ऊर्ध्वस्तिष्ठ व्यापय । वाजस्य अन्नस्य । सनिता सनितिर्लाभः । तस्मादयं तादर्थ्येचतुर्थ्या आआदेशः । सनितये लाभायेत्यर्थः । कस्मात्पुनर्व्याप्यते । उच्यते । यत् अस्मान् । अञ्जिभिः त्वद्गुणप्रकाशकैश्छन्दोभिः । वाघद्भिः ऋत्विग्भिः त्वा विह्वयामहे । ह्वयतिरत्र अन्तर्णीतण्यर्थो द्रष्टव्यः । आह्वयाम इत्यर्थः ॥

इयं यूपस्य उच्छ्रयणे अनूच्यते । ऊर्ध्वः तिष्ठ । उ सु इतीमौ पादपूरणौ । उकारस्य दीर्घः सकारस्य च षकारः साहितः । नः अस्माकम् । ऊतये रक्षायै । देवो न देव इव । सविता ऊर्ध्वः तिष्ठ । त्वं वाजस्य धनस्य । सनिता दाता । भवेति शेषः । ऊर्ध्वो वाजस्य सनिता इति वाजसनिमेवैनं तद्धनसा सनोति (ऐ. ब्रा. २. २) इति हि ऐतरेयकम् । धनमिति वाज इति व्याचष्टे । वाजसनिमित्यस्य व्याख्यानम् । धनसा इति धनं सनोति इति धनसाः । यत्

यस्मात् । अयं अज्ञिभि छन्दोभि । व्यज्यन्ते सिच्यन्ते वधन्ते देवता अमीभिरिति अज्ञय । वाघद्भि आवहद्भि । देवान् विह्वयामहे विशेषेण वर्धयाम देवान् । यस्मादेव तस्मात् वाजस्य सनिता भवेति सबन्ध । यदज्ञिभि वाघद्भि विह्वयामह इति छन्दांसि वा अज्ञयो वाघत तैरेतत् देवान् यजमाना विह्वयन्ते मम यज्ञ आगच्छत मम यज्ञमिति । (ऐ ब्रा २ २) इति हि ऐतेरेयकम् ॥ (३)

प्र यो राये निनीषति मर्तो यस्ते वसो दाशत् ।
स वीर धत्त अग्न उक्थशसिन त्मना सहस्रपोषिणम् ॥

सोभरेरार्षम् । प्रेत्ययमुपसर्ग । निनीषतीत्याख्यातेन सम्बन्धयितव्य । य यजमान । राये हविर्लक्षणस्य धनस्यार्थाय । तदुपमोक्तुमित्यर्थ । प्रनिनीषति प्रकर्षेण पूर्वस्या दिशि आहवनीयात्मना नेतुमिच्छति । मर्ते यजमानमनुष्य । यश्च नीत स । ते तव । हे वसो प्रशस्तधनवन् । त्वा दाशत् ददाति । स यजमान । वीर पुत्रम् । धत्ते धारयति लभते । तस्य पुत्र ददासीत्यर्थ । हे अग्ने । कीदृश पुत्र ददासि । उच्यते । उक्थशसिनम् । उक्थानि स्तोत्राणि । तेषा शसितारम् । त्मना आत्मना । सहस्रपोषिण बहूना पोषितारम् ॥

प्रणिनीषति प्रणेतुमिच्छति स्तोत्राणि । य मर्त । मर्त्य राये धनार्थ आत्मन । यश्च ते तुभ्यम् । दाशत् दद्यात् हवींषि । हे वसो प्रशस्य । स मर्त वीर पुत्रम । धत्ते धारयति । हे अग्ने उक्थशसिन शस्त्राणा शसितारम । वेदविद इत्यथ । त्मना आत्मना । आद्यक्षरलोप । सहस्रपोषिण सहस्रस्य पोषिण बहुपोषमिति वा बहुप्रद इति वा ॥ (४)

प्र वो यह्व पुरूणा विशा देवयतीनाम् ।
अग्निं सूक्तेभिर्वचोभिर्वृणीमहे य समिदन्य इन्धते ॥

कण्वस्यार्षम् । प्रेत्ययमुपसर्गं वृणीमहे इत्याख्यातेन सम्बन्धयितव्य । व । बहुवचनमिद एकवचनस्य स्थाने द्रष्टव्यम् । त्वाम् । यह्व महान्तम् । पुरूणा बह्वीनाम् । विशा मनुष्यजातीनाम् । देवयतीना देवान् यष्टुमतीना मध्ये । वय अग्नि सूक्तेभि वचोभि शोभनाभि स्तुतिलक्षणाभिर्गीभि । प्रवृणीमहे याचामहे । किं पुनर्याचामहे । सामर्थ्याद्धनम् । कीदृश पुनरग्नि याचामहे । य सम् । समित्यय इन्धत इत्याख्यानेन सम्बन्धयितव्य । इदिति पादपूरण । ये अन्यऽपि यजमाना समिन्धते सन्दीपयन्ति ॥

प्रवृणीमहे सभजामहे वयम । अग्निं यह्व महान्तम् । सूक्तेभिः सूक्तरूपै. वचोभि । सूक्तस्य प्रशमाभि । य व. युष्मदर्थम् । पुरूणा बहूनाम् । विशा जनानाम् । देवयतीना देवान् नियच्छन्तीना मध्ये युष्मभ्य एव अग्निं वृणीमहे हे यजमाना । विट्शब्दः स्त्रीलिङ्ग । य अग्निं अन्ये अपि यजमाना समिन्धते । इत् इति पादपूरण ॥　　(९)

अयमग्निः सुवीर्यस्येशे हि सौभगस्य ।
राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥

श्रुतकीलस्यार्षम् । अयमग्नि सुवीर्यस्य शोभनवीर्यस्य । ईश ईष्टे । हीति पादपूरण । सौभगस्य सौभाग्यस्य चेत्यर्थ । राय धनस्य । ईशे स्वपत्यस्य शोभनस्य चापत्यस्य । गोमत गोभि सहितस्य । ईशे वृत्रहथानाम् । वृत्र शत्रु । तस्य हथानि प्रहारा । तेषामप्ययमेव ईष्टे । य एवगुणयुक्तस्तं वयं स्तुम इति वाक्यशेष ॥

अय अग्नि । सुवीर्यस्य सुवीरभावस्य शोभनवीर्यस्य वा । ईशे ईष्टे । लोपस्त आत्मनेपदेषु (पा ७. १. ४१) इति तलोप । हि इति पादपूरण ।

सौभगस्य सुभगत्वस्य च ईशे। रायः धनस्य ईशे। स्वपत्यस्य शोभनापत्ययुक्तस्य। गोमतः गोभिः सहितस्य ईशे। वृत्रहथाना तमोदहनाना च ईशे॥ (६)

त्वमग्ने गृहपतिस्त्वँ होता नो अध्वरे।
त्वं पोता विश्ववार प्रचेता यक्षि यासि च वार्यम्॥

वसिष्ठस्यार्षम्। त्वं हे अग्ने। गृहपतिः गृहस्य स्वामी। त्वमेव होता होतृकर्मकारी आह्वाता वा देवानाम्। नो अध्वरे अस्माकं स्वभूते यज्ञे। त्वमेव पोता पोतृकर्मकारी शोधयिता वा। विश्ववार सर्वस्य वरणीय। प्रचेता संप्रवृद्धज्ञानः। अतो ब्रवीमि। यज्ञे देवान् यक्षि। यासि च। ईमहे यामीति याच्ञाकर्मसु पठितत्वात् यातिरत्र याच्ञाकर्मणि। लट् लोडर्थे। याहि याचस्व। प्रार्थयेत्यर्थः। किं पुन प्रार्थय। सामर्थ्यात् धनम्। कीदृशम्। उच्यते। वार्यं वरणीयम्॥

वसिष्ठः। त्वं हे अग्ने गृहपतिः यजमानः भवसि। त्वं होता असि। नः अस्माकम्। अध्वरे। त्वं पोता च असि। हे विश्ववार विश्वैर्वरणीय संभजनीय। प्रचेताः प्रकृष्टचेताः। त्वं यक्षि यज। देवान्। सर्वैः आर्त्विज्यैः यासि प्रापय च अस्मान्। वार्यं वरणीयं धनम्॥ (७)

सखायस्त्वा ववृमहे देवं मर्तास ऊतये।
अपान्नपातं सुभगं सुदंससं सुप्रतूर्तिमनेहसम्॥

विश्वामित्रस्यार्षम्। सखायः सन्तः। त्वा त्वाम्। ववृमहे प्रार्थयाम.। कीदृशं त्वाम्। उच्यते। देवं दानादिगुणयुक्तम्। मर्तासः मनुष्याः। ऊतये। चतुर्थ्येकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्। ऊतिम्। तर्पणं पालनं वेत्यर्थ.। कीदृशं पुनस्त्वां प्रार्थयामहे। उच्यते। अपा

नपात अपा पौत्रम्। कथ पुनरग्नेरपा पौत्रत्वम्। अभ्य ओपधयो वृक्षाश्च जायन्ते। वृक्षभ्य सकाशात् निर्मथ्यते। एवमग्नेरपा पौत्रत्वम्। सुभग शोभनधनम्। सुदसस सुकर्माणम्। सुप्रतूर्तिम्। तूर्वति हिंसार्थे। सुष्ठु प्रकर्षेण हिंसितार शत्रूणाम्। अनेहसमक्रोधम् अपापमित्यर्थ॥

विश्वामित्र। सखाय स्तोतृत्वेन सखाय सन्त वयम्। त्वा त्वाम्। वव्महे प्रार्थयाम। देव त्वा मतास मनुष्या वयम्। ऊतये रक्षायै। अपान्नपात पुत्र वैद्युतवाडवरूपाभ्याम। सुभग सुधनम्। सुदससम्। दम इति कर्मनाम। सुकर्माणम्। सुप्रतूर्ति सुप्रतरण सूपगमम्। अनेहस अपापम्। पापाना हन्तारम्॥　(८)

प्रथमस्य षष्ठी दशत्या।

---

आ जुहोता हविषा मर्जयध्व नि होतारं गृहपतिं दधिध्वम्।
इडस्पदे नमसा रातहव्य सपर्यता यजत पस्त्यानाम्॥

वामदेवस्यार्षम्। हे ऋत्विज मत्पुत्रादयो वा। आभिमुख्येन जुहोता। केन। हविषा। हुत्वा च मार्जयध्व शोधयध्वम्। समार्ग तृणे कुरुध्वम्। नीत्ययमुपसर्गो दधिध्वमित्याख्यानेन सम्बन्धयितव्य। होतार आह्वयितार देवानाम्। गृहपतिं यजमानगृहस्य स्वामिनम्। निदधिध्व नियमेन स्थापयध्वम्। क्व पुन स्थापयाम। इडस्पदे। इडित्यन्ननाम। तेन चात्र हविर्लक्षणमन्न परिगृह्यते। तस्य पदे। वेद्याख्ये स्थाने इत्यर्थ। केन स्थापयाम। उच्यते। नमसा स्तुत्येत्यर्थ। कीदृशमग्निम्। उच्यते। रातहव्यम्। रात दत्त हव्य यस्य स रातहव्य। त रातहव्यम्। दत्तहवि

प्कामित्यर्थ. । स्थापयित्वा च सपर्यत परिचरत । यजतं यष्टव्यमग्निम् । पस्त्यानाम् । पस्त्यानि गृहाणि । तेषु ये निवसन्ति ते पस्त्या. । तेषा यष्टव्यम् ॥

अष्टादशर्चेस्त्रिष्टुभो जगतीत्विह चित्र इत् ।
इतीम स्तोममिति चाग्निं नरो दीधितिर्विराट् ।
आग्नेय्य एताः सकलाः पौष्णी शुक्रन्त इत्यसौ ॥

वामदेवः । आजुहोत अभिजुहुत अग्निम् । हविषा हे ऋत्विजः । तप्तनप्तनथनाश्च (पा. ७. १. ४५) इति लोण् मध्यमपुरुषबहुवचनस्य तपादेशः । मर्जयध्व परिचरत । निदधिध्व आहवनीयायतने । होतारं ह्वातार देवानाम् । गृहपतिं यजमानगृहाणा पालयितारम् । किमत्राहवनीयायतनं विवक्षितं तदाह । इडः इडायाः । पदे स्थाने । यत्र सर्वा पृथिवी समाप्यते तस्मिन् अन्तरवेद्या इत्यर्थः ।

इयं वेदिः परो अन्तः पृथिव्या (ऋ. वे. १. १६४. ३५)

इति निगम । एतद्वा इडायाः पद यदुत्तरवेदीनाभिः (ऐ. ब्रा. १. २८.) इति बह्वृचब्राह्मणम् । उत्तरवेदीनाभिरिति उत्तरवेद्या मध्यमः । तस्मिन् इडायाः पदे निदधिध्व इति पूर्वेण सनवः । नमसा स्तोत्रेण सपर्यत परिचरत । रातहव्यम् । रात दत्त हव्य हविः यस्मै यजमानै. तम् । यजत यजनीयम् । पस्त्यानाम् । पस्त्याः गृहा. । गृहस्थाना इत्यर्थः । भृमृदृशियजि (उ. ३. १०९) इत्यादिना यजेरतप्रत्ययः कर्मणि ॥ (१)

**चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे । अनूधा यदजीजनदधा चिदा ववक्षत्सद्यो महिदूत्यं चरन् ॥**

उपस्तुतस्य आर्षम् । चित्र पूज्य. । इत् इति पादपूरण' । शिशो शंसनीयस्याग्ने । तरुणस्य । तॄ प्लवनतरणयोरित्यस्यैतद्रूपम् ।

भवनसमर्थस्य । अथवा तरुणस्य युवानस्य । वक्षथ वहनम् । गमनमित्यर्थः । कीदृशस्य पुनरग्ने पूज्य गमनम् । उच्यते । न यो मातरावन्वेति धातवे । नेत्ययमन्वेतीत्यनेन सम्बन्धयितव्यः । य अग्नि मातरौ अरणी प्रति न अन्वेति न गच्छतीत्यर्थः । धातवे । धेट पाने इत्यस्यैतद्रूपम् । स्तनपानार्थमित्यर्थः । अनूधा । ऊधोवर्जिता अरणि । पञ्चम्या अत्र लुक् । यत् अजीजनत् जनितवती । अनेलय यदाशब्दस्य श्रुतत्वात् तदा शब्दस्यार्थे वर्तते । चिच्छब्द एवशब्दस्यार्थे । तदैव । जातमात्र एवेत्यर्थः । आवक्षत आभिमुख्येन वहति । किम् । सामर्थ्याद्धवींषि । सद्य । यस्मिन्नेवाहनि जायते तस्मिन्नेवेत्यर्थः । महि महत् । दूत्य दूतकर्म । चरन् । चरतिर्यद्यप्यन्यत्र गत्यर्थस्तथापीह सामर्थ्यात्करोतीत्यर्थे वर्तते । कुर्वन्नित्यर्थः ॥

वार्हस्पत्य उपस्तुतः । चित्रो दर्शनीयो भवति । शिशोः जातमात्रस्य । तरुणस्य अग्ने । वक्षथः वहनशील रश्मि । इत् इति पादपूरणः । वहेरौणादिकः सथप्रत्ययः । य अग्नि मातरौ जनन्यौ । न अन्वेति न अनुगच्छति । धातवे पातु स्तन्यम् । अग्नेर्मातरौ अरणी । अनूधा ऊधोहीना अरणि । यत् यदा । अजीजनत् एनम् । चित् एव । आ इति पूरण । वक्षत् वहति । सद्य एव महि महान्ति हवींषि । दूत्य चरन् आचरन् यजमानानाम् । लडर्थे व्यत्ययेन लेट् । लेटस्तिपि कृते लेटोऽडाटौ (पा. ३. ४. ९४) इति तिपाऽडागमः । सिप् बहुलं लेटि (पा. ३. १. ३४) इति सिप छान्दस द्विर्वचनम् । बहुलं छन्दसि इति हो ढ. । षढो कः सि (पा. ८. २. ४१) इति क । आदेशप्रत्यययोः (पा. ८. ३. ५९) इति सकारस्य षकारः । इतश्च लोपः परस्मैपदेषु (पा. ३. ४. ९७) इति इकारलोपः । ततो ववक्षत इति रूपसिद्धि ॥ (२)

इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा संविशस्व ।
संवेशनस्तन्वे चारुरेधि प्रियो देवानां परमे जनित्रे ॥

वृहदुक्थस्यार्षम् । इदं ते तव । एकं ज्योति वैद्युताख्यम् । पर. परम् । उत्कृष्टमित्यर्थ । उ इति पादपूरण. । ते तव । एकमादित्याख्यम् । तृतीयेन ज्योतिषा पार्थिवेन अग्न्याख्येन । सविशस्व । क्व पुन सविशामि । उच्यते । सवेशन तन्वे । सविश्यते अस्मिन्निति सवेशनं वेद्याख्य स्थानम् । तस्मिन्नित्यर्थ । तन्व शरीरस्य । सविश्य चारु एधि शोभनो भव । प्रिय देवानाम् । क्व पुन प्रिय । उच्यते । परमे उत्कृष्टे । जनित्रे । जन्यतेऽस्मिन्निति जनित्र कर्म यागाख्यम् । तस्मिन्नित्यर्थ । अथवा जन्मैव जनित्रम् । परमे जन्मनि । वृक्षादौ यज्जन्म तस्मिन्नित्यर्थ ॥

*वृहदुक्थ* । *आहवनीये स्वस्थानात् अर्वाक् शम्यापरासात् भ्रष्टे निर्गत*-स्याग्ने. स्वस्थान सवापे कारणतया इय विहिता । अत तदानुगुण्येन व्याख्यायते । यदिद स्थानात् च्युत पर परस्तात् दिवि ते एक ज्योति इति व्याख्यातम् । उ इति पूरण । तृतीयेन योनिभूतेन आहवनीयाख्येन ज्योतिषा । सविशस्व सगच्छस्व । सवेशन सगत त्वम् । तन्वे मदीयायै । चारु कल्याणकर' । एधि भव । प्रियश्च देवाना एधि । परमे श्रेष्ठे । जनित्रे जनके ज्योतिषि । आहवनीये स्थित त्व स्थानभ्रशनिमित्तात् अग्निं परित्यज्य हव्यवाडेव भवति ॥ (३)

इमँ स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषाम वयं तव ॥

कुत्सस्यार्षम् । इमं स्तोम स्तोत्रम् । अर्हते पूज्याय । जातवेदसे जातविद्याय जातधनाय वा । द्वेऽप्येते तादर्थ्ये चतर्थ्यौ । अर्हतो जातविद्य स्यार्थायेत्यर्थ । रथमिव समहेमा । महतिरत्र गमनार्थ । अन्तर्णीतण्यर्थश्च द्रष्टव्य । यथा कश्चिद्रथ गमयति । तद्वद्गमयेम । उच्चारयामीत्येतदा शास्महे इत्यर्थ । मनीषया स्वप्रज्ञया । भद्रा हि । हिशब्दो यस्मादर्थे ।

यस्माद्भद्रा कल्याणी । न अस्माकम् । उपरीति वाक्यशेष । प्रमति प्रकृष्टा मति । अनुग्राहिका बुद्धिरित्यर्थ । अस्य अग्ने । संसदि यजमान सभायामित्यर्थ । अतो ब्रवीमि । हे अग्ने । सख्ये स्तुत्यस्तोतृलक्षणे । वर्तमाना इति वाक्यशेष । मा रिषाम । ऋष रिष हिंसायामित्यस्यैतद्रूपम् । मा हिंसिष्म केनचित् । वय तव ॥

वृत्त: । इमं स्तोम स्तोत्रम् । समहेम सम्यक् प्रयच्छाम । अर्हते योग्याय स्तोमस्य । जातवेदसे प्रभूतधनाय । मनीषया । रथमिव । यथा रथ: कल्पितागमनहेतु: एवमागमनहेतुम् । भद्रा भजनीया । हीति पादपूरण: । प्रमति: प्रकृष्टा मति: अनुग्रहबुद्धि: । अस्य अग्ने: । अस्मदीयाया संसदि सभायाम् । संसद्विषया भवतु । शेष: अन्त्य: पाद: प्रत्यक्षस्तुति. । हे अग्ने तव सख्ये सति । वयं मा रिषाम न हिंस्याम केनचिदपि ॥ (४)

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ॥

भरद्वाजस्यार्षम् । मूर्धानं प्रधानभूतमित्यर्थ । दिवः द्युलोकस्य । अरतिं गन्तार अलमतिं वा । पृथिव्या । पृथिवीत हवींषि गृहीत्वा द्युलोकस्य गन्तारमित्यर्थः । वैश्वानरं अग्निम् । ऋते यज्ञे । आजातं । आ इत्येष उपेत्येतस्य स्थाने । उपजातम् । सवृद्धमित्यर्थ । अग्निं कविं मेधाविनम् । सम्राजं सम्यगीशानं सम्यग्दीप्तं वा । अतिथिं अतिथिम्थानीयम् । जनाना यजमानमनुष्याणाम् । आसन् । आस्यशब्दस्य पद्दन्नोमास्हन्निशसन् (पा. ६. १. ६३) इति आसन्नादेशः । सप्तमीयं द्वितीयार्थे द्रष्टव्या । आस्यं आस्यभूतं देवानाम् । तथाहि

अग्निमुखा वै देवा (ता. ब्रा. २५. २४. ४)

इति श्रुतिवचनम् । न अस्माक सम्बन्धिनम् । स्वामिनमित्यर्थे । पात्र भाजनमाहुतीनाम् । जनयन्त जनितवन्त । देवा इन्द्रादय ॥

द्वयोर्भरद्वाज । मूर्धान धारकम् । दिवो द्युलोकस्य । अरतिं मध्यमलोक स्वामिन पृथिव्याः । वैश्वानर विश्वनरहितम् । अग्निं ऋते यज्ञे । यज्ञप्रवृत्यर्थं जातम् । आ इति पादपूरण अभेरर्थे वा । यज्ञार्थमभिजात इति । कविं क्रान्त प्रज्ञम् । सम्राज सम्यक् दीप्यमानम् । अतिथिं पूज्य सर्वेषा जनानाम् । आसन् आस्ये । आस्यशब्दस्य पद्दन्नित्यादिना (पा ६ १. ६३) छस्प्रभृतिषु आसन्ना देश । आसन्शब्दात् सप्तम्येकवचनस्य लुकि आसन्निति रूपम् । न अस्म भ्यम् । मनुष्याणा अर्थाय । पात्र भाजन हविषा जुहूम । जनयन्त अजनयन् अकुर्वन् देवा । आस्यस्थानीया जुहू चक्रुरिति यावत् । आस्पात्र जुहू देवाना चमसा देवपान (तै. स २. ९. ९ ३) इति निगमान्तरम ॥ (९)

वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरग्ने जनयन्त देवा. ।
तं त्वा गिरः सुष्टुतयो वाजयन्त्याजि न गिर्ववाहो जिग्युरश्वा ॥

भरद्वाजस्यार्षम् । वीत्ययमुपसर्ग जनयन्त इत्याख्यातेन सम्बन्ध यितव्य । त्वत् । पञ्चम्या अत्र लुक् । त्वत्त । त त्वा गिर इति परस्तात्तच्छब्दस्य श्रुते एतस्य समानाधिकरणो यच्छब्दोऽध्याहर्तव्य । यत त्वत्त । उक्थेभि स्तोत्रै । हे अग्ने । विजनयन्त विविध जनितवन्त उत्पादितवन्त । लब्धवन्त इत्यर्थ । किं तल्लब्धवन्त । सामर्थ्याद्धनम् । के पुनर्लब्धवन्त । उच्यते । देवा । हविषा दातृत्वात् देवशब्देनात्र ऋत्विग्यजमाना उच्यन्ते । कथ पुनर्लब्धवन्त । उच्यते । आपो न । आप इति प्रथमाबहुवचन द्वितीयाबहुवचनस्य स्थाने द्रष्टव्यम् । नशब्द उपरिष्टादुपचारत्वादुपमार्थीय । आप इव । पर्वतस्य मेघस्य । पृष्ठात् । एतदुक्त भवति । यथा केचिन्मरुदादय मेघमस्तकाद्दहदक लब्धवन्त

तद्वत् यतो धन लब्धवन्त । त त्वा गिर सुष्टुतय । द्वे अप्यते प्रथमा बहुवचने तृतीयाबहुवचनस्य स्थाने द्रष्टव्ये । गीर्भि सामलक्षणाभिर्वाभि स्तुतिभि ऋग्लक्षणाभिश्च । वाजयन्ति पूजयन्ति । वय जिग्यु । शुद्धोऽपि उपपूर्वो द्रष्टव्य । उपनिग्मु । उपगच्छाम इत्यर्थ । हे गिर्वे वाह । गिर स्तुतय । ता उह्यन्ते य प्रति स गिर्ववाह । तस्य सम्बोधन हे गिर्वाह । कथ पुनरपगच्छाम । उच्यते । आजि न अश्वा । आजि सङ्ग्रामभूमि । नशब्द उपमार्थीय । सङ्ग्रामभूमिमिव अश्वा । यथा सङ्ग्रामभूमि अश्वा शीघ्रमुपगच्छन्ति तद्वदुपगच्छाम इत्यर्थ ॥

विजनयन्त पृथक् जनयन्ति सपादयन्ति स्वीयान् कामान् पुत्रपश्वादीन् । त्वत् त्वत्त । उक्थेभि स्तोत्रै । देवा स्तातार । दास्यते स्तुतिकर्मण देवा इति । हे अग्ने आपा न पवतस्य पृष्ठात् इत्युपमा । आप इति द्वितीयाया स्थाने प्रथमाया व्यत्यय । अप इव । पर्वतस्य पृष्ठादुपरिभागात् । त त्वा त्वाम् । गिर स्तोतार । गृणाते कर्तरि क्विपि रूप गी इति । सुष्टुतय शोभनस्तुतियुक्ता । वाजयन्ति वाजिन बलिन कुर्वन्ति स्तुतिभि । आजि न सग्राममिव । अश्वा । जिग्यु इति लडर्थे लिट । छन्दसि लुङ्लङ्लिट (पा ३. ४ ६) इति । वाजयन्ति वशीकुर्वन्ति च मा स्तातार । हे गिर्ववाह गार्भि स्तुतिभि उह्यते प्राप्यते स्तातॄन इति गिर्ववाह । वहे सार्वधातुभ्या विहित असुन्प्रत्यय । वकारस्य द्वित्व छान्दसम ॥ (६)

आ वो राजानमध्वरस्य रुद्र होतार सत्ययज रोदस्यो ।
अग्नि पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥

वामदेवस्यार्षम् । आ इत्ययमुपसर्ग कृणुध्वमित्याख्यातेन सम्बन्ध यितव्य । व । बहुवचनमिद एकवचनस्य स्थाने द्रष्टव्यम् । त्वाम् राजान ईश्वरम् । अध्वरस्य यज्ञस्य । रुद्र रोदनस्वभावम् । पार्थिवोऽग्नि

प्रदीप्तः घुगुधुगाशब्दं करोति। वैद्युतोऽपि गर्जितलक्षणम्। असोऽसौ रोदनक्रियायोगात् रुद्र उच्यते। होतारं देवानां आह्वातारम्। सत्ययज्ञं अविसंवादिनं यष्टारम्। रोदस्यो द्यावापृथिव्यो। द्यावापृथिवीग्रहणं चात्र प्रदर्शनार्थम्। सर्वदेवानां यष्टारम्। अग्निं पुरा तनयित्नो प्राक् घुगुधुगाशब्दात् प्राक् गर्जितलक्षणाच्छब्दात्। कीदृशात्। अचित्तात् चेतनावर्जितात्। यावद्गर्जितलक्षणशब्देनैव करोति जातमात्रस्तावदेवेत्यर्थः। कीदृशमग्निम्। उच्यते। हिरण्यरूपम्। अवसे आमन पालनार्थं तर्पणार्थं वेत्यर्थः। कृणुध्वं आभिमुख्येन कुरुध्वम्। केन। स्तुतिभिर्हविर्भिश्च ॥

इयं रौद्रीति केचित्। वामदेव। आकृणुध्वं अभिमुखीकुरुत। वः यूयम्। राजानं स्वामिनम्। अध्वरस्य यज्ञस्य।

राजन्तमध्वराणाम् (ऋ वे १ १ ८)

इति हि निगमान्तरम्। रुद्रं रारूयमाणं द्रवन्तं अग्निम्। होतारं देवानाम्। सत्ययजं सत्यान् देवान् यजन्तम्। अग्निर्हि देवान् याजयति हविषां वहनात्। रोदस्यो। व्याप्तमिति शेषः। द्यावापृथिव्यौ रोदसी। रोदस्या राजानं अध्वरस्य होतारमिति वा संबन्धः। हिरण्यरूपं हिरण्यरूपसदृशं अग्निम्। अवसे रक्षणाय युष्माकं तर्पणाय वा हविषा आकृणुध्वम्। पुरा पुरस्तात्। तनयित्नोः तायमानात् सर्वत्र। अचित्तात् अचिन्तितात्। इति प्रायेणाभिप्रायः जीवद्धवस्थायामेवेति। यदीयं रौद्रीति निर्णयः तदा होतारमिति होतव्यमिति व्याख्येयम्। अग्निमित्यस्य नेतारं इति ॥ (७)

इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन।
नरो हव्येभिरीळते सबाध आग्निरग्रमुषसामशोचि ॥

वसिष्ठस्यार्षम्। समित्ययमुपसर्गः पुरस्तादिन्धेर्द्रष्टव्यः। समिन्धे। सम्यक् दीप्यत इत्यर्थः। राजा दीप्तः। दीप्तोऽपि सुतरां दीप्यत इत्यर्थः।

अयं ईश्वर । केन दीप्यते । उच्यते । नमोभि स्तुतिभि । स्तूयमान इति वाक्यशेष । य कीदृशोऽग्नि । उच्यते । यस्य प्रतीक नाम मुख वा आहुत आभिमुख्येन हुतम् । घृतेन । य च नर मनुष्या । हव्येभि हविर्भि । यजन्त इति वाक्यशेष । ईळते स्तुवन्ति । कीदृशा मनुष्या । सबाध ऋत्विज । यस्य प्रतीकमिति पुरस्ताद्यच्छब्दस्य श्रुत तच्छब्द इहाध्याहर्तव्य । स आ अग्नि । आ इत्ययमुपसर्ग अशोचीत्यास्यातेन सम्बन्धयितव्य । अग्नि । अग्र प्रथमतरम् । उषसाम् । आभिमुख्येन दीप्यत इत्यर्थ ॥

वसि० । समिन्धे समिध्यते अग्नि । राजा दीप्त । अर्य स्वामी । नमोभि स्तुतिभि सह । यस्य अग्ने । प्रतीक रूपम् । आहुत घृतेन अभिहुत भवति घृतेन । तमग्निं नरा नेतार ऋत्विज । हव्येभि हव्यै सार्धम् । ईळते स्तुवन्ति । सबाध सबाधमान सश्लिष्ट । यद्वा हव्यै पूजयन्ति । पूजाकर्मा चेडि । आ अभीत्यर्थ । स अग्नि उषसा अग्र प्रमुख अभि । अशोचि । शुचिर्दीप्तिकर्मा । दीप्यते । उष काले हि आग्निहोत्रिक अग्नि दीप्यते ॥　　(८)

प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति ।
दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो ववर्ध ॥

त्वाष्ट्रस्य त्रिशिरस आर्षम् । प्रेत्ययमुपसर्गो यातीत्यास्यातेन सम्बन्धयितव्य । केतुना स्वेन प्रज्ञानेन कर्मणा वा । बृहता महता । प्रयाति गच्छतीत्यर्थ । अग्नि । आकार रोरवीतीत्यनेन सम्बन्धयितव्य । क पुन प्रति याति । उच्यते । रोदसी द्यावापृथिव्यो प्रति । कीदृशोऽग्नि । उच्यते । वृषभ वर्षिता । आरोरवीति अत्यर्थं शब्द

करोति गर्जितलक्षणम् । किञ्च दिव द्युलोकस्य । चिच्छब्द पादपूरण । अन्तात् । पञ्चम्येकवचनमिद द्वितीयाबहुवचनस्य स्थाने द्रष्टव्यम् । उपमा सन्निकृष्टामित्यर्थ । उत् आनट् ऊर्ध्वं व्याप्नोतीत्यर्थ । किञ्च अपा मुपस्थे । आप उपगम्य यत्र तिष्ठन्ति तदपामुपस्थ अन्तरिक्षम् । तस्मिन्नित्यर्थ । महिष महान् । ववर्ध वर्धते वीर्येण ॥

त्रिशिरा त्वाष्ट्र । प्रयाति अग्नि केतुना भानुना । बृहता महता सह । आ अभि रोरवीति भृश शब्दायते । वृषभ वर्षिता कामानाम् । रोदसी द्यावा-पृथिव्यौ अभि इति सबन्ध । दिव अन्तरिक्षस्य । चित् एव । अन्तात् पर्य-न्तात् । उपमाम् । उपमेत्यन्तिकनाम । उपमा अन्तिक मेघस्य । उदानट् उदा प्नोति । नशेर्व्याप्तिकर्मणो रूप उदानडिति । अपा उपस्थे उपस्थाने अन्तरिक्षे । ववर्ध वर्धते वैद्युतरूप । महिषो महान् ॥ (९)

## अग्निर्नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम् । दूरेदृशं गृहपतिमथर्व्युम् ॥

वसिष्ठस्यार्षम् । अग्नि नर । नर इति जनयतेति मध्यमपुरुष-योगात् आमन्त्रितान्तम् । हे नर ऋत्विजो मधुत्रादयो वा । दीधितिभि अङ्गुलिभि । अरण्यो सकाशात् । हस्तच्युतम् । हस्ताभ्या गृहीत्वा च्याव्यते उत्तरवेद्याख्ये स्थाने नीयते य. स हस्तच्युत । त हस्तच्युतम् । अथवा हस्ताभ्या च्यवन हस्तच्युत् । तस्मादिय तृतीयार्थे द्वितीया । हस्तच्युता । हस्तप्रच्यावनेनेत्यर्थ । जनयत उत्पादयत । कीदृशम् । उच्यते । प्रशस्त दूरेदृश दूरे व्यवहितो यो दृश्यते स दूरेदृक् । त दूरेदृशम् । गृहपतिं यजमानगृहस्य स्वामिनम् । अथवा यजमानगृहान् देवाश्चाभिगन्तारम् ॥

वसिष्ठः । अग्निं जनयत जनयन्ति नरः । लटः प्रथमपुरुषबहुवचनस्य लोण्मध्यमपुरुषबहुवचनेन व्यत्ययः । हे नरः मनुष्या ऋत्विजः । जनयत इति वा प्रार्थना । तस्मिन् पक्षे नर इति पदस्य आद्युदात्तत्व स्वरव्यत्ययात । सर्वानुदात्त हि प्राप्त आमन्त्रितस्य च (पा. ८. १. १९) इति । नरो नेतारो यूयं इति वा कर्तृविशेषणम् । दीधितिभिः अङ्गुभि । दधातेर्दीधितयः कर्माणि विदधतीति । अरण्योर्विद्यमानमग्निम् । हस्तच्युतं हस्ताभ्या च्यावित मन्थनेन । प्रशस्त प्रकर्षेण स्तुत सर्वै । दूरेदृश दूरे दृश्यमानम् । दूरेऽपि पश्यन्त इति वा । गृहपतिं गृहाणा पालकम् । अथर्युम् । थर्वतेगतिकर्मणः नञुपसृष्टात् लुप्तरेफात् अथर्यु इति रूपसिद्धिः । अगम्यम् ॥ (१०)

प्रथमस्य सप्तम्या दशत्या ।

---

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्रवयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ ॥

अबोद्धयग्निः— बुधगविघ्निरयोरार्षम् । अबोधि बुद्धयते । अग्नि । किं बुद्धयते । यद्यत् बोद्धव्यम् । अथवा भक्तता अभक्ता च । केन पुनर्बुद्धयते । उच्यते । समिधा समिन्धनेन । जनाना यजमानमनुष्याणाम् । प्रतीत्ययमुपासमित्यनेन सम्बन्धयितव्यः । कथं पुनर्बुद्धयते । उच्यते । धेनुमिव आयतीं आगच्छतीम् । कदा पुनर्बुद्धयते । प्रति उषासं उषसं प्रति । उदयकाले इत्यर्थ । प्रबुद्धस्य च यह्वा इव महान्त इव पक्षिण । प्रवयाम् । द्वितीयैकवचनमिदं पञ्चम्येकवचनस्य स्थाने द्रष्टव्यम् । प्रवयायाः । शाखात इत्यर्थः । उज्जिहानाः । ओहाङ्गता-

वित्यस्येद रूपम् । ऊर्ध्वं गच्छन्त । उत्पतन्त इत्यर्थ । द्युलोक व्याप्नु वन्ति । तद्वद्भानव दीप्तय । सस्रते । स्र गतावित्यस्यद रूपम् । गच्छ न्तीत्यर्थ । नाक द्युलोकम् । अच्छ आप्तुमित्यर्थ ॥

बुधश्च गविष्ठिरश्च द्वावृषी । अबोधि बोध्यते । अग्नि समिधा समिद्धि । जनाना यजमानानाम् । धेनुमिवायतीं आगच्छन्तीम् । उषास प्रति उष काले । यह्वा महान्त इव वृक्षा । वया शाखाम् । प्रोज्जिहाना प्राद्गमयन्त । प्रसस्रते प्रसरन्ति । भानव दीप्तय अग्ने । नाकमन्तरिक्षम् । अच्छ अभि । अभि मुखा ॥ (१)

## प्र भूर्जयन्त महा विपोधा मूरैरमूरं पुरा दर्माणम् ।
## नयन्त गीर्भिर्वना धिय धा हरिश्मश्रु न वर्मणा धनर्चिम् ॥

वत्सप्रे आर्षम् । प्रेत्यय जयन्तमित्यनेन सम्बन्धयितव्य । भू । प्रथमैकवचनमिद द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । भुव पृथिवीलोकम् । भूर्ग्रहण च प्रदर्शनार्थम् । त्रीनपि लोकान् । प्रजयन्तम् । विपोधाम् । विप इति कर्मनाम । तस्येदमादिहस्त्वम् । स्वकर्मण हविर्वहनादे धारयि तारम् । सूरै । तृतीयाबहुवचनमिद प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् । मूरा मूढा । अमूर अमूढ अग्निम् । पुरा शत्रुपुराणाम् । दर्माणं विदार यितारम् । नयन्त गीर्भि स्तुतिभि हविर्भिश्च प्रापितवन्तम् । कीदृश मग्निम् । वना वननीयम् । धिय प्रज्ञाम् । धा । एकवचनमिद बहुवचनस्य स्थाने द्रष्टव्यम् । धारितवन्त । लब्धवन्त इत्यर्थ । कीदृश पुनरग्निं य स्तुतिभि हविर्भिश्च प्रापितवन्त तेन वननीय धिय लब्धवन्त । उच्यते । हरिश्मश्रु हरितज्वालाख्यश्मश्रुम् । नशब्द उपरिष्टादुपचारत्वादुपमार्थीय । अस्त्युपमार्थस्य सप्रत्यर्थे प्रयोग इति पादपूरण । किं शुद्धामव प्रज्ञा

लब्धवन्त । उच्यते । वर्मणा । वर्मेति गृहनाम । तस्मादियं सहयोग-लक्षणा तृतीया । गृहेण सहिता प्रज्ञा लब्धवन्त । कीदृशं पुनरग्निं स्तुतिभिर्हविर्भिश्च प्रापितवन्तः । उच्यते । धनर्चिं धनेन अर्चितारं धनस्य पूजितारम् ॥

वत्सप्रिः ऋषिः । प्रभूः इत्याख्यात अनुदात्तत्वात् पञ्चमलकारान्तम् । प्रभूः प्रगच्छ उपगच्छ अग्नि हे स्तोतः । जयन्त रक्षःप्रभृतीन् । महा महान्तम् । विपोधा विप्राणा धारकम् । मूरैः । मूर इति मूढनाम । मूढैरसुरैः सार्धम् । पुरः आसुरीणाम् । दर्माणं दारयितारम् । अमूर अमूढम् । नयन्तं विश्वं जगत् नेतारं विश्वस्य । गीर्भिः स्तुतिभिः प्रभूरिति संबन्धः । वना वननीयं संभजनीयम् । हरिश्मश्रु हरितज्वालं हरितं हिरण्यवर्णम् । नेति पुरस्तादुपचारोऽपि उपमार्थीयः । वर्मणा कवचेन इव । इत्थंभूता ज्वालास्य कवचस्थानीया । धनं प्रीणनं अर्चिरर्चनं स्तोत्रं यस्य सः । विय कर्मपरिचरणम् । धाः निधेहि अग्नेः हे स्तोतः ॥　　　　(२)

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावन् भद्रा ते पूषन्निह रातिरस्तु ॥

भरद्वाजस्यार्षम् । आदित्यात्मना व्यवस्थितस्य अग्नेरेवेयं स्तुतिः । शुक्रशब्दः शुक्लशब्दपर्यायः । शुक्रं शुक्लम् । तव । अन्यत् । किं तत् । सामर्थ्याद्रूपम् । यजतं ते अन्यत् । शुक्लप्रतियोगित्वेनोपादानात् यजत-शब्दो लोहितवचनः । लोहितम् । ते तव । अन्यत् । किं तत् । सामर्थ्याद्रूपमेव । आदित्यस्य हि मध्यन्दिने शुक्लं रूपं भवति । उदयास्त-मनयोश्च लोहितम् । ते द्वे रूपे अभिसमीक्ष्यैतदुक्तं शुक्रं ते अन्यद्यजतं ते अन्यदिति । किंच विषुरूपे अहनी ये अपि चैने विषुरूपे भिन्नरूपे अहनी अहोरात्रे । एते अपि त्वमसि त्वत्कर्तृत्वादेते अपि त्वमेव भवसि । द्यौरिव

च असि। यथा द्यौ सर्वव्यापिनी तद्वत्त्व सर्वव्यापी भवसीत्यर्थ । किं च विश्वा हि। हिशब्दश्चशब्दस्यार्थ। विश्वाश्च। माया प्रज्ञा । अवसि प्रज्ञाहेतुभूत प्रकाश पालयसि। स्वधावन्। स्वधेत्यन्ननाम उदकनाम वा। हविर्लक्षणेन अन्नेन रश्म्याहृतेन वा उदकेन तद्वान् स्वधावान्। तस्य सम्बोधन हे स्वधावन्। अन्नवन् उदकवन् वा। भद्रा कल्याणी। ते तुभ्यम। हे पूषन्। इह यज्ञ। राति हविर्दानम। अस्तु। अथवा ते इति कर्तृलक्षणा षष्ठी। त्वकर्तृका राति इह भद्रास्तु। इह यज्ञ शोभन धनमस्मभ्य देहीत्यर्थं ॥

भरद्वाज। शुक्र ते त्वदीयम्। अन्यत् अह दिवसो भवति। यजत यजनीयम्। यजि सगतिकरणे वर्तते। सगमनीय प्रकाशेन। स्वप्रकाश भवति। ते अन्यत्त्ह निशा। इत्थ विषुरूपे विषमरूपे अहनी भवत। यद्वा अहनी कर्मणी उच्येते। आह्रियते क्रियते इत्यह। शुक्र पावन एतत्कर्म। यजत यजनीय पूज्य भवति अन्यत्। इत्थ विषुरूप अहनी भवत। प्रकाश पोषण च। यथोक्त भगवता यास्केन—शुक्र ते अन्यत् लोहित ते अन्यत् यजनीय ते अन्यत् इति वा विषमरूपे ते अहनी कर्मणी। (नि १२ १७) इति। द्यौ सूर्य इवासि त्वम्। विश्वा हि माया प्रज्ञानानि। अवसि रक्षसि। हे स्वधावन् अन्नवान्। भद्रा कल्याणी। राति दानम्। इह स्तोतरि मयि। अस्तु मद्विषये भवतु। हे पूषन्। पुष्णाति पुष्यते वा पूषा ॥ (३)

इडामग्ने पुरुदंस सनिं गो शश्वत्तम हवमानाय साध।
स्यान्नस्सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥

विश्वामित्रस्यार्षम्। इडा अन्नम्। हे अग्ने। कीदृशमन्नम्। पुरुदसम्। पुर्विति बहुनाम। दस इत्यपि कर्मनाम। बहूनि कर्माणि यागहोम दानादीनि कर्तव्यत्वेन सम्बन्धीनि यस्य तत्पुरुदसम्। बहूना कर्मणा

सम्पादयितृ । बहूनि कर्माणि यागादीनि येन क्रियन्त इत्यर्थ । अथवा दंम इति दसि दंमदर्शनयोरित्यस्यैतद्रूपम । बहूना दर्शनीयम् । सनिम । षणु दाने । तत्पूर्वकलाभ उपलक्ष्यते । सनिं च लाभं च । गो· । कीदृशं लामम् । उच्यते । शश्वत्तमं अतिशयेन बहु । बह्वीना गवा लाभं इत्यर्थ । हवमानाय मनसा धिया । एतदुक्तं भवति । अन्नं गावश्च अस्मभ्यं देहीत्यर्थ । किं च स्यान्न सूनु । सा ते सुमतिरिति परस्तात्तच्छब्दश्रुतेर्यच्छब्दस्याध्याहार । य स्याद्भवेत् । न अस्माकम् । सूनु पुत्र । तनय पौत्रश्च । कीदृश पौत्र । उच्यते । विजावा विविधं जनयिता पुत्राणाम् । अनेन प्रकारेण वंशस्याविच्छेद आशास्यते । अग्ने सा ते तव । सुमति शोभना मति अनुग्रहात्मिका । भूत् भवतु । अस्मे अस्मासु । अस्मास्वुपरीत्यर्थ ॥

विश्वामित्र· । इडा अन्नं भूमिं वा । हे अग्ने पुरुदंस बहुकर्माणम् । दंस कर्म । एकः सकारो लुप्त· । बहुकर्मसाधिका इत्यर्थः । सनिं दातारम् । गोः गवाम् । शश्वत्तममिति क्रियाविशेषणम् । चिरकालम् । हवमानाय स्तुवते मह्यम् । साध साधय । स्यात् भूयात् । न· अस्माकम् । सूनुः पुत्रः । तनयः सन्तानहेतुः । तनोतेस्तनयः । विजावा स्त्री विजयते इति । छन्दसीवनिपौ वक्तव्यौ (वा ५. २. १०९-२) इति मत्वर्थीयो वनिप् । भगिनी । इमाश्च हे अग्ने सा प्रसिद्धा । ते त्वदीया । सुमतिः अनुग्रहबुद्धिः । भूतु भवतु । अस्मे अस्मासु ॥ (४)

प्र होता जातो महान्नभोविन्नृषद्मासीदद्पां विवर्ते ।
दधद्यो धायी सुते वयांसि यन्ता वसूनि विधते तनूपाः ॥

वत्सप्रे आर्षम् । वत्सप्रिः पुत्रपौत्रस्य कथयति । प्र होता प्रकर्षेण आह्वाता देवानाम् । जात जातमात्र एव । महान् नभोवित् । नभः

आदित्य द्युलोको वा । तस्य वेत्ता । नृषद्मा । नरो मनुष्या । तान्प्रति यजमानमनुष्यान् प्रति स्थितो य स नृषद्मा । सीदत् सीदति गच्छति । क पुन सीदति । उच्यते । अपा विवर्ते । आपो यत्र विविधं वर्तन्ते सोऽपा विवर्त अन्तरिक्षलोक । तस्मिन्नित्यर्थ । तत्र हि वैद्युतात्मा निवसति । किं च दधत् ददत । किम् । सामर्थ्याद्धनम् । य· धायी धारयिता । कस्य हविर्वहनादे कर्मण । एतदुक्तं भवति । दधद्यो हविर्वहनादिकर्म करोतीत्यर्थ । कदा । उच्यते । सुते अभिषुते सोमे । वयासि अन्नानि । यन्ता निरोद्धा । सामर्थ्यात्तमसाम् । वसूनि हविर्लक्षणान्यन्नानि । विधत्ते परिचरति । कीदृशोऽग्नि । उच्यते । तनूपा । शरीरस्य पाता । कथं पुनरग्नि शरीरस्य पाता । उच्यते । विद्यमानोऽपि तस्मिस्तन्न दहति ॥

वत्सप्रि· । प्रासीदत् प्रकर्षेण सीदति आस्ते । अपा विवर्ते अन्तरिक्षे वैद्युतात्मना । होता आह्वाता देवानाम् । जातः जातमात्र एव महान् भवन । नभोजित् नभसः स्वर्गस्य वेदयिता लम्भयिता । नृषद्मा नृषु सीदन् वैश्वानररूपेण । दधत् धारयन् विश्वम् । यो धायि यो न्यधायि । अडभावः छान्दसः । देवैर्दिव आहृत्य न्यधायि । सोऽग्नि यन्ता दाता भवति । यमिर्दानकर्मापि दृश्यते । वयासि अन्नानि । वसूनि धनानि च । षष्ठ्यर्थे द्वितीयाव्यत्ययः । वयसा वसूना च यन्ता भवति । तनूपाः तनूना पाता रक्षिता अग्निः । सुते मयि विधते धत्ताम् । पञ्चमलकारान्तम् । लेटोऽडाटौ (पा. ३. ४. ९४) इति अट् ॥ (९)

**प्र सम्राजमसुरस्य प्रशस्तं पुंसः कृष्टीनां अनुमाद्यस्य ।**
**इन्द्रस्येव प्र तवसः कृतानि वन्दद्वारा वन्दमाना विवष्टु ॥**

वसिष्ठस्यार्षम् । प्रेत्ययमुपसर्गः । वन्ददित्याख्यानेन सम्बन्धयितव्य· । सम्राजम् । द्वितीयैकवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । सम्राजस्य सम्यक् दीप्तस्य ईश्वरस्य वा । असुरस्य । असु प्राण. । स यस्यास्ति

सोऽसुरः । अथवा रा दाने । प्राणदस्य । तस्य असुरस्य प्राणवतश्चेत्यर्थः । प्रशस्तम् । इदमपि द्वितीयैकवचनं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । प्रशस्तस्य । पुंसः पुरुषनमः । कृष्टीनां मनुष्याणाम् । अनुमाद्यस्य अनुमोदनीयस्य । इन्द्रस्येव प्रनवसः प्रकृष्टस्य महतः इन्द्रस्येव । यथा इन्द्रस्य कृतानि वृत्रवधादीनि कर्माणि कश्चिद्वदति तद्वदग्नेरपि कृतानि कर्माणि हविर्नयनादीनि । प्रवन्दत् प्रकर्षेण स्तौति । मदीयोऽन्तरात्मा । तं च मदीयं अन्तरात्मानम् । वारा । द्वितीयैकवचनस्य स्थाने आकारः । वारं वरणीयम् । वन्दमाना । अत्रापि द्वितीयैकवचनस्य स्थाने आकारः । वन्दमानम् । स्तुवन्तमित्यर्थः । विवष्टु विविधं कामय ॥

वसिष्ठः । प्रेत्युपसर्गादाख्याताध्याहारः । प्रशंसामीति वा प्रशंसेति वा । सम्राजं सम्यगीशानम् । प्रशस्तं प्रकर्षेण स्तुतमग्निम् । असुरस्य । असु बलम् । तद्वतः । पुंसो वीरस्य । पौंस्यमिति हि वीर्यमुच्यते । कृष्टीनां जनानाम् । अनुमाद्यस्य अनु सन्ततं स्तुत्यस्य । इन्द्रस्येव प्रनवसः प्रवृद्धस्य । तु वृद्धौ इत्यस्माद्धातोः तवाः । एवंभूतस्य अग्नेः कृतानीति भावे निष्ठा । कर्माणि । वन्दद्वारा वन्दद्वाराणि । वन्दमाना वन्द्यमानानि । वदि अभिवादनस्तुत्योः । स्तूयमानद्वाराणि स्तूयमानानि च कविभिः कर्माणि । विवष्टु विवक्तु स्तोता । इत्यत्नानमेव निर्दिशत्यृषिः । वचेर्वर्णव्यत्ययात् विवष्टु इति रूपम् ॥　　(६)

अरण्योर्निहितो जातवेदा गर्भ इवेत्सुभृतो गर्भिणीभिः ।
दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥

विश्वामित्रस्यार्षम् । अरण्योः निहितः स्थापित इत्यर्थः । जातवेदा उत्पन्नप्रज्ञः उत्पन्नधनो वा । कथं पुनर्निहितः । उच्यते । गर्भ इव इत् । इच्छब्दः पादपूरणः । कीदृशो गर्भः । उच्यते । सुभृतः सुपुष्टः । गर्भिणीभिः । तृतीयाबहुवचनमिदं सप्तमीबहुवचनस्य स्थाने द्रष्टव्यम् ।

गर्भिणीषु । एतदुक्तं भवति । यथा गर्भः सुपुष्टः गर्भिणीषु स्त्रीषु निहितः तद्वदरण्योर्निहितो जातवेदाः । दिवे दिवे अहन्यहनि । ईड्यः जागृवद्भिः । जागरणवता प्रयत्नवन्तो लक्ष्यन्ते । प्रयत्नवद्भिरित्यर्थः । हविष्मद्भिः । पुरोडाशादीनि हवींषि येषां विद्यन्ते ते हविष्मन्तः । तैर्हविष्मद्भिः । मनुष्येभिर्मनुष्यैः ऋत्विग्यजमानैरित्यर्थः । अग्निः । पूर्वोत्तरयोरर्धर्चयोर्यत्तच्छब्दावध्याहृत्य एकवाक्यता योजयितव्या । यः अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः स दिवे दिवे ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥

विश्वामित्रः । अरण्योर्निहितो भवति । जातवेदा व्याख्यातः । सोऽग्निर्गर्भ इव सुभृतः सुष्ठु धार्यमाणः गर्भिणीभिः । इदिति पूरणः । दिवे दिवे प्रतिदिनम् । ईड्यः स्तुत्यः । जागृवद्भिः प्रबुद्धैः । जागृ निद्राक्षये इत्यस्माद्धातोः लिटः क्वसौ जागृवानिति रूपसिद्धिः । हविष्मद्भिः मनुष्येभिः मनुष्यैः । दिवे दिवे ईड्य इति संबन्धः ॥ (७)

सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः ।
अनु दह सहमूरान् कयादो मा ते हेत्या मुक्षत दैव्यायाः ॥

पायोरार्षम् । सनात् विश्वप्रभृति । त्वं हे अग्ने । मृणसि मारयसि । यातुधानान् राक्षसान् । नेत्ययं प्रतिषेधः जिग्युरित्येतेन सम्बन्धयितव्यः । त्वा त्वाम् । रक्षांसि पृतनासु सङ्ग्रामेषु । न जिग्युः न जयन्तीत्यर्थः । सर्वदा पराजेता एवमतो ब्रवीमि । अनुदह । आत्मनो ज्योतीरूपेण दह । सहमूरान् सहभूतान् मूढान् । मूर्खानित्यर्थः । कयाद् । क्रव्यशब्दस्य रेफवकारयोश्छन्दसि वर्णलोपेन कय इत्येतद्भवति । कयं ये अदन्ति ते कयादः क्रव्यादाः । तान् । मांसस्य भक्षयितॄनित्यर्थः । किंच मा ते

हेत्याः । हेतिर्वध । तस्य । मा मुक्षत अमुच्यत इत्यर्थ । दैव्यायाः देवानां स्वभूतायाः । सर्वदा देवैर्हन्यन्तामित्यर्थ ॥

पायुर्भारद्वाज॰ । सनात् चिरादारम्य । हे अग्ने त्व मृणसि हरसि । यातुधानान् राक्षसान् । मृणिर्हिंसाकर्मा । यातिर्हिंसाकर्मा । यातुर्हिंसा । यातोर्निधानभूता इति यातुं निदधति इति वा यातुधानः । न जिग्युः न जयन्ति स्म । त्वा त्वाम् । रक्षांसि पृतनासु संग्रामेषु । इदानीं च अनुदह क्रमेण दह । सहमूरान् मूढेन सहितान् । कयादः क्रव्यादः । क्रव्याच्छब्दे रेफवकारयोर्लोपः । सहमूरान् क्रव्यादो मा (ऋ. वे. १०. ८७. १९) इति बह्वृचा आमनन्ति । ते च क्रव्यादा मा मुक्षत न मुच्येरन् । ते तव । हेत्याः आयुधात् । हन्तेः हिनोतेर्वा हेतिः । दैव्यायाः देवेभ्यो हितायाः हेत्याः ॥ (८)

प्रथमस्याष्टम्या दशत्या ।

---

अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो ।
प्र नो राये पनीयसे रत्सि वाजाय पन्थाम् ॥

गयस्यार्षम् । हे अग्ने ओजिष्ठं अतिशयेन बलवत् । आभर आनय । देहीत्यर्थः । किं पुनस्तत् । उच्यते । द्युम्नं यशः अन्नं वा । कस्मै पुनर्ददामि । उच्यते । अस्मभ्यम् । हे अध्रिगो । अध्रिगुः अनिरुद्धगमनः । हविर्गृहीत्वा देवान् प्रति गच्छतो न केनचिद्गमनं निरोद्धुं शक्यं यस्य स अध्रिगुः । तस्य संबोधनम् हे अध्रिगो । अवृतगमन इत्यर्थः । प्रेत्ययमुपसर्गः रत्सीत्यास्यानेन सम्बन्धयितव्यः । न इत्येतदपि वाजायेत्यनेन सम्बन्धयितव्यः । राये पनीयसे । द्वे अप्येते चतुर्थ्यौ तृतीयैकवचनस्य स्थाने द्रष्टव्ये ।

राया धनेन हविर्लक्षणेन । कीदृशेन । उच्यते । पनीयसा अतिशयेन बहुना । तृतीयानिर्देशात् उपचरित इति वाक्यशेष । न अस्मभ्यम् । वाजाय अन्नाय । रसि । लडथ लोडर्थे द्रष्टव्य । राहि । प्रकर्षेण देहीत्यर्थ । किं पुनर्ददामि । उच्यते । पन्था पन्थानम् । येन पथा अस्मभ्य अन्नानि आगच्छन्ति त पन्थान देहीत्यर्थ ॥

अग्न ओजिष्ठमित्येषा षाडशानुष्टुमा ऋच ।
साम गजानमित्येषा वैश्वदेवी विदु र्बुधा ॥
स्तुतिमङ्गिरसामन्या आग्नेय्यस्तु चतुर्दश ।

आत्रेयो गय । हे अग्ने ओजिष्ठ आजस्विनम् । ओजसा सहितमित्यर्थ । आभर आहर । द्युम्न न अस्माकम् । अध्रिगो अप्रतगमन अप्रतिहतगते । प्रराति प्रकर्षेण विलिख । रतिर्विलेखनकर्मा । कुर्वित्यर्थ । पन्था पन्थान द्वारम् । न अस्मभ्यम् । राये धनाय । पनीयसे पन्यतराय स्तुत्यतराय श्रेष्ठतराय वाजाय अन्नाय च । एतयो प्राप्त्यर्थम् ॥ (१)

यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्य ।
आजुह्वद्धव्यमानुषक् शर्म भक्षीत दैव्यम् ॥

वामदेवस्यार्षम् । यदीत्यय अग्निमिन्धीतेत्यनेन सम्बन्धयितव्य । यदि अग्नि इन्धीत सम्यग्दीपयेत् । मर्त्य मनुष्य । किं कुर्वन् । उच्यते । आजुह्वत् आभिमुख्येन ददन् हव्य हवींषीत्यर्थ । आनुषक् आनुपूर्व्येण । यथोक्तेन क्रमेणेत्यर्थ । तत किं स्यात् । उच्यते । वीर विक्रान्त । वीर्यवानित्यर्थ । अनु स्यात् । अन्विति पादपूरण । स्याद्भवेत् । न केवल विक्रान्तो भवेत् । किं तर्हि । अग्ने समिद्धस्य प्रसादेन शर्म सुख गृह वा । भक्षीत भजेत । लभेतेत्यर्थ । कीदृश पुन शर्म लभेत । उच्यते । दैव्य देवाना स्वभूतम् ॥

वामदेवः । वीरः स्तोता । वीरयति स्तोत्राणीति वीरः । स यदि अनुष्यात् अनुभवेत् हविरादिकं अग्निम् । इन्धीत दीपयेत् समिद्भिः । मर्त्यः मनुष्यः । आजुह्वत् अभिजुह्वत् उपरि होमं कुर्वन् । हव्यं हविः । आनुषक् अनुषक्तं सन्ततम् । शर्म सुखम् । दैव्यं देवानां सबन्धि दैवैर्देयमिति वा देवानां भोग्य मिति वा । भक्षीत भजेत लभेत ॥　　　　(२)

त्वेषस्ते धूम ऋण्वति दिवि सं छुक्र आततः ।
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥

भरद्वाजस्यार्षम् । त्वेष. दीप्तः । महत्त्वं वेति लक्षणया दीप्तः । ते तव । धूमः ऋण्वति गन्छति । व्यापीभवतीत्यर्थ । दिवि सन् द्युलोकं प्राप्त इत्यर्थः । शुक्रः शुक्लवर्णः । आततः विस्तीर्ण । सूरो न । नशब्द उपरिष्टादुपचारत्वादुपमार्थीयः । सूर्य इव । हीति पादपूरणः । द्युना त्वया दीप्त्या । त्वं कृपा । अर्चतिकर्मसु पाठात् कृपिः स्तुत्यर्थः । तया कृपा स्तुत्या । स्तूयमान इति वाक्यशेष । हे पावक शोधयितः । रोचसे दीप्यसे इत्यर्थः ॥

भरद्वाजः परस्याश्च ऋषिः । त्वेषो दीप्तिः । ते तव । धूम ऋण्वति गच्छति सर्वत्र मेवात्मना परिणतः । दिवि अन्तरिक्षे । सन् भवन् । शुक्रः शोचिष्मान् । आततः विस्तीर्णः । किंच त्व सूरो न सूर्य इव । हीति पूरणः । द्युता दीप्त्या । रोचसे दीप्यसे । कृपा कृपया स्तुत्या युक्तः । स्तूयमान इत्यर्थः । हे पावक शोधक ॥　　　　(३)

त्वं हि क्षेतवद्यशोऽग्ने मित्रो न पत्यसे ।
त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥

भरद्वाजस्यार्षम् । त्वम् । हीति पादपूरणः । क्षैतवत् । क्षिति· पृथिवी । तस्यां भवं क्षैतम् । अथवा क्षि निवासगत्योरित्येतस्येदं रूपम् ।

क्षितिर्निवास । तस्य सत्रन्धि क्षैनम् । किं पुनस्तत् । गृहम् । तदस्यास्ति स क्षैतवान् । किं पुनस्तत् । उच्यते । यश कीर्ति । गृह च कीर्ति चत्यर्थ । हे अग्ने मित्रो न । नशब्द उपमार्थीय । मित्र इव देवना विशष । पत्यस । पत्यतिर्यद्यप्यन्यत्र ऐश्वर्यकर्मा तथापीह दानार्थो द्रष्टव्य । ददासि । कस्मै । स्तोतृभ्य यष्टृभ्यश्च । अथवा पत्यस इत्यैश्वर्य कर्मैव । क्षैतवद्यश इत्यपि द्वितीया अधीगर्थदयेशा कर्मणि (पा २ ३ ५२) इति षष्ठ्या स्थाने द्रष्टव्या । क्षैतवतो यशस स्तोतृणा च त्वमेव ईश्वर इत्यर्थ । त्वमेव विचर्षण विश्वस्य द्रष्ट । अथ अजम् । वसो प्रशस्य धनवन् त्वम् । पुष्टि न । नशब्द उपमार्थीय । पुष्टिमिव । यथैव स्तोतृणा यष्टृणा च पुष्टि तद्वत् अन्नमपि पुष्यसि । पुषिरन्तर्णीतण्यर्थो द्रष्टव्य । पोषयसि । वर्धयसीत्यर्थ ॥

त्व हि क्षद्र । क्षैतवत् । क्षितिरिव क्षैत निवास । तयत्तम् । यशोऽन्नम् । हे अग्ने मित्रो न मित्र इव देव । पत्यस । पत्यतिरैश्वर्यकर्मा । ईशिषे । यत्र मित्र इव सुहृत्ति । पत्यस पतसि अभिगच्छसि गृह यजमानानाम् । मित्रशब्द पुंल्लिङ्ग सुहृद्वाचा छन्दसि दृश्यते । त्व हि विचर्षण हविषि द्रष्ट । अथ अजम् । पुष्टि न पुष्टि च । पुष्यसि प्रापयसि यजमानान् । हे वसो वासक व्यापक प्रशस्य इति वा । वसित्र इति हि प्रशस्य इत्युच्यते ॥ (३)

**प्रातरग्निं पुरुप्रियो विश स्तवेतातिथि ।**
**विश्वे यस्मिन्नमर्त्ये हव्य मर्तास इन्धते ॥**

सप्तवाहप्रतिनस्यार्षम् । विश्वे यस्मिन्निति परस्तादर्धस्य श्रवणात् पूर्वमित्यर्थश्च तच्छब्दाऽध्याहर्तव्य । पाठक्रमार्थक्रमस्य बलीयस्त्वात् पूर्व द्वितीयोऽर्धर्चो व्याख्यातव्य । विश्वे सत्र । यस्मिन् अमर्त्ये मरणरहिते । हव्य हवि । मर्तास मनुष्या । इन्धते । स्वतिर्होमार्थ । जुह्वति । स

प्रातरेवाग्निः । पुरुप्रियः बहूनां यजमानानां प्रियः । विश॰ । प्रथमा-बहुवचनमिदं तृतीयाबहुवचनस्य स्थाने द्रष्टव्यम् । विड्भिर्यजमानमनुष्यैः । स्तवेत । लिङयं लडर्थे द्रष्टव्य॰ कर्मणि च । विड्भि॰ स्तूयते । अतिथिः अतिथिस्थानीयो यजमानानाम् । विश्वे सर्वे यजमानाः । यस्मिन् अग्नौ । अमर्त्ये मरणवर्जिते । हव्यं मर्तासः मनुष्या । इन्धते । इन्धी दीप्तौ दीपयन्ति हविर्भि. ॥

सूक्तयाहः दितः । प्रातः प्रातःकाले । स्तवेत स्तूयेत युष्माभिः । हे स्तोतारः अग्निः पुरुप्रियः पुरूणां बहूनां देवानां यजमानानां वा प्रियः । विशः जनस्य सर्वस्य अतिथिः अतिथिरिव पूज्यः । विश्वे मर्तासः मनुष्याः । यस्मिन्नग्नौ अमर्त्ये अमरणधर्मिणि । हव्यमिन्धते प्रकाशयन्ति । क्षिपन्तीत्यर्थः ॥　　(४)

यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥

वसूयव ऋषय॰ । नेषामार्षम् । ऋत्विजां प्रैषणं स्तुतिरूपम् । यत् वाहिष्ठं अतिशयेन वोढारम् । अग्नेर्गुणाना अतिशयेन प्रापकमित्यर्थः । तत् । तृतीयाया अत्र लुक् । तेन स्तुतिरूपेण अग्नये । चतुर्थ्येकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । अग्निम् । कीदृशेन रूपेण । उच्यते । बृहत् । तृतीयाया अत्र लुक् । बृहता महता । अर्च पूजय । स्तुहीत्यर्थः । विभावसो । वसु धनम् । तत् विविधं भाति दीप्यते यस्य स विभावसुः । तस्य सम्बोधनं हे विभावसो । विविधदीप्तधन । कस्मात्पुनः स्तौमि । उच्यते । यस्मात् त्वद्रयिः । त्वदित्यत्र तृतीयाया लुक् । सहयोगलक्षणा तृतीया । त्वया सह धनम् । त्वद्वाजा त्वया सह वाजानि अन्नानि । उदीरते । उदित्येष समेत्येतस्य स्थाने । ईरयतिः गत्यर्थः । समीरते सङ्गच्छन्ति ।

एतदुक्तं भवति । यस्मादग्निना दत्तं धनं अन्नं च त्वया सगच्छते तस्मा दग्निना दत्तेन धनेन अन्नेन च त्वमीश्वरोऽसीत्यर्थः । कथं पुनर्धनमन्नानि च त्वया सगच्छन्ते । उच्यते । महिषीव । यथा राजभार्या तनैव राज्ञा सह सगच्छत तद्वत्सगच्छत इत्यर्थ ॥

अत्रिपुत्रा वसूयव । अत्र प्रथम पाद परोक्षस्तुति । शेष प्रत्यक्ष स्तुति । यत् स्तोत्रम् । वाहिष्ठ वोढृतमम् । स्तोत्रेण हि देवा आनीयन्ते । तत् अग्नये प्रेरयाम इति शेष । बृहत् ब्रह्मेत्यर्थ । ब्रह्मेत्यन्नस्यापि नाम । अन्न अर्च प्रयच्छ अस्मभ्यम् । अनेकार्था हि धातवो भवन्ति । हे विभावसो । महिषा । महिषशब्दो महन्नाम । महती । रयि धनम् । त्वत् त्वत्त । उदीरत इति उपरि श्रुतमिह विपरिणत सबध्यते । उदीरत उद्गच्छति । इवेति पादपूरण । त्वदेव वाजा अन्नानि उदीरते उद्गच्छन्ति ॥ (६)

विशोविशो वो अतिथिं वाजयन्त पुरुप्रियम् ।
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभि. ॥

गोपवनस्यार्षम् । विट इति मनुष्यनाम । तस्मादिय षष्ठी । वीप्सायां च द्विर्वचनम् । मनुष्यस्य मनुष्यस्य । सर्वमनुष्याणामित्यर्थ । व । बहुवचनमिद एकवचनस्य स्थाने द्रष्टव्यम् । त्वाम् । अतिथिमतिथि स्थानीयम् । वाजयन्त । बहुवचनमिद एकवचनस्य स्थाने द्रष्टव्यम् । वाजयन् । पूजयन्नित्यर्थ । कीदृश त्वाम् । पुरुप्रिय बहूना यजमानाना इष्टम् । अग्निम् । व त्वा दुर्यं यज्ञ गृहद्वार भवम् । स्तुषे स्तौमि । कन पुन स्तौमि । उच्यते । वच वचसा । तथा शूषस्य बलस्य । मन्मभि स्तुतिभि । बलसम्बन्धिनीभि स्तुतिभिरित्यर्थ ॥

गोपवन । विशो विश सर्वस्यापि विश जनस्य । अतिथि पुरुप्रिय अग्नि व यूयम् । वाजयन्त अन्नमिच्छन्त । परिचरन्त इति शेष । अग्नि

दर्यं गृह भवम्। व युष्मदर्थम्। स्तुषे स्तुव। वच वचाभि। तृनाया बहुवचनस्य लुक्। मन्मभि स्तुतिसाधनैः। मनि स्तुतिरूमा। शूषस्व शूषाय। सुखार्थम् ॥ (७)

बृहद्वयो हि भानवेऽर्चा देवायाग्नये।
य मित्र न प्रशस्तये मर्तासो दधिरे पुर ॥

पूर्गेरार्षम्। बृहन् महत्। वय अन्नम्। हीति पादपूरण। अर्च पूजय। सत्कुर्वित्यर्थ। हे ऋत्विक। मानवे दवाय अग्नय। त्राण्येतानि तादर्थ्यचतुर्थ्यन्तानि। दीप्तिमत देवस्य अग्नेरर्थायत्यर्थ। कीदृशस्य अग्नेरर्थाय महदन्न सत्करोमि। उच्यत। यमग्नि मित्र न मित्रमिव। प्रशस्तये। चतुर्थ्येकवचनमिद तृतीयाबहुवचनस्य स्थाने द्रष्टव्यम्। प्रश स्तिभि स्तुतिभि। स्तुवत इति वाक्यशेष। मर्तास मनुष्या। दधिर धारयन्ति। स्थापयन्तीत्यर्थ। क पुन स्थापयन्ति। उच्यते। पुर पूर्वस्या दिशि आहवनीयात्मना ॥

पूरुरात्रेय। बृहत् वय अन्न हविर्लक्षणम्। हाति पूरण। भानवे दाप्ताय अग्नये। देवाय दानादिगुणकाय। अर्च प्रयच्छ। य अग्नि मर्तास मनुष्या। पुरो दधिर पुरस्कुर्वन्ति। प्रशस्तये प्रकृष्टस्तुत्यर्थम्। प्रकर्षेण अस्मदर्थ देवान् स्तौति अग्नि इति। मित्र न सखायमिव कार्यसाधनार्थम् ॥ (८)

अगन्म वृत्रहन्तम ज्येष्ठमग्निमानवम्।
य स्म श्रुतर्वन्नार्क्ष्ये बृहदनीक इध्यते ॥

गोपवनस्यार्षम्। अगन्म। गमिरय शुद्धोऽपि उपपूर्वार्थो द्रष्टव्य। उपगच्छाम। आश्रयाम इत्यर्थ। कम्। अग्निम्। कीदृशमग्निम्। वृत्रहन्तम शत्रूणा हन्तारम्। ज्येष्ठ अतिशयेन प्रशस्य अतिशयेन वा

वृद्धम् । आनवम् । अनुर्मनुष्य । तस्यापत्यम् । मनुष्येण हि मन्थनेन अग्निर्मथ्यते । तेनासौ आनव । त आनव मनुष्यस्यापत्यम् । किं च य स्म इत्यत्र द्वितीयाया लुक । स्मेति पादपूरण । य अग्निम् । श्रुतर्वन् । आमन्त्रितैकवचनमिद प्रथमैकवचनस्य स्थाने द्रष्टव्यम् । श्रुतर्वा नाम ऋषि । आक्ष्य । आर्क्ष्य ऋक्षस्य पुत्र । तस्मिन्नार्क्ष्य । बृहत् महत । अत्रापि वचनान्तर अस्य । प्रधानतम इत्यर्थ । इध्यत । कर्तर्येव व्यत्ययेन द्रष्टव्य । इन्धन । सन्दीपयती यर्थ । वृत्रहन्तम ज्येष्ठ अग्नि आनव य च श्रुतर्वा ऋषि इन्धन त वय आश्रयाम इति समस्तार्थ ॥

गायत्रन । अगन्म अगमाम उपगच्छाम वयम । वृत्रहन्तम अतिशयेन तमोहन्तारम् । ज्येष्ठ प्रशस्यतम अग्निम् । आनवम् । अनवा मनुष्या । तस्य हितम । य अग्नि । स्मेति इध्यते इन्धनेन मनुष्यत । श्रुतरवन् श्रुतवर्णि राज्ञि । आर्क्ष्य ऋक्षपुत्रे । बृहदनीक बृहत्तेजा । इध्यते स्म एध्यत । स्मयोगात् भूते अथ लट् ॥ (९)

जात परेण धर्मणा यत्सवृद्भि सहाभुव ।
पिता यत्कश्यपस्याग्नि श्रद्धा माता मनुः कवि ॥

वामदेवस्यार्षम् । जात उत्पन्न । परेण उत्कृष्टेन । धर्मणा कर्मणा यागाख्येन निमित्तभूतेन । कीदृश पुनरग्निस्तत्र उत्कृष्टेन कर्मणा निमित्त भूतेन । उच्यते । यत् । नपुसकमिद व्यत्ययेन पुल्लिङ्गस्य स्थाने द्रष्टव्यम् । य अग्नि । सवृद्भि । सह य वर्तन्ते गच्छन्ति ते सवृत । तै सवृद्भि । सहयोगलक्षणैषा तृतीया । सहगामिभि सह । आभुव । येनैव कर्मणा निमित्तभूतेन उत्पन्नस्तस्मिन्नेव कर्मणि सहगमनैर्देवै सह आभिमुख्येन भवतीत्यर्थ । य कीदृश अग्नि । उच्यते । पिता पालयिता । यत् य ।

रुद्ररूपस्य रूप । अग्नि श्रद्धा सत्यस्य धारयिता । माता वृष्टिप्रदानद्वारेण सर्वस्य जगत निर्माता । मनु ज्ञाता अधिकारस्य भक्तताया अभक्तताया वा । कविर्मेधावी । एवलक्षणोऽग्नि नोऽस्मभ्य धनप्रद सर्वकामप्रद पुत्र पौत्रप्रदश्च ॥

वामदेव । जातोऽसि त्वम् । परेण उत्कृष्टेन । धमणा कर्मणा हविर्वह नादिना सार्धम् । यत् यदा । सत्रद्धि सहवर्तमाने छन्दोभि । सह असुर अनायासा । कश्यपस्य अग्नि इत्यतया पठया विभक्त्या परस्पर व्यत्यय । यत् यस्मिन् जन्मनि । अग्न कश्यप पिता आसात् । श्रद्धादेवी माता । मनु वैवस्वत । कवि । कवत इन्द्रकर्मण कवि । स्तोता आसात् । तदा त्व परेण धमणा जात ॥ (१०)

प्रथमस्य नवम्या दशत्या

---

सोमं राजानं वरुणमग्निमन्वारभामहे ।
आदित्यं विष्णुं सूर्यं ब्रह्माणञ्च बृहस्पतिम् ॥

तापसस्यार्षम् । सोमम् । कीदृश सोमम् । उच्यते । राजानम् । वरुण अग्नि च । अन्वारभामहे आश्रयाम इत्यर्थ । न केवल एतानेव देवताविशेषान् आश्रयाम । किं तर्हि । आदित्य च विष्णु च सूर्य च ब्रह्माण च बृहस्पतिं च ॥

अग्निस्तापस । सोम राजान वरुणमग्निमन्वारभामहे आलम्बामहे आश्रि तत्वेन । आदित्यमदितेः पुत्रम् । विष्णु त्रिविक्रमम् । सूर्य ब्रह्माण च इति

बृहस्पतेर्विशेषणम् । परिवृढ सर्वैः गुणैः इति बृहस्पतिर्ब्रह्मा । ब्रह्मसदन आसिष्यत इति निगमः । अथवा ब्रह्माण च देवाना बृहस्पति च अन्वारभामहे ॥ (१)

इत एत उदारुहन् दिव पृष्ठान्यारुहन् ।
प्रभूर्जयो यथा पथा द्यामङ्गिरसो ययुः ॥

वामदेवस्यार्षम् । इत पृथिवीलोकात । एते उत् आरहन् ऊर्ध्वं आरोहन्ति । क पुन आरोहन्ति । उच्यते । दिव पृष्ठानि द्युलोकस्य सम्बन्धीनि यानि विशिष्टस्थानानि तानि । आरुहन् । कीदृशानि पुनर्द्यु लोकस्य सम्बन्धीनि विशिष्टस्थानानि आरोहन्ति । उच्यते । प्रभूर्जय । भू पृथिवी । ता ये पशुकर्मादिभि कर्मभि महावीराख्येन च कर्मणा प्रकर्षेण जितवन्त ते प्रभूर्जय । कथ पुनर्दिव पृष्ठानि आरोहन्ति । उच्यते । यथा पथा यो य तेषा पन्था तेन पथा कर्मणा । यथाबलमि त्यर्थ । एवमुक्तेन मार्गेण । उत । उदित्येष ययुरित्यनेन सम्बन्धयितव्य । द्या द्युलोकम् । अङ्गिरस ऋषय । उदयु ऊर्ध्वं गतवन्त ॥

वामदेवः द्रष्टा । इतो लोकात् । एते अङ्गिरसः । उदारुहन् ऊर्ध्वं आरुहन् यज्ञाद्यनुष्ठानैः । किमारुहन् । तदाह । दिवो लोकस्य । पृष्ठानि उपरि-भागान् । आरुहन् । प्र प्रकर्षेण । भूर्जयः । भूर्जेतः पाककर्मणः भूर्जय इति रूपम् । हविषा पक्तारः अङ्गिरसः । उत् ऊर्ध्वा सन्तः । द्या दिव लोकम् । ययुः जग्मु । यथा पथा मार्गेण ऋजुना यथा ग्रामादीन् यान्ति तथा । बहुषु मन्त्रेषु ब्राह्मणेषु च अङ्गिरसा इतो लोकात् स्वर्गगमन इन्द्रसाहचर्य च श्रूयते ॥ (२)

राये अग्ने महे त्वा दानाय समिधीमहि ।
ईडिष्वा हि महे वृषन द्यावा होत्राय पृथिवी ॥

वामदेवस्यार्षम् । राये महे । द्वे अप्येते षष्ठ्यन्ते द्रष्टव्ये । राय महतः । महत धनस्येत्यर्थं । दानाय दानार्थम् । त्वा हे अग्ने समिधीमहि संदीपयाम इत्यर्थं । किं च ईडिष्व स्तुहीत्यर्थ । हीति पादपूरण· । महे होत्राय । हूयने तदिति होत्रं होमद्रव्यम् । द्वे अपि चैने तादर्थ्ये चतुर्थ्यौ । महतो होमद्रव्यस्यार्थायेत्यर्थ । होमग्रहण चात्र प्रदर्शनार्थम् । सर्वासा दानादिक्रियाणा सम्बन्धिनो द्रव्यस्यार्थायेत्यर्थ । हे वृषन् वर्षितः । के पुनः स्तौमि महतो होमद्रव्यस्यार्थाय । उच्यते । द्यावापृथिवी द्यावापृथिव्यावित्यर्थ । एतदुक्तं भवति । होमादिक्रियार्थं द्रव्य द्यावापृथिव्यावपि दत्तमित्यर्थ ॥

राये धनाय । महे महते । षष्ठ्यर्थे चतुर्थी । महतो धनस्य हविषः दानाय । अथवा अस्मभ्य धनस्य दानाय । हे अग्ने त्वा समिधीमहि सन्दीपयामः समिद्भिः । ईडिष्व स्तुहि त्वम् । हि इति पूरणः । महे महते । होत्राय यज्ञाय । हे वृषन् वर्षितः । द्यावा पृथिवी इति परस्परापेक्षया द्विवचनम् । प्र मित्रयोर्वरुणयोः (ऋ. वे. ७. ६६. १) इति यथा । दिव च पृथिवीं च स्तुहि ते उभे हविषा प्रीणयितुम् ॥ (३)

दधन्वे वा यदीमनु वोचद्ब्रह्मेति वेरु तत् ।
परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत् ॥

सोमाहुतेरार्षम् । दधन्वे धारयति । अश्रुतस्य धारणं न संभवति । अतः धारणेनात्र श्रवणं लक्ष्यते । शृणोतीत्यर्थः । क । अग्नि । वा इति पादपूरणः । किं पुन· शृणोत्यग्निः । उच्यते । यत् । ई अनु । द्वावपि पादपूरणौ । मदीयोऽन्तरात्मा वोचत् अवोचत् उक्तवान् । एतदुक्तं भवति । यदस्मदीयोऽन्तरात्मा स्तुतिरूपमुच्चारयति तदयमग्निः शृणोतीत्यर्थः । किं च ब्रह्म हविर्लक्षणान्यन्नानि । वेः । मध्यमपुरुषैकवचनमिदं प्रथमपुरुषैक-

वचनस्य स्थाने द्रष्टव्यम् । वेत्ति । जानातीत्यर्थः । उ तत् । अपि च परि । परीत्ययं अभुवदित्यनेन सम्बन्धयितव्यः । परिपूर्वश्च भवतिः परिग्रहे वर्तते । किं पुन परिगृह्णाति । उच्यते । विश्वानि सर्वाणि । काव्या काव्यानि श्रुतिवचांसि हव्यानि वा । किमिव परिगृह्णाति । उच्यते । नेमिः चक्रमिव । रथचक्रस्य अन्त्याफलहकपाटिका नेमिरुच्यते । सा यथा रथचक्रं परिगृह्णाति तद्वत्परिगृह्णातीत्यर्थः ॥

भार्गवः सोमाहुतिः । दधन्वे धारयति हवींषि यजमानः । ईं एनम् । अनु उद्दिश्य । वाशब्दः समुच्चये । यच्च इद वचः वोचत् ब्रवीति । ब्रह्मा ब्रह्माणि स्तोत्राणि । शेः छन्दसि (पा. ६. १. ७०) इति शेः लुक् । इतिशब्दः प्रकारे । एवप्रकाराणि अन्यान्यपि समिन्धनादीनि करोति इति यत् तत् सर्वं वेः वेत्ति । उ एव । अग्नि इति शेषः । किंच पर्यभुवत् । परिपूर्वो भवति परिग्रहार्थः । परिगृह्णाति व्याप्नोति । विश्वानि काव्यानि कवेः आत्मनः कृत्यानि । नेमिः चक्रमिव यथा चक्रस्य नेमिः बाह्यवलय चक्र परिगृह्णाति तद्वत ॥ (४)

**प्रत्यग्ने हरसा हरः शृणाहि विश्वतस्परि ।**
**यातुधानस्य रक्षसो बलं न्युब्ज वीर्यम् ॥**

पायोरार्षम् । प्रतीत्यय शृणाहीत्याख्यातेन सम्बन्धयितव्य । हे अग्ने । हरसा स्वेन ज्योतिषा । य अस्मान् हिनस्ति तस्य यत् हर ज्योति । तत् प्रतिशृणाहि प्रहिंमेत्यर्थ । विश्वत सर्वत । परीति पादपूरणः । किं च यातुधानस्य यातुधाननाम्न । रक्षस स्वभूतम् । बलं सेनालक्षणम् । न्युब्ज आत्मीयेन बलेन ऋजुं कुरु । न केवलं बलम् । किं तर्हि । वीर्यं शारीरं च यद्बलं मन्त्रौषधिलक्षणं वा तदपि ऋजुं कुर्वित्यर्थ ॥

पायुः । प्रतिशृणाहि । शॄ हिंसायाम् । हे अग्ने हरसा बलेन स्वेन । हरः हरणशीलं रक्षः । विश्वतः सर्वतः । परि परिगतम् । यातुधानस्य ।

यत्तुर्हिसा। हिंसाया निदानभूतस्य विधातुः वा। रक्षस. राक्षसस्य। रक्षित-
व्यमस्मदादीनि इति रक्षः इति। वल न्युब्ज नितरा बाधस्व। वीर्यं च तस्य
न्युब्ज। उब्जतिर्वधकर्मा ॥　　　　(५)

त्वमग्ने वसूॅं रिह रुद्रॉं आदित्यॉं उत।
यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥

प्रस्कण्वस्यार्षम्। हे अग्ने। वसून् देवताविशेषान्। इह मम
यज्ञे। रुद्रान् आदित्यान् उत अपि। यज। न केवलं एतानेव देवतावि-
शेषान् यज। किं तर्हि। स्वध्वरं शोभनयज्ञम्। जनं देवजनम्। कीदृशं जनम्।
उच्यते। मनुजातम्। मनु प्रजापति। तस्य सकाशाद्यो जातः स
मनुजात। तं मनुजातम्। प्रजापते· सकाशाज्जातमित्यर्थ। घृतप्रुषम्।
घृतमुदकम्। तत य प्रुषति सिञ्चति रक्षति स घृतप्रुट्। तं गृतप्रुषम्।
उदकस्य वर्षितारमित्यर्थ। अथवा आज्यं घृतम्। तेन य प्रुष्यते सिच्यते
इज्यते स घृतप्रुट्। तं घृतप्रुषम। घृतेन यष्टव्यमित्यर्थ ॥

इति माधवाचार्यकृते छन्दसिकाभाष्ये प्रथम. प्रपाठक.

प्रस्कण्वः काण्वः। त्व हे अग्ने वसून् देवान्। इह यज्ञे। रुद्रान
आदित्यान् उत अपि। यज प्रीणय हविर्भि। स्वध्वर शोभनै यज्ञैः यजनीयम्।
जन जनसमूहम्। दैव्य देवसबन्धिनम। मनुजात मनुष्येषु प्रादुर्भूतम्। घृतप्रुष
घृत प्रति क्षरन्त गच्छन्तम्। प्रुषिः क्षरतिकर्मा। स्वध्वर जनमिति स्वादीनामेव
शब्दान्तरेण अभिधानम् ॥　　　　(६)

प्रथमस्य दशमी दशत्या

प्रथम. प्रपाठक.

---

## द्वितीयः प्रपाठकः

पुरु त्वा दाशिवां वोचेऽरिरग्ने तव स्विदा ।
तोदस्येव शरण आ महस्य ॥

दीर्घतमस आर्षम् । पुरु बहु हवि । त्वद्देवत्यं अन्यदेवत्यं च । दाशिवान् तुभ्यं ददत् । त्वां वोचे ब्रवीमि । सामर्थ्यादागच्छेति । आह्वयामीत्यर्थः । कस्मात्पुनः आह्वयामि । उच्यते । यस्मात्त्वं अरिः ईश्वर सर्वहविषां त्वद्देवत्यानां अन्यदेवत्यानां च । त्वय्येव हूयमानत्वात् । अहमपि च दीर्घतमा नाम ऋषिः । हे अग्ने । तव । स्वित् आ इत्येतौ निपातौ एवशब्दस्यार्थे द्रष्टव्यौ । तवैव स्वभूतः । कथम् । उच्यते । तोदस्येव । तोदशब्देनात्र गृहस्थ उच्यते । गृहस्थस्येव । महस्य महतः स्वभूते । शरणे गृहे यावत् किंचित्सर्वस्वं भवति तद्वदहमपि तव स्वभूतः ॥

उष्णिहोऽष्टादशाग्नेय्यः पुरुत्वेत्यत्र पञ्चमी ।
पावमानी ततः पश्चादुतस्येत्यदितेः स्तुतिः ॥
अथान्या ककुभस्ता अप्युष्णिग्भेदा इति स्थितिः ।

दीर्घतमा औचथ्यः । पुरु बहु हविः । दाशिवान् । दाशतेः । दाशिवान् प्रयच्छन् । अहं त्वा त्वाम् । वोचे स्तौमि । वचेरिदं रूपम् । अरेररिः । गच्छन् अन्या देवताः । अन्यदेवताभ्य आहुतीः प्रयच्छन् इत्यर्थः । तव ।

स्वित् एवार्थ । तवैव दाशिवान् भवतीत्यर्थ । आ इति अभि इत्यर्थे । व्यवहिते नापि वोच इत्यनेन सबध्यते । अभिवोचे इति । तौदस्य । तौदो गृहस्थ । तुद्यते परिजनैरिति । यद्वा तुदति दधाति धनानि इति । तस्य इव शरणे गृहे । आ आगत जन । महस्य । महतेदानकर्मण । महतो दातुर्गृहे आगतो धनार्थी यथा त स्तौति तद्वत् त्वा वोचे ॥ (१)

प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् ।
विपा ज्योतींषि बिभ्रते न वेधसे ॥

विश्वामित्रस्यार्षम् । प्रेत्ययमुपसर्गो भरत इत्याख्यातेन सम्बन्धयितव्य । होतृशब्द आह्वातृवचन । तस्मादिय तादर्थ्यचतुर्थी । अग्नय इत्येतदपि तादर्थ्यचतुर्थ्यन्त होत्रे इत्यतेन समानाधिकरणम् । तेनायमर्थ । देवानामाह्वातुरग्नेरर्थाय । पूर्व्यं पूर्वं चिरन्तनम् । अकृतकमित्यर्थ । वच स्तुतिलक्षण वचनम् । मदीया ऋत्विज पुत्रादयो वा प्रभरत प्रहरत प्रापयत । प्रोच्चारयतेत्यर्थे । कीदृश पुनर्वचन प्रोच्चारयाम । उच्यते । बृहत् दीर्घमित्यर्थ । विपा व्याप्तृणाम् । कस्य । सामर्थ्यात्तमसाम् । ज्योतींषि । द्वितीयाबहुवचनमिद षष्ठीबहुवचनस्य स्थाने द्रष्टव्यम् । ज्योतिषाम् । बिभ्रते धारयित्रे । इदमपि तादर्थ्ये चतुर्थी । तमसा व्याप्तृणा ज्योतिषा धारयितुरर्थाय । ज्योतिष्मत अग्नेरर्थायेत्यर्थ । न वेधसे । इयमपि तादर्थ्ये चतुर्थी । नकार पादपूरण । मेधाविन अग्नेरर्थाय इत्यर्थ ॥

विश्वामित्र । प्रभरत प्रणयत । होत्रे अग्नये । पूर्व्यं पुरातनम् । वचः मन्त्ररूपम् । बृहत् महत् । विपा वाचा विप्राणा वा । ज्योतींषि बिभ्रते धारयते पोषयते । वेधसे विधात्रे । नेति सम्प्रत्यर्थे ॥ (२)

अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
अस्मे देहि जातवेदो महि श्रवः ॥

गोतमस्यार्षम् । हे अग्ने वाजस्य अन्नस्य । कीदृशस्यान्नस्य । उच्यते । गोमत गोभि सहितस्य । त्वं ईशान ईश्वर इत्यर्थ । हे सहस यहो बलस्य पुत्र । यत एवमतो ब्रवीमि । अस्मे अस्मभ्यम् । देहि धेहि । हे जातवेद जातप्रज्ञान उत्पन्नधन वा । किं पुनर्ददामि । उच्यते । महि महत् । श्रव अन्न कीर्ति वा ॥

गौतम । हे अग्न वाजस्य अन्नस्य । गोमत गामहितस्य । ईशान. त्वम् । हे सहसो यहो बलस्य पुत्र । यहुः पुत्र । बलान्मथ्यमानो विजायते (ऐ. ब्रा. ८. २८) इति हि ऐतरेयकम् । अस्मे अस्मभ्यम् । देहि प्रयच्छ । हे जातवेद । महि महत् । श्रव अन्नम् ॥ (३)

अग्ने यजिष्ठो अध्वरे देवान् देवयते यज ।
होता मन्द्रो विराजस्यति स्रिधः ॥

विश्वामित्रस्यार्षम् । हे अग्ने । यजिष्ठ इत्येतद्धोता मन्द्रो विराजति इत्यनेन सम्बन्धयितव्य । अध्वरे यज्ञे । देवान् इन्द्रादीन् । देवयते । देवान् यष्टुमिच्छति य स देवयति । तस्मै देवयते । तादर्थ्यलक्षणेषा चतुर्थी । देवान् यष्टुमिच्छत ममार्थाय । यज । एवमयमर्धर्चे आमन्त्रण योगान्मध्यमपुरुषयोगाच्च प्रत्यक्षकृतो मन्त्र । न च यजिष्ठ होता मन्द्र इत्येवमादीनि आमन्त्रितानि । अतो यत्तच्छब्दाध्याहृत्यैकवाक्यता नेयानि । यस्त्वं यजिष्ठ अतिशयेन यष्टा । यश्च होता आह्वाता । यश्च त्वं मन्द्र स्तुत्य । यश्च त्वं विराजसि विविध दीप्यसे । कथं पुन राजसि । उच्यते ।

अति सृध अतीत्य शोषयितॄन् रक्षःपिशाचादीन् । स देवान् यष्टुमिच्छतो ममार्थाय देवान् यज ॥

विश्वामित्रः । हे अग्ने यजिष्ठ' यष्टृतम त्वम् । अध्वरे अस्मिन् । देवान् यज देवयते देवानिच्छते यजमानाय । होता आह्वाता देवानाम् । मन्द्रः । मदेः स्तुतिकर्मणः । स्तुत्यः त्वम् । सृधः हिंसकान् शत्रून् । अति अतीत्य विराजसि ॥ (४)

जज्ञानः सप्त मातृभिर्मेधामाशासत श्रिये ।
अयं ध्रुवो रयीणां चिकेतदा ॥

त्रितस्यार्षम् । जज्ञान' । प्रथमैकवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । जज्ञानस्य । यजमानस्येत्यर्थ । सप्त मातृभि । तृतीयाबहुवचनमिदं प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् । सप्तसङ्ख्याका मातर निर्मातार आदित्याद्या । अथवा सप्त मातर सप्त छन्दांसि । अथवा सप्त होत्रा । अथवा सप्त सोमसंस्था । ताभि सप्त मातृभि । मेधा प्रज्ञाम् । आशासत प्रार्थितवन्त इत्यर्थ । किमर्थम् । उच्यते । श्रिये तस्यैवाग्ने श्रियोऽर्थम् । न केवलं मेधा प्रार्थितवन्त । किं तर्हि । अयमग्नि । ध्रुव शाश्वत । नित्य इत्यर्थ । रयीणा धनानां च । दाता भवत्विति वाक्यशेष । किमेवमज्ञात्वैव दाता भवतु । उच्यते । आचिकेतत् आभिमुख्येन चिकेतत् । जानात्वित्यर्थ । यस्य यावद्दातव्यम् । अथवा यानि द्रव्याणि जानाति तेषा सर्वेषा दाता भवत्वित्येतत्प्रार्थयते ॥

त्रितः । जज्ञानः जनितः अभिषुतः । जनेर्लिटः कानचि रूप जज्ञान इति । सप्त सप्तभिः सर्पणशीलाभिः । मातृभि' अद्भिः । वसतीवरीभिः ससृष्टाः अभिपूयन्ते सोमाः । मेधा प्रज्ञा यज्ञादिविषयाम् । आशासत आशास्ति विधत्ते ।

यजमानाना श्रिये श्र्यर्थम् । अयं ध्रुवो निश्चलः सोमः । रयीणा धनानाम् । धनानीत्यर्थः । आचिकेतत् । अभिज्ञापयतु प्रकाशयतु । प्राणा शिशुर्महीनाम् (सा वे. ६. ८. ९) इति पावमानात् सूक्तात् एषा उद्धृता ॥　　　　　(५)

**उत स्या नो दिवा मतिरदितिरूत्या गमत् ।**
**सा शंताता मयस्करदप स्रिधः ॥**

हरिम्बिठिर्नाम ऋषि । तस्येदमार्षम् । उत अपि अमे प्रसादेन स्य स्याम । न अस्माकम् । षष्ठीनिर्देशाज्जने इति वाक्यशेष । दिवा अहनि । मतिर्ज्ञात्री । अदितिर्देवमाता । कीदृशी देवमाता । उच्यते । ऊती पालयित्री । आगमत् आगच्छत् । एत्य च सा शंताता । शं सुखम् । तत् या करोतीति शिवशमरिष्टस्य करे (पा. ४. ४. १४३) इत्येवं तातिप्रत्ययः । शंताता सुखस्य कर्तृ इत्यर्थ । मयस्करत् सुखं करोतु । कथं पुन सुखं करोतु । उच्यते । अप स्रिधः अप शोषयितॄन् रक्षःपिशाचादीन् । घ्नन्तीति वाक्यशेष ॥

हरिम्बिठिः । उतेत्ययं दिवेत्यस्योपरि संबन्धनीयः स्यात् । त्यच्छब्दोऽपि तच्छब्देन समानार्थः । तस्य प्रथमैकवचने रूपं स्येति । प्रसिद्धा सा देवाना माता । नः अस्मान् । दिवा उत दिवापि । नक्तमपीति अपिशब्दात् ज्ञायते । अदितिर्नो दिवा पशुमदितिर्नक्तमद्वयाः (ऋ. वे. ८. १८. ६) इति पूर्वस्यामृचि विद्यते । मतिः मननीया स्तुत्या । अदितिः देवी । ऊती ऊत्या रक्षया सह । आगमत् आगच्छतु । सा अदितिः शंताता शंतातौ शंकरे यज्ञे । शिवशमरिष्टस्य करे (पा. ४. ४. १४३) इति शंशब्दात् तातिप्रत्ययः । मयः सुखम् । करत करोतु । अपबाधता स्रिधः हिंसकान् शत्रून् ॥　　　　　(६)

**ईडिष्वा हि प्रतीव्यं यजस्व जातवेदसम् ।**
**चरिष्णुधूममगृभीतशोचिषम् ॥**

विश्वमनस आर्षम् । हे मदीय अन्तरात्मन् । अग्निं ईडिष्व । स्तुहीत्यर्थ । हीति पादपूरण । कीदृशमग्निम् । उच्यते । प्रतीव्यं महाभूतत्वात्सर्वगतम् । न केवलं स्तुह्येव । किं तर्हि । यजस्व यज च । कीदृशमग्निम् । उच्यते । जातवेदसमुत्पन्नज्ञानं उत्पन्नधनं वा । चरिष्णु धूमम् । चरणशील चरिष्णुर्धूमो यस्य स चरिष्णुधूम । तं चरिष्णुधूमम् । अगृभीतशोचिषम् । हृग्रहोर्भश्छन्दसि हस्य (वा ८ २. ३२) इति हकारस्य भकार । अगृहीता अनिरुद्धा अप्रतिरुद्धा दीप्तिर्यस्य सोऽगृहीत शोचि । तं अगृहीतशोचिषम् । अगृहीतदीप्तिमित्यर्थ ॥

द्वयोर्विश्वमना वैयश्व । यजस्व जातवेदसमग्निमिति ऋषिरात्मानमेव प्रेषयते । चरिष्णुधूम चरणशील धूमम् । अगृभीतशोचिष अगृहीतार्चिष कैश्चिदपि ॥ (७)

**न तस्य मायया चन रिपुरीशीत मर्त्यः।**
**यो अग्नये ददाश हव्यदातये ॥**

विश्वमनस आर्षम् । न तस्य यजमानस्य । मायया प्रज्ञया च । नशब्द पादपूरण । रिपु शत्रु ईशीत । लडर्थे लिङ्प्रत्यय । ईशीत इशते । मर्त्य मनुष्य । य किं करोति यजमान । उच्यते । य अग्नये ददाश ददाति । किम् । सामर्थ्याद्धवींषि । कथ पुनर्ददाति । उच्यते । हव्यदातये । चतुर्थ्येकवचनमिद तृतीयाबहुवचनस्य स्थाने द्रष्टव्यम् । हव्यदातिभि हविर्दानै । एतदुक्त भवति । हविषा यानि दानानि याज्यानुवाक्यवन्ति तैर्यो ददाति । य अग्नये यागं करोतीत्यर्थ ॥

तस्य यजमानस्य । न ईशीत मर्त्य. नर. । न नियामको भवेत् । मायया वञ्चनेन । चनेति चार्थे । रिपुः शत्रुः मर्त्य । यो जन अग्नये च ददाश ।

दाशतिर्दानकर्मा प्रीणनकर्मा च । प्रीतिमुत्पादयति स्तोत्रैः । हव्यदातये हव्य दानार्थम् ॥　　(८)

अप त्यं वृजिनं रिपुं स्तेनमग्ने दुराध्यम् ।
दविष्ठमस्य सत्पते कृधी सुगम् ॥

ऋजिश्वन आर्षम् । अपेत्युपसर्गश्रवणात् त्यमिति च कर्मश्रुत क्रियापदमध्याह्रियते । अपनय । त्यम् । त्यशब्दस्तच्छब्दपर्याय । त च्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्य । यदस्मासु व्यवस्थितं तत् वृजिनं पापम् । रिपुं शत्रु च । स्तेनं चोरं च । दुराध्यम् । कुत्सितं आभिमुख्येन ध्यान यस्य स दुराध्य । त दुराध्यं कुत्सितध्यानम् । पापसङ्कल्पमित्यर्थ । किं च दविष्ठं अतिशयेन दूरवन्तम् । अत्यन्तं दूरस्थमित्यर्थ । अस्य च रिपो स्तेनस्य च । सत्पते सता पालयितः । कृधि कुरु । किं पुनर्दूरस्थं करोमि । उच्यते । सुगम् । सुगशब्द सुखशब्दपर्याय । अथवा सुगमिति सुगतिरुच्यते । सुगति स्वर्गप्राप्तिम् । यथा सुखं स्वर्ग वा न प्राप्नोति तथा कुर्वित्यर्थ ॥

ऋजिश्वा भारद्वाजः । अप इत्यय अस्येत्युपरितनेन सबध्यते । अपास्य अपक्षिप । त्य तम् । हे अग्ने वृजिन कुटिलम् । रिपु बाधकम् । स्तेनम् । स्त्यानमस्मिन्न इति स्त्येनः । तम् । दुराध्य दुष्टा आधिराराधनं यस्य तम् । दविष्ठं दूरतमम् । अपास्य इति सबन्धः । हे सत्पते सतामार्याणा पालयितः । कृधि कुरु । सुगं सुखेन गम्यं पन्थानम् ॥　　(९)

श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते ।
नि मायिनस्तपसा रक्षसो दह ॥

विश्वमनसः आर्षम् । श्रुधीति क्षिप्रनाम । क्षिप्रम । हे अग्ने नवस्य अचिरकृतस्य । मे मम स्वभूतस्य । स्तोमस्य । वर्न्नेति वाक्यशेष । वीर विक्रान्त । विश्पते । विशो मनुष्या । तेषामधिपते । नि । नीत्यय दहेत्यनेन सम्बन्धयितव्य । मायिन मायावन्त । तपसा रक्षस राक्षसान् । निदह नियमेन दह । विनाशयेत्यर्थ ॥

विश्वमना एव । श्रुधी प्रीत्या । हे अग्ने नवस्य अन्यैरकृतपूर्वस्य । मे मदीयस्य । स्तोमस्य स्तोत्रस्य । श्रुध्या वृद्ध सन् इति शेष । हे वीर हे विश्पते विशा पते । विश्वस्य पते (नि ५. २८) इति यास्कः । निदह मायिनः वञ्चनात्रत । रक्षसः राक्षसान् । तपसा तापकेन तेजसा ॥ (१०)

द्वितीये प्रथमा दशत्या

---

**प्र मंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे ।**
**उपस्तुतासो अग्नये ॥**

सौभरेरार्षम् । प्रेत्ययमुपसर्गो गायत इत्याख्यातेन सम्बन्धयितव्य । मंहिष्ठाय अतिशयेन दातुरर्थाय । प्रगायत प्रकर्षेण गायत । उच्चारयत स्तुती । ऋताव्ने । ऋतो यज उदक वा । तदस्यास्ति स ऋतावान् उदकवान् यज्ञवान वा । तस्मै ऋताव्ने । उदकवतो यज्ञवतो वा अर्थाय । बृहते महते । प्रवृद्धायेत्यर्थ । किंच शुक्रशोचिषे । शोचिर्दीप्ति । शुक्र शोचि र्यस्य स शुक्रशोचि । तस्मै शुक्रशोचिषे । सुदीप्तेरर्थायेत्यर्थ । उपस्तुतास । उपगम्य ये स्तुवन्ति ते उपस्तुतास· स्तोतार । तेषा सम्बोधनं हे उपस्तुतास. । कस्य पुनरर्थाय । उच्यते । अग्नये अग्नेरर्थायेत्यर्थ ॥

सौभरि । प्रगायत महिष्ठाय दानृतमाय । ऋतान्न यज्ञपतये । बृहत महते । शुक्रशोचिषे शुभ्रदीप्तये । अग्नये उपस्तुतास उपस्तोतार ॥　　(१)

प्र सो अग्ने तवोतिभि र्सुवीराभिस्तरति वाजकर्मभि ।
यस्य त्व सख्यमाविथ ॥

सौभरेरार्षम् । प्रेत्ययमुपसर्ग तरतीत्यान्यातेन सम्बन्धयितव्य । स यजमान । हे अग्ने । तव स्वभूताभि । ऊतिभि पाल्नै । तृतीयानिर्देशात्पाल्यमान इति वाक्यशेष । कीदृशाभिरूतिभि पाल्यमान । उच्यते । सुवीराभि शोभनैर्वीर पुत्रै पौत्रैश्च उपेताभि । प्रतरति । तरतिर्वृद्ध्यर्थ । प्रकर्षेण वर्धते इत्यर्थ । वाजकर्मभि । वाजमन्नम् । तस्य कर्म उत्पत्ति । अन्नस्योत्पादयितृभिरित्यर्थ । य कीदृशो यजमान । उच्यते । यस्य त्व सख्य स्तुत्यस्तोतृलक्षणम । आविथ पालयसीत्यर्थ । एतदुक्त भवति । यस्त्वा स्तौति स पाल्नै पौत्रै अन्नोत्पादैश्च वर्धते ॥

सौभरिद्वया । प्रतरति वर्धते । हे अग्ने तव ऊतिभि रक्षोभि । सुवीराभि शोभनपुत्रपौत्रप्रदाभि । वाजकर्मभि । वाजमन्न कर्म कार्य यासा ताभि । यस्य सख्य सखित्वम् । आविथ ररक्षिथ रक्षसि । अवति गतिकर्मा वा । यस्य सख्य त्व आविथ प्राप्नोषि ॥　　(२)

त गूर्धया स्वर्णर देवासो देवमरति दधन्विरे । देवत्रा हव्यमूहिषे ॥

सोभरेरार्षम् । हे मदीय अन्तरात्मन् । त अग्निम् । गूर्धय । गूर्धयतीत्यर्चतिकर्मसु पठितत्वात् स्तुत्यर्थ । स्तुहीत्यर्थ । कमिव स्तौमि । उच्यते । स्व । लुप्तोपममिद द्रष्टव्यम् । स्वरिव । आदित्यमिवेत्यर्थ । नर नराकारम् । तमिति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्य । य देवास

देवा । देव दानादिगुणयुक्तम् । अरतिं अलमतिं पर्याप्तमतिम् । सर्वज्ञमित्यर्थ । अथवा देवान् यजमानाश्च प्रति गन्तारम् । दधन्विरे धारितवन्त । स्थापितवन्त इत्यर्थ । क्व । सामर्थ्यात्पृथिवीलोके । यश्च देवत्रा । देवमनुष्यपुरषपुरुमर्त्येभ्य (पा ॰ ४ ५६) इत्येवमथ द्वितीयान्तात् त्राप्रत्यय । देवान् प्रति । हव्य ऊह्पि । वह प्रापण इत्येतस्यैतद्रूप भवति । मध्यमपुरुषैकवचन च प्रथमपुरुषैकवचनस्य स्थाने द्रष्टव्यम् । वहति ऊढवान्वा ॥

त अग्नि गृधय स्तुहि हे सौभरे । स्वर्ग सवस्य नेतारम् । स्व शब्द सवशब्दपयाय । अपि वा स्वगस्य नेतारम् । यजमानाना इति वा । तमेव देव अरति गन्तारम् । देवास स्तातार । दधन्विरे धारयन्ति । अथ प्रत्यक्षस्तुति । हे अग्ने देवत्रा देवेषु । हव्य ऊहिषे हव्य वहसि त्वम् ॥ (३)

**मा नो हृणीथा अतिथिर्वसुरग्निः पुरुप्रशस्त एषः ।**
**यः सुहोता स्वध्वरः ॥**

मामेरार्षम् । मा इत्यय प्रतिषेध हृणीथा इत्यनेन सम्बन्धयितव्य । हे अग्ने । न अस्माकम् । मा हृणीथा । हृणि क्रुध्यतिकर्मसु पठात् क्रोधार्थ । मा क्रोत्सी । मध्यमपुरुषयोगात्प्रत्यक्षकृतो मन्त्र । न च अतिथिरित्यादीनि आमन्त्रितानि । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेयानि । यस्त्वमतिथिस्थानीय । यश्च वसु प्रशस्त धनवान्वा । अग्नि । यश्च पुरुप्रशस्त बहुभि स्तोतृभि स्तुत इत्यर्थ । यश्च एष । एषृ गता वित्यस्यैतद्रूपम् । गन्ता । यश्च सुहोता शोभन आह्वाता । यश्च स्वध्वर शोभनयज्ञ । स अस्माक मा क्रोत्सी ॥

सौभरि । मा हृणीथा । हृणीति क्रोधकर्मा । अन्तर्णीतण्यर्थोऽयम् । मा चुक्रुध । अग्नि न अस्माक सर्वषाम । अतिथि पूज्यम् । हे प्रयोग यथा

न क्रुध्येत् तथा परिचर इति । अथवा दृणीथा इति पुरुषव्यत्ययः । मास्मानग्निः दृणीथाः इति । अतिथिमिति विभक्तिव्यत्ययः । अतिथिः अग्निः इति । वसुः व्याप्तः । पुरुप्रशस्तः । बहुभिः स्तुतः एषः । यः सुहोता सुष्ठु ह्वाता देवानाम् । स्वध्वरः सुयज्ञश्च भवति । यः ईदृशः अग्निः तं मा दृणीथाः । सः मा दृणीता इति वा ॥　　　　　　　　　　　　　　　　　　　　　(४)

भद्रो नो अग्निराहुतो भद्रा रातिः सुभगा भद्रो अध्वरः ।
भद्रा उत प्रशस्तयः ॥

सौभरेरार्षम् । भद्रः कल्याणः । नः अस्माकम् । अग्निः आहुतः आभिमुख्येन स्थित्वा हुतः मर्यादया वा हुतः । भवत्विति वाक्यशेषः । भद्रा रातिः यदप्येतत् हविर्दानं एतदपि भद्रं भवतु । हे सुभग शोभनधन अग्ने । भद्रो अध्वरः योऽप्ययं प्रक्रान्तो यज्ञः अयमपि भद्रो भवतु । उत अपि च भद्राः प्रशस्तयः स्तुतयो भवन्तु ॥

सौभरिरेव तिसृणाम् । भद्रो नः कल्याणकरो भवतु अस्माकम् । अग्निः आहुतः अभिहुतः हविर्भिः । अथ प्रत्यक्षस्तुतिः । भद्रा भवतु रातिः देवाना हविर्वा । सुभग सुधन अग्ने । भद्रो भवतु अध्वरो यज्ञः । उत अपि च भद्रा भवन्तु प्रशस्तयः स्तुतयः ॥　　　　　　　　　　　　　　　　(५)

यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् ।
अस्य यज्ञस्य सुक्रतुम् ॥

सौभरेरार्षम् । हे अग्ने यजिष्ठं अतिशयेन यष्टारं देवानाम् । त्वा त्वाम् । ववृमहे प्रार्थयामः । देवं देवत्रा देवेषु । देवानां मध्ये इत्यर्थः । कीदृशं त्वा प्रार्थयामहे । उच्यते । होतारं आह्वातारं देवानाम् ।

अमर्त्यं मरणवर्जितम् । अस्य प्रक्रान्तस्य यज्ञस्य । परिसमाप्तिमिति वाक्यशेषः । कीदृशं त्वा परिसमाप्तिं प्रार्थयामहे । उच्यते । सुक्रतुं सुकर्माणं सुप्रज्ञं वा ॥

यजिष्ठं यष्टृतमम् । त्वा त्वाम् । ववृमहे वृणीमहे । होतारं होतृत्वेन । देव दीप्तम् । देवत्रा देवेषु दानादिगुणकेषु । अमर्त्यं अमरणधर्माणम् । अस्य यज्ञस्य होतारं वृणीमहे इति सम्बन्धः । सुक्रतुं सुकर्माणम् ॥ (६)

तदग्ने द्युम्नमाभर यत्सासाहा सदने कंचिदत्रिणम् ।
मन्युं जनस्य दूढ्यम् ॥

सौभरेरार्षम् । तत् हे अग्ने । द्युम्नं यशः अन्नं वा । आभर आनय । देहीत्यर्थः । कीदृशं पुनः अन्नं आभरामि । उच्यते । यत् सासाहा । षह मर्षणे इत्यस्याभिभवनार्थीयस्येदं रूपम् । अभिभवति । सदने यज्ञगृहे । किंचित् अत्रिणं अत्तारं विनाशयितारं रक्षः पिशाचादिकम् । न केवलं रक्षः पिशाचादीन् यदभिभवति । किं तर्हि । मन्युं क्रोधं च । जनस्य । कीदृशस्य जनस्य । उच्यते । दूढ्यम् । द्वितीयैकवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । दूढ्यस्य दुर्धियः । पापबुद्धेरित्यर्थः ॥

तत् द्युम्नं तेजः । हे अग्ने आभर आहर अस्मभ्यम् । यत् द्युम्नं ससाह । सहेरभिभवार्थात् लिङर्थे लिट् । अभिभवेत् । सदने गृहे । किंचिदपि सर्वमपि । अत्रिणं अदनशीलं राक्षसम् । मन्युम् । मन्यते अभिमन्यते हन्तुमिति मन्युः । जनस्य प्राणिजातस्य मन्युम् । दूढ्यं दुर्धियं दुष्टाभिध्यानं वा ॥ (७)

यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे ।
विश्वेदग्निः प्रति रक्षांसि सेधति ॥

विश्वमनम आर्षम् । यत् । सप्तम्या अत्र लुक् द्रष्टव्यः । यदा । वा उ । द्वावपि पादपूरणौ । विशो मनुष्याः । तेषामधिपतिः स्वामी विश्पति । शित । शो तनूकरणे इत्यस्यैतद्रूपम् । श्यतिश्च सम्कारार्थः । शितः संस्कृत इत्यर्थः । केन । सामर्थ्यात्स्तुतिभिर्हविर्भिश्च । सुप्रीतः सुष्ठु परितृप्त इत्यर्थ । मनुषः मनुष्यस्य मम विश्वमनमः । यदेति वचनात्तदेत्यध्याहर्तव्यम् । तदा विशे । विट् इति मनुष्यनाम । तस्मादियं तादर्थ्ये चतुर्थी । मम स्वभूतस्य मनुष्यस्य पुत्रस्यार्थाय । मम पुत्रादीन् पालयितुमित्यर्थः । विश्वा विश्वानि । इदिति पादपूरणः । अग्निः । प्रतिशब्दः पादपूरण । रक्षांसि सेधति नाशयतीत्यर्थः ॥

विश्वमनाः । यत् यदा । वै उ इतीमौ पादपूरणौ । विश्पतिः विशां पतिः विश्वस्य पतिर्वा अग्निः । शितः तीक्ष्णीकृतस्तत्रावाधानादिभिः । सुप्रीतो भवति । मनुषो मनुष्यस्य यजमानस्य । विशे परिजनाय । सुप्रीत इति सम्बन्धः । तदा विश्वा विश्वानि । रक्षांसि । प्रतिषेधति प्रतिषेधते । इत् एव । इति ॥

इत्थं चतुर्दशशतमृच आग्नेयपर्वणि ।
व्याख्यच्छ्रीभरतस्वामी श्रीरङ्गपत्तने वसन् ॥　　(८)

द्वितीये द्वितीया दशत्या

आग्नेयपर्व समाप्तम्

---

वद्यो गाय सुते सचा पुरुहूताय सत्वने । शं यद्गवे न शाकिने ॥

इदानीमैन्द्रं उच्यते । भरद्वाजस्यार्षम् । तत् वः । द्वितीयाबहुवचनमिदं प्रथमैकवचनस्य स्थाने द्रष्टव्यम् । त्वम् । गाय । गायतीत्यर्चतिकर्मसु पाठात्

स्तुत्यर्थः । स्तुत्या चात्र उच्चारणं लक्ष्यते । अन्तरात्मन एवायं प्रैषः । हे मदीय अन्तरात्मन् । तत् त्वं स्तुतिरूपं उच्चारय । सुते अभिषुते सोमे । सचा सह अन्यैः ऋत्विग्भिः । कस्मै । उच्यते । पुरुहूताय बहुभिर्यजमानैः आहूतस्येन्द्रस्यार्थाय । कीदृशस्येन्द्रस्यार्थाय । सत्वने । षणु दाने इत्यस्यैतद्रूपम् । दात्रे । स्तोतृभ्यः शं यत् । शमिति सुखनाम । यदुच्चार्यमाणं इन्द्रस्य सुखं करोति तत् उच्चारयेत्यर्थः । कस्मै इव । उच्यते । गवे न । नशब्दः उपमार्थीय । गवे इव । गोशब्देनात्र वृषभ उच्यते । वृषभाय इव । कीदृशाय । उच्यते । शाकिने । शकनं शाकः । शक्तिरित्यर्थः । तद्वान् शाकी । तस्मै शाकिने । शक्तिमते इत्यर्थः । यथा कश्चित्कृषीवलः शक्तिमतो वृषभस्य सुखकराः स्तुती उच्चारयति तद्वत्सुखकरमिन्द्रस्य स्तुतिरूपमुच्चारयेत्यर्थः ॥

ऐन्द्रे द्वितीये प्रमुखे शतं चाष्टादशाप्यृचः ।
अनुष्टुप्पान्तमित्येषा गायत्र्योऽन्याः समीरिताः ॥
अष्टादशशते त्वस्मिन् चतस्रो मरुतां स्तुतिः ।
इहेवोदुत्य इत्येते अथ गौर्धयतीत्यृचः ॥
वैश्वदेवी भवत्येषा देवानामिदवो महत् ।
सोमानां ब्राह्मणस्पत्या सदसस्सदसस्पतेः ॥
अद्या नो देव सावित्रो दोषो आगादिति तृचः ।
सोमापूष्णोः स्तुतिरियं सोमः पूषा च चेततुः ॥
एषो दूरादिहाश्विन्यौ वात आ वायुसंस्तवः ।
यं रक्षन्ति महि त्रीणां सुनीथो घा स इत्यृचः ॥
मित्रावरुणमुख्यानामादित्यानां तु संस्तवः ।
आ नो मित्रर्जुनीती नो मित्रावरुणयोः स्तुतिः ॥
इन्द्रा नु पूषणेत्यस्यामिन्द्रापूष्णोः सह स्तुतिः ।
सरस्वती पावका न इदं विष्णुर्हि वैष्णवी ।
ऐन्द्र्योऽन्याः सकला ऐन्द्रसमाख्या सुष्टिनीतितः ॥

भरद्वाजः । तत् स्तोत्रम् । वो यूयम् । गाय गायत । सुते अभिषुते सति सोमे । सचा सह । गायत प्रस्तोत्रादयः । पुरुहूताय बहुभिराहूताय । सत्वने । सनोतेर्दानार्थत्वात् सत्वने दात्रे धनानाम् । शाकिने शक्तिमते इन्द्राय । शं सुखकरं भवति । यत् स्तोत्रं इन्द्राय । गवे न गवे इव घासः । तद्यूयं गायत ॥ (१)

यस्ते नूनं शतक्रतविन्द्र द्युम्नितमो मदः । तेन नूनं मदे मदेः ॥

श्रुतकक्षस्यार्षम् । य ते नूनं निश्चितम् । शतक्रतो । शतमिति बहुनाम । क्रतुरिति कर्मनाम । शतं क्रतूना यस्य स शतक्रतु· । तस्य सम्बोधनं हे शतक्रतो । बहुकर्मन् । इन्द्र । द्युम्नितम अतिशयेन दीप्तिमान् । मदः मत्तः सन् स्तोतृभ्य य· स्तुतो धनं ददाति । तेन मदेन । नूनं निश्चयेन । मदे । सप्तम्येकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम् । मदेन । मदेः मादयस्वेत्यर्थः ॥

श्रुतकक्षः । यस्ते त्वदीयः । मदः सोमः । नूनमिति पूरणः । हे शतक्रतो बहुकर्मन् । इन्द्र । द्युम्नितमो दीप्तितमः । तेन नूनं संप्रति । मदेः मदस्व । मदे । मदति स्तौतीति मदः स्तोता । स्तोतरि मयि ॥ (२)

गाव उपवदावटे मही यज्ञस्य रप्सुदा । उभा कर्णा हिरण्यया ॥

हर्यतस्यार्षम् । गोशब्देनात्र वाच· उच्यन्ते । हे गावः मदीया वाच. । उपवद । एकवचनमिदं बहुवचनस्य स्थाने द्रष्टव्यम् । उपगम्य वदत । किं पुनर्वदामः । उच्यते । अवटे । सप्तम्येकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । अवटम् । अवट इति अपठितमपि मेघनाम द्रष्टव्यम् । मेघम् । किं पुनर्वदामः । उच्यते । ममार्थायोदकं पीतमित्येवम् । न केवलं मेघम् । मही मह्यौ द्यावापृथिव्यौ । कीदृशे । उच्यते ।

यज्ञस्य रप्सुदा। रप्स्विति रूपनाम। ये तद्दुचः ते रप्सुदे। यज्ञस्य रूपदे इत्यर्थः। कीदृशं पुनर्ये उपवदाम। उच्यते। उभा कर्णा हिरण्यया उभौ कर्णौ हिरण्मयौ यस्य। अस्ति पुनः क्वचिदन्यत्रापि हिरण्यकर्णत्वं मेघस्य। अस्तीति ब्रूमः। हिरण्यकर्णं मणिग्रीवम् (ऋ. वे. १. १२२. १४) इत्यत्र॥

हर्यतः प्रागाथः। इय प्रवर्ग्यसम्बन्धिनी स्तुतिः। इन्द्राश्विना मधुनस्सारघस्य घर्मं पात वसवो यजता वट् इति मन्त्रे इन्द्रस्यापि घर्मे भागित्वदर्शनात् हविस्तुतिरिन्द्रस्यैव भवति। गाव इति जसि रूपम्। जसि वा व्यत्ययेन शसः। गावः गाः घर्मदोग्ध्रीः। उपवद उपस्तुहि हे अध्वर्यो। किमर्थम्। अवटे। अवटः रूपः। महावीरोऽत्रावट उच्यते। महावीरनिमित्ते। तदर्थं दोग्धुम्। मही महती भवति। यज्ञस्य यजमानस्य। रप्सुदा स्तोत्रेण स्थितिः। रपेः शब्दकर्मणो रपिः स्तुतिः। तत्र सदनं रप्सुदा। अकारस्योकारो व्यत्ययात्। उभा उभे कर्णा कर्णौ। कृणतेः कर्णः। कर्ण एव कर्णौ रुक्मौ रजतसुवर्णौ। हिरण्यया हिरण्मयौ। तद्रजतं हिरण्मयमभवत। तत् सुवर्णं हिरण्यमभवत् इति रजतसुवर्णयोः हिरण्यशब्दो दृष्टः। तौ चोभौ निहितौ उपर्यधश्च महावीरस्य॥ (३)

अरमश्वाय गायत श्रुतकक्षारं गवे। अरमिन्द्रस्य धाम्ने॥

श्रुतकक्ष्यार्षम्। अरं अलम्। पर्याप्तमित्यर्थः। अश्वम्यार्थाय। गायत। गायतीत्यर्चतिकर्मसु पाठात् स्तुत्यर्थः। हे श्रुतकक्षा श्रुतकक्षस्य मम पुत्रा। अरं अलम्। पर्याप्तमित्यर्थः। गायतेत्येतदनुषज्यते। गवे गोरर्थाय। अरं इन्द्रस्य धाम्ने। धामशब्दः स्थानवचनः। तस्मादियं तादर्थ्यचतुर्थी। इन्द्रस्य यत्स्थानं स्वर्गाख्यं तस्य चार्थायेत्यर्थः॥

श्रुतकक्षो द्वयोः। अरं पर्याप्तम्। गायतेति वचनव्यत्ययः। गाय गीतिं कुरु। इन्द्रस्य। उत्तरार्धे स्थितमत्र सम्बध्यते। चतुर्थ्यर्थे षष्ठी। इन्द्रार्थं गाय।

किमर्थमिन्द्रोद्देशेन गीतिः क्रियते । तत्राह । अश्वायेति जातावेकवचनम् । अश्वान् लब्धुम् । हे श्रुतकक्षेति आत्मानमेव सम्बोधयत्यृषिः । अर इन्द्रस्य गायत गवे गोलाभार्थं अरं गायत । धाम्ने स्थानाय गृहलाभार्थम् ॥ (४)

## तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् ॥

श्रुतकक्षस्यार्षम् । य उक्तगुणः तं इन्द्रं वाजयामसि । वाजयतीत्यर्चतिकर्मसु पठितत्वात् स्तुत्यर्थः । वाजयामः पूजयामः । स्तुम इत्यर्थः । किमर्थं पुनः स्तुमः । उच्यते । महे वृत्राय हन्तवे महतो वृत्रस्य हननार्थमित्यर्थः । स इन्द्रः स्तुतः सन् । वृषा वर्षिता । भुवत् भवेत् । क इव । उच्यते । वृषभः । लुप्तोपममिदम् । वृषभ इव । यथा वृषभः रेतसः वर्षिता तद्वद्वर्षिता उदकस्य भवत्वित्यर्थः ॥

तमिन्द्रं वाजयामसि वाजिनं बलिनं कर्म स्तुतिभिः महे महते वृत्राय वृत्रं हन्तवे हन्तुम् । तुमर्थाच्च भाववचनात् (पा. २. ३. १५) इति चतुर्थी । स वृषा वर्षितेन्द्रः वृषभः वर्षिता कामाना भुवत् भवतु ॥ (५)

## त्वमिन्द्र बलादधि सहसो जात ओजसः । त्वं सन् वृषन्वृषेदसि ॥

इन्द्रमातरो देवजामयः । तासां आर्षम् । त्वं हे इन्द्र । बलाज्जातः । बलस्य त्वयि दृश्यमानत्वात् । कारणानुविधायित्वस्य कार्याणामिष्यमाणत्वात् । कीदृशात् बलात् । उच्यते । सहसः । षह मर्षणे । अभिभवे छन्दसि इत्यस्यैतद्रूपम् । अभिभवितृतमादित्यर्थः । किमभिभवितुरेव केवलम् । उच्यते । ओजसः परकीयस्य च बलस्य ऋजुकरणस्वभावात् । किंच त्वं सन् प्रशस्त । हे वृषन् वर्षितः । वृषा वर्षिता । इदिति पादपूरणः । असि भवसि ॥

इन्द्रमातरो देवजामयोऽस्या ऋषय । त्वं हे इन्द्र बलात् जातोऽसि । विभर्ते भर बलम् । अबीति पञ्चम्यर्थानुवादक । सहसो वेगाच्च जातोऽसि । ओजसस्तेजसश्च जातोऽसि । बलादिभि गुणै सर्वस्मादधिकत्वात् तदुपादान इवासीति स्तुति । त्वं सन् श्रेष्ठ हे वृषन् वृषेत् । इत् एव । वृषैव वर्षितैव कामानामसि ॥ (६)

## यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत् । चक्राण ओपशं दिवि ॥

गोषूक्त्यश्वसूक्त्योरार्षम् । यज्ञ मदीयो याग । इन्द्रमवर्धयत् वर्धितवान् । य कीदृश इन्द्र । उच्यते । यत् । नपुंसकलिङ्ग पुल्लिङ्गस्य स्थाने द्रष्टव्यम् । य । भूमिं पृथिवीम् । व्यवर्तयत् विवर्तयति । विवर्तितवान्वा । सस्यसम्पत्तिद्वारेण अन्यरूपा करोतीत्यर्थ । किं पुन कुर्वन् अन्यरूपां पृथिवीं करोति । उच्यते । चक्राण कुर्वन् । ओपशं गर्जितलक्षण शब्दम् । कुत्र । उच्यते । दिवि द्युलोके ॥

गोषूक्त्यश्वसूक्त्यावृषी द्वृचस्य । यज्ञो यजमान यज्ञ एव वा इन्द्रमवर्धयत् वर्धयति । यत् यदा भूमिं व्यवर्तयन् विवर्तयति प्रावृति वृष्ट्या । चक्राण कुर्वन् । ओपशं मेघम् । दिवि अन्तरिक्षे । उपशेरतेऽस्मिन्नाप इति ओपश ॥ (७)

## यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् । स्तोता मे गोसखा स्यात् ॥

गोषूक्त्यश्वसूक्त्योरार्षम् । यदि हे इन्द्र । यथा त्वं ईशिषे । एवमहं ईशीय । कस्य । उच्यते । वस्व वसुन । धनस्येत्यर्थ । एक इत् । इच्छब्द एवकारार्थ । एक एव । तत किं स्यात् । उच्यते । स्तोता मे मम । गोसखा । गाव सखिभूता यस्य स गोसखा । मित्रलक्षण चात्र सख्य परिगृह्यते । बह्वयो गावो यस्य स्वभूता । एतदुक्तं भवति । योऽपि

अत्यन्तेश्वर. सोऽपि मे स्तोता भवेत्। अथवा तस्मै स्तोत्रे गावो ददतीत्यर्थ । किंतु अल्पपुण्यत्वाच ममैतत्सञ्जातम् ॥

यत् यदि अहं हे इन्द्र यथा त्वं ईशिषे वसुनः । तथा अहं वस्वः वसुनः ईशीय ईशः स्याम् । एक इत् एक एव । त्वमेक एव हीशिषे । तथा अहमेक एव यदीशीय तथा सति स्तोता मे मा स्तुवन् यजमानः गोसखा स्यात् । गावः सखायो यस्य सः गोसखा । गोभि. युक्तः स्यात् । इति प्रदाने विलम्बमानं इन्द्र प्रति उच्यते ॥ (८)

**पन्यं पन्यमित्सोतार आ धावत मद्याय । सोमं वीराय शूराय ॥**

मेधातिथेरार्षम् । पन्यं पन्यम् । पनति. स्तुत्यर्थ. । तस्यायमभ्यासः । अभ्यासे च भूयासमर्थं मन्यन्ते । पन्यं पन्यं अतिशयेन स्तुत्यमित्यर्थः । इदिति पादपूरणः । सोतारः मदीया ऋत्विजः सोमस्य अभिषोतारः । आधावत । सर्तेर्गत्यर्थस्य अन्तर्णीतण्यर्थस्य चेदं रूपम् । आसारयत । आभिमुख्येन गमयत । नयत इत्यर्थः । किं पुनर्नयत । उच्यते । सोमम् । वीराय शूराय विक्रान्ताय शूरायेत्यर्थः ॥

मेधातिथिः आङ्गिरसः प्रियमेधश्च काण्वः द्वौ अस्याः परस्याश्च ऋषी । पन्यं पन्यं अतिशयेन स्तुत्यम् । इत् एवं सोम हे सोतारः अभिषोतारः अध्वर्यवः । आधावत आपुनीत । धावु गतिशुद्ध्योः । मद्याय स्तुत्याय वीराय वीरयित्रे शत्रूणां शूराय च इन्द्राय । शूरः शृणोतेः हिंसाकर्मणः श्यतेर्वा गतिकर्मणः । शूराणां शविष्ठो नोऽभिष्टुतं इति मन्त्रवर्णात् ॥ (९)

**इदं वसो सुतमन्धः पिबा हे सुपूर्णमुदरम् । अनाभयिन् ररिमा ते ॥**

मेधातिथेरार्षम् । इदं हे वसो प्रशस्त धनवन् वा । सुतमभिषुतम् । अन्धः सोमलक्षणमन्नं एतत्स्थितम् । पिब । कियत्पुनः पिबामि । उच्यते ।

यावत् सुपूर्णं उदरम् । यावदाध्यात इत्यर्थ. । अनाभयिन् । आभिमुख्येन भयं यस्य नास्ति स अनाभयी । तस्य सम्बोधनं हे अनाभयिन् । भयवर्जितेत्यर्थ. । स्यादेतत् । अदत्त कथं पिबामीति अत उच्यते । ररिम । रमि चादान इति अस्यैतद्रूपम् । दद्मो वयम् । ते तुभ्यम् ॥

इद सुत अभिषुतम् । अन्धः अन्न सोम पिब । हे वसो प्रशस्य । सुपूर्ण कुरु उदर सोमेन । अनाभयिन् । भयमस्यातीति आभयी । अनाभयिन् भयरहित । ररिमा दद्महि । ते तुभ्य सोमम् ॥ (१०)

द्वितीये तृतीया दशत्या

---

उद्घेदभि श्रुतामघं वृषभं नर्यापसम् । अस्तारमेषि सूर्य ॥

सुकक्षस्यार्षम् । उदित्ययमुपसर्ग एषीत्यनेन सम्बन्धयितव्य । घ इदिति द्वावपि पादपूरणौ । श्रुतामघम् । श्रुतं विख्यातम् । प्रभूतमित्यर्थ । मघ धनम् । श्रुत मघ यस्य स श्रुतामघ । तं श्रुतामघम् । छान्दस दीर्घत्वम् । विख्यातधनमित्यर्थ । वृषभं वर्षितारम् । नर्यापसम् । नृभ्यो हित नर्यम् । अप इति कर्मनाम । नर्यं अपो यस्य स नर्यापस । त नर्यापसम् । नृभ्यो हितकारिणमित्यर्थ । अस्तारं क्षेप्तारं शत्रूणाम् । ईदृश मिन्द्र प्रतीत्य उदेषि । हे सूर्य ॥

श्रुतकक्षः द्वयोः । अस्मिन् द्वृचे सूर्यरूपेण इन्द्रस्य स्तुतिः क्रियते । असौ आदित्य इन्द्र इति च हारिद्रवकम् । उदेषि उद्यतो भवसि । घेदितीमौ

पादपूरणौ। श्रुतामघ विश्रुतदानम्। वृषभ वर्षितार् कामानाम्। नर्यापस नरहितकर्माणम्। अस्तार् क्षेतार् हवींषि वह्नी जननमिलषितसाधनाय हे सूर्य प्रेरक इन्द्र ॥ (१)

**यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य । सर्वं तदिन्द्र ते वशे ॥**

सुकक्षस्यार्षम् । यत् अद्य अस्मिन्नहनि । अद्यग्रहण चात्र प्रदर्शनार्थम् । सर्वकालमित्यर्थ । यच्च किंचित् हे वृत्रहन् । उत् अगा । मध्यमपुरुषैकवचनमिदं प्रथमपुरुषैकवचनस्य स्थाने द्रष्टव्यम् । अगात् । उद्गच्छति । जायत इत्यर्थ । अभि पादपूरण । सूर्य सुष्ठु ईरयिता सर्वेत्यर्थ । स्येयाम् । सामर्थ्याच्छत्रूणाम् । सर्व तत्प्राणिजातम् । हे इन्द्र । ते तव । वशे । वर्तत इति वाक्यशेष । एतदुक्तं भवति । यावत किंचित्प्राणिजातं तस्य सर्वस्य त्वं ईशिषे इत्यर्थ ॥

अत्र शौनक ।

> यदद्य कच्चेत्युदिते रवौ स्तुत्वा पुरन्दरम् ।
> गृह्णन्नपोहते शत्रु वश्य वा कुरुते जगत् ॥

इति । यदद्य कच्च । यत्किंचित् वस्तु स्थावर जङ्गम वा अद्य अस्मिन्नपि दिने अभि उदगाः उदितोऽसि । हे वृत्रहन् पापाना हन्त· सूर्य सर्व तत् ते तव वशे अभिवर्तते हे इन्द्र ॥ (२)

**य आनयत्परावतः सुनीती तुर्वशं यदुम् । इन्द्रः स नो युवा सखा ॥**

भरद्वाजस्यार्षम् । य इन्द्र आ अनयत् आभिमुख्येन आनीतवान् । आत्मन· सकाशे कृतवानित्यर्थ । परावत दूरात् । कथं पुन आनीतवान् । उच्यते । सुनीती । सुपा सुलुक् (पा. ७. १. ३९) इत्यनेन पूर्वसवर्ण·

इत्येव सुनीती। एतदुक्तं भवति। शोभनया नीत्या नयन आनीय मासो न केनचित् प्रतिविध्यत इत्यर्थः। क पुन आनीतवान्। उच्यते। तुर्वश नाम राजपुत्रम्। यदु च। किमर्थम्। पालनार्थम्। युत एतत्। त्वमाविथ नर्यं तुर्वशं यदुम् (ऋ वे १ ५४ ६) उत त्या तुर्वशायदू (ऋ वे ४ ३० १७) इदमादिपु अनयो पालनसम्बन्धस्य दर्शनात्। दूरादामन सकाशमानीय पालितवानित्यर्थ। इन्द्र स न अस्माकम्। युवा तरुण। सखा सखिभूत। देवमनुष्ययोश्च स्तुत्यस्तोतृलक्षण सख्यम्। स्तुत्य इत्यर्थ॥

भरद्वाज। आनयत् आनीतवान् परावता दूरात् सुनीती शोभनेन नयेन तुवश यदु च राजानौ शत्रुभि दूरेऽपास्तौ इन्द्र। स युवा न अस्माक सखा भवतु॥ (३)

## मा न इन्द्राभ्या दिश सूरो अक्तुष्वायमत्। त्वा युजा वनेम तत्॥

श्रुतकक्ष्यार्षम्। मा न। मा इत्यय प्रतिपध आयमदित्याख्या तेन सम्बन्धयितव्य। न अस्माकम्। हे इन्द्र अभ्यादिश। आभि मुख्येन युद्धार्थं य आदिश्यन्त ते अभ्यादिश। आज्ञाकरा इत्यर्थ। सूर। प्रथमैकवचनमिद पञ्चम्येकवचनस्य स्थाने द्रष्टव्यम्। सूरस्य सुष्टु ईरयितु शत्रो स्वभूता। अक्तुपु रात्रिपु। रात्रिग्रहण चात्र प्रदर्शनार्थम्। सर्वकालमित्यर्थ। मा आयमन मा आभिमुख्येन निर्यान्तु। सर्वेन्ा युद्धे नश्यन्तामित्यर्थ। किंच त्वा त्वया। युजा। युज्यते इति युक् सहाय। त्वया सहायेनेत्यर्थ। वनेम। वनतिर्यद्यप्यन्यत्र सम्भजनार्थस्तथापीह हिंसार्थो द्रष्टव्य। हिंस्याम। तत्। नपुसकमिद पुलिङ्गस्य स्थाने द्रष्टव्यम्। एकवचन च बहुवचनस्य स्थाने द्रष्टव्यम। तान्॥

श्रुतकक्षः। मा आयमत नाभिगच्छेत् अयमित्यर्थः। हे इन्द्र नोऽस्मान् अभिआदिशः आदेष्टा। प्रवृत्तिरोधकः आदेशः। यो नः पूषन्नघो वृको दुश्शेव आदिदेशति। अप स्म त पथो जहि (ऋ. वे. १. ४२ २) इति मन्त्रदर्शनात्। सूरः प्रेरकः शत्रुः। अक्रुषु गमनेषु प्रवृत्तिषु धनाद्यर्थासु त्वा त्वया युजा सहायेन वनेम लभेमहि। तत् वय यदर्थ प्रवर्तेमहि तत्॥ (४)

एन्द्र सानसिं रयिं सजित्वानं सदासहम्। वर्षिष्ठमूतये भर॥

मधुच्छन्दस आर्षम्। आ इत्ययमुपसर्गो भरेत्याख्यानेन सम्बन्धयितव्य। हे इन्द्र। सानसिम्। वन षण सम्भक्तौ इत्यस्येदं रूपम्। सम्भजनीयम्। रयिं धनम्। सजित्वान सहभूताना शत्रूणा जेतृ। सदा सर्वदा च सह अभिभवितृ। वर्षिष्ठं अतिशयेन प्रवृद्धम्। ऊतये तर्पणाय। आभर देहीत्यर्थ॥

अस्याः परस्याश्च मधुच्छन्दा। आभर आहर। अस्मभ्यं हे इन्द्र सानसिम्। सनोतेः इदं रूपम्। सभजनीयम्। रयिं धनम्। सजित्वानम्। सजित्वानो जयशीलाः पुरुषाः। तैः सहितम्। सदासह सर्वदा अभिभवितारं आपदाम्। वर्षिष्ठं प्रवृद्धतमम्। ऊतये तर्पणार्थम्॥ (५)

इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे। युजं वृत्रेषु वज्रिणम्॥

मधुच्छन्दस आर्षम्। इन्द्रं वयं महाधने महति सङ्ग्रामे। इन्द्रमेव। अर्भे अल्पे सङ्ग्रामे। हवामहे। युजम्। युज्यत इति युक् सहायः। तम्। सहायमित्यर्थ। वृत्रेषु सङ्ग्रामव्यतिरेकेणान्येषु शत्रुषु हन्तव्येषु। आह्वयाम इत्यनुषज्यते। कीदृशमिन्द्रं आह्वयाम। उच्यते। वज्रिणं वज्रवन्तं इत्यर्थः॥

इन्द्र वय हवामहे आह्वयामहे। महाधने महान्ति धनानि जेतव्यानि यस्मिन् सङ्ग्रामे इन्द्रमेव हवामहे। अर्भे अल्पे अल्पधने च सङ्ग्रामे। युज सहायम्। वृत्रेषु उपद्रवेषु सत्सु। वज्रिणम्॥ (६)

अपिबत्कद्रुव सुतमिन्द्र' सहस्रबाह्वे। तत्रादर्दिष्ट पौंस्यम्॥

त्रिशोकस्यार्षम्। अपिबत् पीतवान्। इन्द्र। किं पीतवान्। उच्यते। कद्रुव सुतम्। कद्रूर्नाम काश्यपस्य भार्या। तस्या स्वभूत सुत अभिपुत सोमम्। क्व पुन पीतवान्। उच्यत। सहस्रबाह्वे। सहस्रमिति बहुनाम। बाहुशब्देनापि अवयवेन समुदायस्य सम्बन्धात्कर्ता उच्येत। सहस्र बाहव कर्तारो यत्र तत् सहस्रबाहु सत्रम्। तस्मिन् पीतवा नित्यर्थ। किंच तत्र सत्रे। अदर्दिष्ट अत्यर्थं दृश्यते। वर्ण्यते इत्यर्थ। केन। सामर्थ्यान्मन्त्रै। पौंस्य पुंस इन्द्रस्य योग्य बल च॥

त्रिशोक। इन्द्र सुत अभिषुत साम कद्रुव कद्वाख्यस्य यजमानस्य। सहस्रबाह्वे। षष्ठ्यर्थे चतुर्थी। य सहस्र वहति प्रापयति ददातीति सहस्रबाहु। तस्य कद्रुव। सहस्र बाहवो यस्य सन्तीत्यपरे। तत्र कद्रौ अदर्दिष्ट। दिशतेर्वा ददातेर्वा रूपम्। अदर्दिष्टेति अदिशदिति वा अददादिति वा। पौंस्य वीर्यम्। दीप्यते दीप्तिकर्मणा रूपमेतदित्यपरे। अदीपयदिति वा। तत्रादेदिष्ट पौंस्यम् (ऋ वे ८ ४९ १६) इति बह्वृचा॥ (७)

वयमिन्द्र त्वायवोऽभि प्र नोनुमो वृषन्। विद्धी त्वस्य नो वसो॥

वसिष्ठस्यार्षम्। वय हे इन्द्र। त्वायव त्वत्कामा। त्वा यष्टु मिच्छव इत्यर्थ। अभि प्र नोनुम। अभि प्र इति द्वावपि पादपूरणौ। अत्यर्थं स्तुम। हे वृषन् वर्षित। यत एवमतो ब्रवीमि। विद्धि विजानीहि।

ज्ञात्वा च याग संपादयत्वर्थ । तु इति पादपूरण । कस्य पुनर्जानामि । अस्य सुतस्य । न अस्माक स्वभूतस्य । हे वसो प्रशस्त धनवन् वा ॥

वसिष्ट । वय हे इन्द्र त्वायवः त्वत्कामा । अभिप्रनोनुम आभिमुख्येन प्रकर्षेण भृश स्तुम । त्वामिति शेष । हे वृषन् विद्धि अवधारयतु क्षिप्र अस्य इद स्तोत्रमित्यर्थ । न अस्मदामस्य हे वसो प्रशस्य । जानात्यर्थाना धातूना प्रयोगे कर्मणि षष्ठी प्रायशः दृश्यते ॥ (८)

आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्। येषामिन्द्रो युवा सखा॥

त्रिशोकस्यार्षम् । आ इत्येष मर्यादायाम् । घ इति पादपूरण । मर्यादया य अग्नि इन्धते सन्दीपयन्ति । ये च स्तृणन्ति बर्हि आनुषक् आनुपूर्व्येण । येषा च इन्द्र युवा सर्वदा तरुण । सखा स्तुत्यस्तोतृलक्षणेन सम्बन्धेन सखिभूत । स्तुतस्तुत्य इत्यर्थ । यच्छब्दश्रुतेश्च तच्छब्दो योग्यार्थसम्बन्धोऽध्याहर्तव्य । ते । पुण्यवन्त इति वाक्यशेष ॥

द्रयो त्रिशोक' । आ अभि इन्धते दीपयन्ति । समिद्भिः अग्निम् । घेति पादपूरण. । तस्य दीर्घश्च साहितिक । ये स्तृणन्ति च बर्हिः यज्ञे आनुषक् अनुषक्त स्थितात् पञ्चवातु वा बर्हिस्तीर्यते । परस्परानुषक्ताश्च धातवो भवन्ति । येषा सखा भवति युवा इन्द्र तेषामिन्मा बृहत् भवति । स्तुनशाखं च तेषा सपूर्यते । यूपाद्भश्च तेषा समृद्धानि भवन्ति । इत्युत्तरयर्चा समाप्तिः वाक्यस्य । बृहन्निदिध्म एषा भूरि शस्त पृथु स्वर (ऋ. वे. ८. ४५. २) ॥ (९)

भिन्धि विश्वा अप द्विषः परिबाधो जही मृधः। वसु स्पार्हं तदाभर॥

त्रिशोकस्यार्षम् । भिन्धि विदारय । मारयेत्यर्थ । विश्वा सर्वा । अप । उपसर्गश्रुते क्रियापदमध्याह्रियते । अपेत्य । असमत्त अपनीय

इत्यर्थ । द्वेष्टीति द्विट । तान् द्विप । शत्रूनित्यर्थ । परिबाध । पराति सर्वतो भावे । बाधा पीडा । सर्वतो यो बाधा करोति स । बाधयति बाधयते । क्विप । बाध । तान् सर्वत पीडाकरानित्यर्थ । भिर्धात्यत दनुपज्यते । नहि मृध मारय मृध । सङ्ग्रामनाम । मृध करोति मृधयति मृधयत । क्विप । मृध । तान् मृध । सङ्ग्रामकारिण इत्यर्थ । दत्वा च । तदाभरति परस्तात्तच्छब्दश्रुते याग्यार्थसम्बन्धो यच्छब्दोऽ याहर्तव्य । यद्देय वसु धनम् । स्पार्हम् स्पृहणीयम् । सारव दि यर्थ । तत् अस्मभ्य आभर आहर । देहीत्यर्थ ॥

अपेत्युपसर्ग उपरि श्रूयमाणा भिन्धीत्यनेन सम्बध्यते । छन्दसि परेऽपि (पा १ ४ ८१) व्यवहिताश्च (पा १ ४ ८२) इति स्मरणात् । अपभिन्धि विश्वा द्विष द्वर्ष्ट्री प्रजा सेना वा । परिजहि परितो बाधस्व । बाध बाधकान् । बाधते क्विप । मृध हिंसकाश्च परिजहि । वसु धन स्पार्हं स्पृहणीय यत् शत्रुभि गृहीत तदाभर आहर अस्मभ्यम् ॥ (१०)

द्वितीये चतुर्थ्यां दशत्या

---

इहव शृण्व एषा कशा हस्तेषु यद्वदान् । नि याम चित्रमृञ्जते ॥

कण्वस्यार्षम् । इह पृथिव्याम् । इवशब्द एवार्थे । इहैव पृथिव्या स्थितै । शृण्वे श्रूयत शब्द । एषा मरुताम् । कशा हस्तेषु व्यवस्थिता अश्वाना सारथय । यत् । सप्तम्या अत्र लुक् । यदा । वदान् वदन्ति शब्द कुर्वन्ति । यद्वदानिति परस्तात् यच्छब्दश्रुते पूर्वत्र तच्छब्दमध्याहृत्यै कवाक्यता याज्या । एषा कशा हस्तेषु व्यवस्थिता यदा शब्द कुर्वन्ति

तदा इहैव श्रूयते शब्दः । न केवलं तदैव । किं तर्हि । यदा च । नि इत्ययमुपसर्ग ऋञ्जते इत्यास्यानेन सम्बन्धयितव्यः । यान्ति येन स यामो रथः । तं यामं रथम् । कीदृशम् । चित्रं विचित्रं पूज्यं वा । नि ऋञ्जते नियमेन गमयन्ति । तदा च इहैव शब्दः श्रूयत इति ॥

कण्वः । इह अस्मिन् लोके शृण्वे श्रूयते । यक्स्थाने इतुः । लोपस्त आत्मनेपदेषु (पा. ७. १. ४१) इति तकारलोपः । एषां मरुतां शब्द इति शेषः । इवेति सप्तम्यर्थे । इवशब्द उपमानार्थः सम्प्रत्ययार्थोऽवधारणार्थः पादपूरणार्थश्च भवति । अत्र उपमार्थव्यतिरिक्तानां त्रयाणामन्यतमो ग्राह्यः । कशा अश्वघात्यः हस्तेषु स्थिताः । यत् यदा वदान् शब्दायेरन् तदा गर्जितशब्दः शृण्वे । नि यामन् नितरां गच्छेयुः । ऋञ्जते अलङ्कुर्वन्ति मरुत इति शेषः । चित्रं विचित्रं रथं स्वकीयं स्वकीयैरायुधालङ्करणैः । अंसेषु व ऋष्टयः पत्सु खादयो वक्षस्सु रुक्मा मरुतो रथे शुभः । अग्निभ्राजसो विद्युतो गभस्त्योः शिप्राः शीर्षसु वितता हिरण्ययीः (ऋ. वे. ५. ५४. ११) इति हि भवति ॥ (१)

इमा उ त्वा विचक्षते सखाय इन्द्र सोमिनः । पुष्टावन्तो यथा पशुम् ॥

त्रिशोकस्यार्षम् । इमे मदीया ऋत्विजः । उ इति पादपूरणः । त्वा त्वाम् । विचक्षते विविधं पश्यन्ति । सखाय स्तुत्यस्तोतृलक्षणेन सख्येन सखिभूताः । स्तुवन्त इत्यर्थः । हे इन्द्र । सोमिनः सोमवन्तः । कथं पुनः पश्यन्ति । उच्यते । पुष्टावन्तो यथा पशुम् । पोषणं पुष्टम् । तद्वन्तः पुष्टावन्तः । पोषणवन्त इत्यर्थः । एतदुक्तं भवति । यथा घासहारिणो ग्रासेन गृहीतेन पशोस्तर्पणार्थं परमया प्रीत्या युक्तास्तमेव पशुं पश्यन्ति तद्वन्मदीया ऋत्विजः सोमवन्तस्तेनैव सोमेन गृहीतेन तर्पणार्थं त्वा पश्यन्तीत्यर्थः ॥

त्रिशाक । इम सम्बाध स्तानार विचक्षत । त्वा प्रतिपालयान्त । उ इति पूरण । ह इन्द्र सामिन सामवन्त । पुरारन्त पापकृत्यासमयुक्ता जना यथा पशु विचक्षत धाम प्रयातु तन्त त्वा साम प्रयातु विचक्षत ॥ (२)

समस्य मन्यवे विशो विश्वा नमन्त कृष्टय । समुद्रायेव सिन्धव ॥

वत्सस्यार्षम् । समित्ययमुपसर्ग नमत इत्याख्यातेन सम्बन्धयितव्य । अस्येन्द्रस्य स्वभूताय । मन्यवे क्रोधाय । विश । यद्यपि विश इति मनुष्यनाम तथापि कृष्टय इत्यनेन पौनरुक्त्यप्रसङ्गात्क्रियानिमित्त द्रष्टव्यम् । विष्लृ व्याप्तावित्यस्येद रूपम् । स्तुतिभिर्हविर्भिश्च व्याप्ता । विश्वा सर्वा । सनमन्त प्रह्वीभवन्तीत्यर्थ । क पुन प्रह्वीभवन्ति । उच्यते । कृष्टय यजमानमनुष्या इत्यर्थ । कथ पुन सन्नमन्त । उच्यते । समुद्रायेव सिन्धव । यथा समुद्राय सिन्धव नद्य प्रह्वीभवन्ति तद्वदित्यर्थ ॥

वत्स । सन्नमन्त प्रह्वीभवन्ति । अस्य इन्द्रस्य मन्यवे क्रोधाय । विश निविष्टा । विश्वा कृष्टय प्रजा । समुद्रायेव सिन्धव नद्य ॥ (३)

देवानामिदवो महत्तदा वृणीमह वयम् । वृष्णामस्मभ्यमूतय ॥

कुर्मीस्ति आर्षम् । देवाना स्वभूतम् । इदिति पादपूरण । तदा वृणीमह इति परस्तात्तच्छब्दश्रुत यच्छब्दोऽध्याहर्तव्य । यत अव पालन तर्पण वा महत् तत् आवृणीमह आभिमुख्येन प्रार्थयाम वयम् । कीदृशाना देवानाम् । उच्यते । वृष्णा वर्षितॄणाम् । किमर्थ पुन प्रार्थयाम । उच्यते । न अस्मभ्यम् । ऊतय पालनार्थमित्यर्थ ॥

कुर्मीदा काण्व । देवानामित् देवानामेव अवा रक्षण महत् नियत । वृष्णा वर्षितॄणाम् । तत् रक्षण आवृणीमह प्रार्थयामा वय अस्मभ्य ऊतय रक्षणाय ॥ (४)

सोमानां स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥

मेधातिथेरार्षम् । सोमानाम् । अभिषोतारमिति वाक्यशेषः । स्वरणम् । स्वृ शब्दोपतापयोरित्येतस्यैतद्रूपम् । शब्दयितारं स्तुतीनामुच्चारयितारम् । स्तोतारं यष्टारं चेत्यर्थः । मा कृणुहि कुरु । हे ब्रह्मणस्पते । कमिव । उच्यते । कक्षीवन्तम् । लुप्तोपममिदं द्रष्टव्यम् । कक्षीवन्तमिव । य कतमः कक्षीवान् । उच्यते । य औशिज य उशिज पुत्र । तमिव ॥

मेधातिथि. । सुनोति अभिषुणोति सोममिति सोमाना तद्वता स्वरणम् । स्वृ शब्दोपतापयो' इति । शब्दवन्त कीर्तिमन्त कृणुहि कुरु हे ब्रह्मणस्पते । कक्षीवन्तमिति लुप्तोपमा । कक्षीवन्तमिव । यः कक्षीवानौशिजः उशिजः पुत्रः । उशिजा नाम कक्षीवतो जनेति । दीर्घतमा हि तस्य पिता ॥　　(५)

बोधन्मना इदस्तु नो वृत्रहा भूर्यासुतिः । शृणोतु शक्र आशिषम् ॥

श्रुतकक्षस्यार्षम् । बोधन्मना । बुध्यति मनो यस्य स बोधन्मनाः । इदिति पादपूरण । अस्तु भवतु । न अस्माकम् । वृत्रहा वृत्रस्य हन्ता इन्द्र । भूर्यासुतिः । भूरीति बहुनामधेयम् । अत्र आसुतिशब्दो रसवचन । ता सम्राजा घृतासुती (ऋ. वे. १. १३६. १) इति यथा । भूरि आसुतिर्यस्य स भूर्यासुतिः । बहुरस इत्यर्थ । शृणोतु शक्र आशिषं प्रार्थनाम् । एतदुक्तं भवति । यद्यदहं प्रार्थयामि तच्छृणोतु शक्र । श्रुत्वा च बुध्यतु । बुद्ध्वा च सम्पादयतु ॥

श्रुतकक्षः । बोधन्मनाः बुध्यमानचित्तः स्तोत्रावधारणपरचित्तः । इत् एव । बोधन्मना एव अस्तु । नः अस्माकं इन्द्रः भूर्यासुतिः बहुतसोमपान इत्यर्थः ।

अथवा बोधन्मना इति विशेषणम् । भूर्यासुति बहुत्वप्रद अस्माक इति । वृत्रहा शक्र इन्द्र शृणोतु न आशिष आशासन अस्माकम् ॥ (६)

**अद्य नो देव सवितः प्रजावत्सावी सौभगम् । परा दु ष्वप्न्यं सुव ॥**

श्यावाश्वस्यार्षम् । अद्य न अस्मभ्यम् । देव सवित । सविता आदित्य । तस्य सम्बोधन हे सवित ! प्रजावत प्रजासहितम् । सावी अभ्यनुजानीहि । देहीत्यर्थ । सौभगम् । भगमिति धननाम । शोभन भग सुभगम् । सुभगमेव सौभगम् । स्वार्थिकस्तद्धित । शोभन धनमित्यर्थ । किञ्च परा दु ष्वप्न्य सुव । परा इत्ययमुपसर्ग सुवेत्याख्यानेन सम्बन्धयितव्य । सुवेति षू प्रेरणे इत्यस्येद रूपम् । दु ष्वप्न्यम् । अनिष्टस्य कस्यचित्सूचक स्वप्न दु स्वप्न । तस्मिन्भव दु ष्वप्न्य मरणादि । तत्परासुव प्रेरय । अपनयत्यर्थ ॥

श्यावाश्व । अद्य अस्मिन्नपि दिने न अस्मभ्य हे देव सवित प्रजावत् प्रजाभि सहित सौभग सुभगत्व सुधनत्व सावी प्रसुव प्रेरय । परासुव पराणुद दु ष्वप्न्य दु स्वप्नम् ॥ (७)

**क स्य वृषभो युवा तुविग्रीवो अनानत । ब्रह्मा कस्तं सपर्यति ॥**

प्रगाथस्यार्षम् । क स्य स । तच्छब्दश्रुतेर्यच्छब्दो योग्यार्थ सम्बन्धोऽध्याह्रियत । य उक्तगुण इन्द्र क स वृषभ वर्षिता अपाम् । युवा तरुण । तुविग्रीव पुरुग्रीव । बहुग्रीव इत्यर्थ । कथमिन्द्रो बहुग्रीव । उच्यते । परमात्मस्वरूपत्वात् ।

सर्वत पाणिपादान्त सर्वतोऽक्षिशिरोमुख ।
सर्वत श्रुतिमँल्लोके सर्वमावृत्य तिष्ठति ॥

इत्येवं तुविग्रीव । अनानत शत्रुं प्रति अप्रह्वीभूत इत्यर्थ । किमर्थं पुनः पृच्छ्यते । उच्यते । ब्रह्मा कः प्रजापति भूताना निर्माता । अध्वर्युरपि यज्ञस्य निर्माता । अतो निर्मातृत्वसामान्यात्क शब्देनात्राध्वर्युरुच्यते । ब्रह्मा च अध्वर्युश्च । तं सपर्यति परिचरतीत्यर्थ । पूजयति वा । यतः एवमत पृच्छ्यते । अथवा एतस्मात्कारणादनानत यत ब्रह्मा प्रजापतिः तं परिचरति । क स इति ॥

प्रगाथ. काण्व· । क इत्यत्र कम्पा न दीर्घे. । क कस्मिन् यजमाने च भवति । स्य सः । वृषभः वर्षिता । युवा तुविग्रीव प्रवृद्धकन्धरः । अनानतः अप्रणतः कस्मैचिदिन्द्रः । ब्रह्मा परिवृत· ऋत्वादिभि· । कः स्तोता । तं सपर्यति परिचरति स्तुतिभिः ॥ (८)

उपह्वरे गिरीणां संगमे च नदीनाम् । धिया विप्रो अजायत ॥

वत्सस्यार्षम् । उपह्वरे गह्वरे प्रदेशे । गिरीणा मेघाना सम्बन्धिनि । बहुमेघप्रदेशे इत्यर्थ । सङ्गमे च नदीना शब्दकारिणीनामपाम् । बहूदके प्रदेशे इत्यर्थ । धिया प्रज्ञया । विप्र मेधावी । अजायत जायते । एतदुक्तं भवति । यत्र प्रदेशे बहवो मेघा यत्र च बहूदकं तत्र तेषा हवनार्थं तस्य चोदकस्य पानार्थं इन्द्र इति ॥

वत्सः । उपह्वरे समीपे गिरीणा मेघाना शैलानाम् । सगमे च नदीना अजायत प्रादुर्भवति इन्द्रः धिया कर्मणा युक्तः विप्रः प्राज्ञः ॥ (९)

प्र सम्राजं चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भि. । नरं नृषाहं मंहिष्ठम् ॥

इरिम्बिठिर्नाम ऋषि । तस्येदमार्षम् । प्रेत्ययमुपसर्गः स्तोतेत्यास्यातेन सम्बन्धयितव्य· । सम्राजं सम्यगीशानम् । चर्षणीना

मनुष्याणाम् । इन्द्र प्रस्तोता प्रकर्षेण स्तुवन् हे मदीया ऋत्विग् । कीदृश पुन इन्द्र स्तुम । उच्यते । नव्य नवतरम् । तरणमित्यर्थ । अथवा नु स्तुतावित्यस्येद रूपम् । यदि प्रत्यये कर्मणि कारक रूपम् । एतदुक्त भवति । स्तोतव्यमिन्द्र प्रकर्षेण स्तुत । केन पुन स्तुम । उच्यते । गीर्भि स्तुतिलक्षणाभिर्वाग्भिरित्यर्थ । कीदृश पुनरिन्द्र स्तुम । उच्यते । नर नराकारम् । नृषाहम् । नरो मनुष्या । तान् य सहते अभिभवति स नृषाट । त नृषाहम् । शत्रुमनुष्याणामभिभवितारमित्यर्थ । महिष्ठ अतिशयेन स्तोतृभ्य यष्टृभ्यश्च दातृतमम् ॥

इरिम्बिठि । प्रस्तोत प्रकर्षेण स्तुत हे यजमाना । तप्तनप्तनथनाश्च (पा ७ १ ४५) इति तस्य तपादेश । सम्राज ईश्वरम् । चर्षणीना प्रजानाम् । इन्द्र नव्य स्तुत्यम् । गीर्भि स्तुतिभि । प्रस्तोतेति समन्वय । कम् । नर नेतारम् । नृषाह नृणामभिभवितारम् । महिष्ठ दातृतमम् ॥ (१०)

द्वितीये पञ्चम्या दशत्या

---

अपादु शिप्र्यन्धसः सुदक्षस्य प्रहोषिणः । इन्दोरिन्द्रो यवाशिरः ॥

श्रुतकक्ष्यस्यार्षम् । अपात् पीतवान् । उ पादपूरण । इन्द्र । कीदृश । उच्यते । शिप्री । शिप्रे हनू नासिके वा । तद्वान् शिप्री । कस्य पुन पीतवान् । उच्यते । अन्धस अन्नस्य । षष्ठीनिर्देशात् सोपलक्षणम् । एकदेशम् । कीदृशस्य अन्धस । उच्यते । सुदक्षस्य सुष्ठु उत्पादितस्येत्यर्थ । प्रहोषिण । जुहोतेर्दानार्थस्येद रूपम् । सुष्ठु मया

दत्तम्येत्यर्थ । किंलक्षणम्य पुनरन्वस पीतवान् । उच्यते । इन्दो सोमम्य । यवाशिर । यवशब्देनात्र यवविकारा सक्तव उच्यन्ते । तेषा मिश्रण यम्य स यवाशिर । प्रथमा च षष्ठ्यर्थे द्रष्टव्या । यवमिश्रितम्येत्यर्थ । मन्थी च नाम ग्रह । स सक्तुभिर्दृश्यते । मन्थिन सक्तुभि इति वचनम् । तमेवे क्षितैनदुच्यते यवाशिर इति ॥

श्रुतकक्ष । अपात् पिबतु शिप्री सुहनु इन्द्र । उ इति पूरण । अन्धस अन्नस्य । सुदक्षस्य सुबलस्य । प्रहोषिण स्तुतिमत । स्तुतो ह्यभिषवप्र मानेन । इन्दोः दीप्तस्य । यवाशिर यवविकारा सक्तव आशिश्रयण यस्य तस्य । तदन्ध सोममित्यर्थ ॥　　　　(१)

इमा उ त्वा पुरूवसोऽभि प्र नोनवुर्गिर । गावो वत्सं न धेनवः ॥

मेधातिथेरार्षम् । इमा । उ इति पादपूरण । त्वा त्वाम् । पुरूवसो । पुर्विति बहुनाम । वसु इत्यपि धननाम । पुरु वसु यम्य स पुरुवसु । तम्य सम्बोधन हे पुरूवसो । वोरुपधाया दीर्घ (पा. ८. २ ७६) इति । पुरुवसो बहुधन । अभिप्रनोनवु । आभिमुख्येन स्थित्वा अत्यर्थ पुन पुनर्वा स्तुतवत्य । गिर । अस्मदीया वाच । कथ पुन स्तुतवत्य । उच्यते । गावो वत्स न । नशब्द उपरिष्टादुपचारत्वादुप मार्थीय । वत्समिव । यथा गाव वत्समभिनन्दन्ति तद्वदित्यर्थ । कीदृश्यो गाव । उच्यते । धनव अचिरप्रसूता इत्यर्थ ॥

मेधातिथि । इमा गिर । गृणन्ति स्तुवन्तीति गिरः प्रजा । उ. पूरण । त्वा अभिप्रनोनवु प्रणुवन्ति प्रकर्षेण स्तुवन्ति । हे पुरूवसो बहुधनेन्द्र । गावो धेनवो दोग्ध्र्य इव वत्सम् । न. इवार्थे । हिंकुर्वन्ति हि वत्स गाव ॥　　　　(२)

**अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे ॥**

गौतमस्यार्षम् । अत्रेत्यनेन चन्द्रमस गृहं प्रतिनिर्दिश्यते । चन्द्रमसो मण्डल गृहम् । अत्र चन्द्रमसो गृहे । गोशब्देनापि । सुषुम्ना नाम आदित्यरश्मि चन्द्रमस प्रति गत । अल्पत्वाच्चन्द्रमण्डलस्य रश्मिः प्रतिगत तत परावृत्य पृथिव्या ज्योत्स्नारूपेण दीप्यते । सोऽत्र गोशब्देनोच्यते । तस्य चन्द्रमसं प्रति गता रश्मय । अमन्वत । अनुमन्यन्ते । नाम नमनं प्रह्वीभावम् । त्वष्टु आदित्यस्य । अपीच्यं अपगतं अपिहितमन्तर्हितं वा । क अनुमन्यन्ते । इत्था अमुत्र । चन्द्रमसो गृहे मण्डले ॥

गोतमः । दुर्ज्ञेयत्वात् अस्याः ऋच यास्कनिरुक्त तावत् लिख्यते । आदित्योऽपि गौः उच्यत इति प्रकृत्या । अथाप्यस्य एको रश्मि चन्द्रमसं प्रति दीप्यते । तत एतेन उपेक्षितव्यम् । आदित्यतोऽस्य दीप्तिः भवति इति । सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वः इति अत्र निगमो भवति । सोऽपि गौरुच्यते । अत्राह गोरमन्वत इति । तदुपरिष्टात् व्याख्यास्याम इति । तथान्यत्र गौर्व्याख्यातः । अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे । अत्राह गोः सममंसतादित्यस्य रश्मिभि. स्व नामापीच्यं अपगत अपहृत अपचितं अन्तर्हितं वा अमुत्र चन्द्रमसो गृहे इति । अस्याश्च इन्द्र एव सूर्यात्मना स्तूयत इति ऐन्द्रसूक्तसङ्गतिः । अयमृचोऽर्थ । अत्रान्तरिक्षे । अहेति विनिग्रहार्थ एवशब्दपर्याय । गोः सुषुम्नाख्यस्य सूर्यरश्मेः । नाम नमन अवस्थानम । अमन्वत अमस्त । अनुजानन्तीत्यर्थः । के । आदित्यरश्मय. । त्वष्टुरादित्यस्य अपीच्य अन्तर्हितम् । इत्था अमुत्र । चन्द्रमसो गृहे मण्डले अन्तरिक्षे । त्वष्टुर्यो गौः सुषुम्नाख्यो रश्मिः तस्य मण्डलेऽन्तर्गता आदित्यस्य रश्मयः ॥　　(३)

**यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः । तत्र पूषा भुवत्सचा ॥**

भरद्वाजस्यार्षम् । यत मेघस्थानम् । इन्द्रो रित गत । प्राप्त सन्नित्यर्थ. । अनयत् नयति । पृथिव्या पातयतीत्यर्थ । महीरप महान्ति

वृष्टिलक्षणान्युदकानि । कीदृश इन्द्र । उच्यते । वृषन्तम अतिशयेन वर्षिना । तत्र तत्स्थाने । पूषा भुवत् भवति । सचा सह । पूष्णा सहितो वर्षति । न केवलं वर्षतीत्यर्थ ॥

भरद्वाज । यत् यदा इन्द्र अनयत् गमयति । रितः गन्त्र्यः । रियतेर्गतिकर्मण क्विपि रूप रिदिति । मही महती अप । वृषन्त्म वर्षितृतम. । तत्र तदा पूषा देवः भुवत् भवति । सचा सहाय इन्द्रस्य ॥ (४)

गौर्धयति मरुतां श्रवस्युर्माता मघोनाम् । युक्ता वह्नी रथानाम् ॥

बिन्दोर्वा पूतदक्षस्य वा आर्षम् । गौ शब्देनात्र माध्यमिका वाक् उच्यते । सा धयति पानार्थमुदकं रक्षति । वर्षतीत्यर्थ । मरुता माता । श्रवस्यु । श्रव शब्देन कीर्तिरुच्यते । तामिच्छति श्रवस्यति श्रवस्यते । उप्रत्यय । श्रवस्यु । कीर्तिकाम इत्यर्थः । कीदृशाना पुनर्मरुता माता । उच्यते । मघोनाम् । मघं धनम् । तदेषामस्ति ते मघवान । तेषा मघोनाम् । धनवतामित्यर्थ । किं केवलैव गौर्वर्षति । नेत्युच्यते । युक्ता तैरेव पुत्रै । मरुद्भि सहितेत्यर्थ । वह्नि मातृत्वात्तेषामेव मरुता वोढ्री । कीदृशाना पुनर्मरुता वोढ्री । उच्यते । रथाना रथस्वभावकानामित्यर्थ ॥

बिन्दुः पूतदक्ष वा । गौः वाक् माध्यमिका । धयति पिबति सोमन् । मरुता मघोना धनवता माता श्रवस्यु अन्नकामा । श्रवोऽन्नम् । युक्ता उद्युक्ता वह्निः वोढ्री विश्वस्य । रथाना रंहणाना गन्तृणामिति मरुता विशेषणम् ॥ (५)

उप नो हरिभिः सुतं याहि मदानां पते । उप नो हरिभिः सुतम् ॥

श्रुतकक्षस्यार्षम् । उपेत्ययमुपसर्ग आ इत्येतस्य स्थाने द्रष्टव्य याहीत्यस्यातेन सम्बध्यते । आयाहीति । केन पुनरागच्छामीति । उच्यते ।

हरिभिः अश्वैरित्यर्थः । किं पुनः प्रति आगच्छामि । उच्यते । नः सुतम- स्माकं स्वभूतमभिषुतं सोमं प्रति । मदानां पते । मदाः सर्वाः । तेषामधिपते । अथवा मादयन्तीति मदाः सोमाः । तेषामधिपतिभूत । उप नो हरिभिः सुतं इत्यस्याने । अभ्यासेन च भूयानर्थः प्रतीयते । अस्माकं स्वभूतमभिषुतं सोमं प्रति शीघ्रमागच्छेत्यर्थः ॥

शुनकस्य इव क्रतोः । उप याहि उपगच्छ । नः अस्माकम् । सुतं सोमम् । हरिभिः अश्वैः । हे मदानां पते सोमानां स्वामिन्निन्द्र । उप इति पुनर्वचनमादरार्थम् ॥ (६)

**इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे । अच्छावभृथमोजसा ॥**

श्रुतकक्षस्यार्षम् । ऋत्विग्भ्यो यजमानान् ऋत्विज आह । इष्टा प्रिया । होत्रा । हूयन्ते इति होत्राः । आहुतय इत्यर्थः । ता असृक्षत विसृष्टवत । दत्त इत्यर्थः । कथं पुनर्विसृष्टवान् । उच्यते । इन्द्रं वृधन्तः वर्धयन्तः । अध्वरे यज्ञे । केन । सामभिः स्तुतिभिः स्तुवन्त इत्यर्थः । क पुनर्विसृ- ष्टवान । उच्यते । अच्छ अवभृथ आप्नुवन्नवभृथमित्यर्थः । प्रधानाहुतिषु कृतासु अवभृथसंज्ञकं कर्म करिष्यते । एवमवभृथमित्यर्थः । ओजसा स्वेन कर्मणा सामर्थ्येन वा ॥

इष्टा इति यजेः कर्तरि क्तः । इष्टवत्यः । इन्द्रं होत्राः सप्तकर्तारः । होत्रा इन्द्र खल्विड् । सप्त होत्राः प्राचीर्वषट्कुर्वन्तीति । अनुक्रमे । ऋत्विग्भिः प्रयुक्ता भवन्ति । अवभृथ अच्छ अभि वृधन्तो वृद्धाः सोमपानेन । अध्वरे यज्ञे । ओजसा च युक्ताः । ये यज्ञं समाप्य अवभृथं अभिगच्छन्ति ते प्राधान्येन इन्द्र यजन्तीत्यर्थः ॥ (७)

**अहमिद्धि पितुः परिमेधामृतस्य जग्रह । अहं सूर्य इवाजनि ॥**

वत्सस्यार्षम् । अहम् । इत् हि द्वावपि पादपूरणौ । पितु कण्वस्य सकाशात । परीत्यय जग्रहे इत्यास्यातेन सम्बन्धयितव्य । मेधा प्रज्ञाम् । कीदृशस्य पितु सकाशात । उच्यते । ऋतस्य सत्यस्य । परिजग्रह परिगृहीतवान् । तया च गृहीतया अहं सूर्य इव अजनि । यथा सूर्य सर्वार्थाना द्रष्टा तद्वदहमपि सर्वार्थाना मन्द्रष्टा सञ्जात इत्यर्थ ॥

वत्स एव । अह पितु. मम कण्वात् परि । परीति पञ्चम्यर्थानुवादकः । मेधा बुद्धि ऋतस्य यज्ञस्य इन्द्रविषयस्य स्तोत्रस्य । तद्विषयामित्यर्थ । जग्रह गृहीतवान् अस्मि । हि इति हेतौ । यस्मात् गृहीतधिय: अह ततः अहं सूर्य इव अजनि अभूव तेजसा इति इन्द्रस्तुतिः ॥　　　　(८)

## रेवतीर्णः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥

शुन शेपस्यार्षम् । रयिरिति धननाम । तद्यासा विद्यते ता रेवती । द्वितीयाबहुवचनमिद प्रथमाबहुवचनस्य स्थाने द्रष्टव्यं सन्त्वित्या-स्यातेन सम्बध्यते । धनवत्यो भवन्त्वित्यर्थ । का । सामर्थ्यात्स्तुतय । कस्य सम्बन्धिन्य । उच्यते । सधमादे इन्द्रे । द्वेऽप्येते सप्तम्येकवचने षष्ठ्येकवचनस्य स्थाने द्रष्टव्ये । अस्माकं सहभूताना महनीयस्य स्तुत्यस्य इन्द्रस्य सम्बन्धिन्य । न केवलं धनवत्यो भवन्त्विति । किं तर्हि । तुवि-वाजाः । तुवि इति बहुनाम । वाज इति अन्ननाम । तुवि बहु वाजोऽन्नं यासा ता तुविवाजा । प्रभूतान्ना । एतदुक्तं भवति । धनस्य साधका भवन्त्वित्यर्थ । क्षुमन्त । क्षु । क्षु शब्दे इत्यस्येद रूपम् । शब्दवन्त कीर्ति-मन्त । याभिर्मदेम मोदेमेत्यनदाशास्महे ॥

शुनश्शेपः । रेवतीः । रयिमत्य । जसि पूर्वसवर्णदीर्घः वा छन्दसि (पा. ६. १. १०६) इति । रेवत्यः । गाव इत्यर्थः । पशवो वै रेवत्यः इति

श्रुत्यन्तरम् । नः अस्माकम् । सधमादे । सह माद्यति इति सधमाद । इन्द्रे अस्माभि सङ्गमादौ मति इति एतत् । सन्तु भवन्तु । तुविवाजाः बहुला । याभि रेवतीभि वय क्षुमन्त कीर्तिमन्तः मदेम हृष्येम । क्षु शब्दे इत्यस्मात् क्षु ॥ (९)

## सोमः पुषा च चेततुर्विश्वासां सुक्षितीनाम् । देवत्रा रथ्योर्हिता ॥

वामदेवस्यार्षम् । सोम पूषा च चेततु जानीत विश्वामा सुक्षितीनाम् । एते द्वितीयार्थे षष्ठ्यौ । विश्वा सुक्षिती सर्वान्सुनिवासान् । किं । देवत्रा । देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् । (पा. ५ ४. ५६) इत्येवमत्र सप्तम्यास्त्रा । तेन देवेषु चेततु । रथ्यो । रथशब्देनात्र यज्ञ उच्यते । रहतेर्गतिकर्मण । रथ्यो । रथस्य यज्ञस्य यौ वोढारौ तौ पत्नीयजमानावत्र रथ्यावुच्यते । तयो । यज्ञस्य देवान् प्रति प्रापयित्रो पत्नीयजमानयो । हिता । द्विवचनस्यायमाकार । हितौ ॥

वामदेव । सोम च पूषा च उभौ देवौ चेततु जानीत । विश्वासा सुक्षितीना शोभनाना क्षितीना प्रजानाम् । कर्मणि षष्ठी । सुकृत प्रजा जानीत इत्यर्थ । देवत्रा देवेषु। रथ्यो । रथनेता रथिः । रथनायकयो । हिता निहितौ प्रजापतिना ॥ (१०)

द्वितीये षष्ठ्या दशत्या

---

पान्तमा वो अन्धस इन्द्रमभि प्र गायत ।
विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनाम् ॥

श्रुतकक्षस्यार्षम् । पान्तं पिबतम् । आकार पादपूरणः । व । द्वितीयाबहुवचनमिद प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम । यूयं हे ऋत्विज· । किं पुन पिबतम । उच्यते । अन्धस । अन्ध अन्नं सोमलक्षणम् । तस्मादियं षष्ठी । षष्ठीनिर्देशाच्च एकदेशमिति वाक्यशेष । सोमलक्षणस्यान्नस्य एकदेशं पान्तम् । इन्द्रमभि प्रगायत । गायतीत्यर्चतिकर्म । प्रशब्द प्रकर्षे । अभि· आभिमुख्ये । आभिमुख्येन स्थित्वा प्रकर्षेण स्तुतेत्यर्थ. । कीदृशं पुनरिन्द्रं स्तुम । उच्यते । विश्वासाहं सर्वेषा शत्रूणामभिभवितारं विश्वसहं वा । शतक्रतुम् । शतमिति बहुनाम । क्रतुरित्यपि कर्मनाम प्रज्ञानाम वा । बहूनि कर्माणि प्रज्ञा वा यस्य स शतक्रतुः । बहुकर्माणं बहुप्रज्ञं वेत्यर्थ· । मंहिष्ठम् । मंहतिर्दानकर्मा । तस्मात्कर्तरि तृच् । तृजन्तादिष्ठन् । अतिशयेन दातारमित्यर्थः । कस्मै पुनर्दातारम् । उच्यते । चर्षणीनाम् । चर्षणयो मनुष्या. । षष्ठीबहुवचनं चतुर्थीबहुवचनस्य स्थाने द्रष्टव्यम् । यजमानमनुष्येभ्य इत्यर्थ· ॥

श्रुतकक्षः । एतदाद्याः प्रायशः रात्रिपर्यायाणा स्तोत्रीयाः । सुबन्तैरपि उपसर्गाणा असमस्ताना आख्यातैः इव सम्बन्धा दृश्यन्ते । अप विश्वा दुरिता बाधमानः (ऋ. वे. १. ३९. ३) आपान्तं आपिबन्तं आपास्यन्त अन्धसः अन्नस्य । सोममित्यर्थः । इन्द्रं अभि प्रगायत । वो यूयं हे सपापाः । विश्वासाहं विश्वस्मै अभिभवितारम् । शतक्रतुम् । क्रतुः कर्म प्रज्ञा वा । मंहिष्टं दातृतमम् चर्षणीनां जनाना यज्वनां स्तोतृणा च ॥ (१)

प्र व इन्द्राय मादनं हर्यश्वाय गायत । सखायः सोमपाव्ने ॥

वसिष्ठस्यार्षम् । प्रेत्ययमुपसर्गः गायतेत्याख्यातेन सम्बन्धयितव्यः । प्रगायत प्रकर्षेण स्तुतेत्यर्थः । वः । द्वितीयाबहुवचनमिदं प्रथमाबहुवचनस्य

स्थाने द्रष्टव्यम् । यूय हे ऋत्विज । क पुन स्तुम । इन्द्राय । चतुर्थ्येकवचनमिद षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । इन्द्रस्य । मादन सोममित्यर्थ । कीदृशस्येन्द्रस्य । उच्यते । हर्यश्वाय । इदमपि चतुर्थ्येकवचन षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । हरितवर्णावश्वौ यस्य स हर्यश्व । तस्य हर्यश्वस्य । सगाय ऋत्विज । सोमपाव्ने । इयमपि चतुर्थी षष्ठ्यर्थे । सोमपातुरिन्द्रस्य मदकर सोम स्तुतेत्यर्थ ॥

वसिष्ठ । व यूय इन्द्राय इन्द्रार्थ मादन मदकर स्तोत्र हर्यश्वाय इन्द्राय हे सगाय प्रस्तात्रादय सामपाव्ने सामाना पात्र । यद्यपि अन्यासामपि देवताना सोमपान विद्यत तथापि अतिशयेन इन्द्रस्य अस्ति । त्रिष्वपि सवनेषु प्रस्थितयाज्याना मुख्या ऐन्द्रय । प्रातस्सवन होतु शस्त्रयाज्यासु ऐन्द्रावारुणी ऐन्द्राबार्हस्पत्या ऐन्द्रावैष्णवी इति च विद्यत । उक्थ्येऽपि शस्त्रयाज्या तदेवत्या एव ऐन्द्रावारुणी ऐन्द्राबार्हस्पत्या ऐन्द्रावैष्णवी इति । षोडशिस्तोत्रशस्त्रे एन्द्रे । रात्रिपर्याया सर्वे ऐन्द्रा ॥ (२)

**वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः । कण्वा उक्थेभिर्जरन्ते ॥**

मेधातिथेरार्षम् । वयम् । उ इति पादपूरण । त्वा त्वाम् । कीदृशा वयम् । उच्यते । तदिदर्था । इच्छब्द पादपूरण । यत्तदर्थो यागादि स अर्थो यषा ते तदर्था । यागपरा इत्यर्थ । हे इन्द्र त्वायन्त त्वा यष्टुमिच्छन्त । सखाय सखिभूता तव । कण्वा कण्वस्य पुत्रा मेधातिथिप्रभृतय । उक्थभि स्तोत्रै । जरन्ते स्तुवन्तीत्यर्थ ॥

मेधातिथि प्रियमेधश्च द्रष्टारौ । वय त्वा स्तुम इति शेष । उ पूरण । तदिदर्था स ऐश्वर्य प्रयोजन येषा ते तदिदर्था स्तुत्येकपरा । उत्तमेन आपरोक्ष्येण कीर्तयति आदरार्थम् । हे इन्द्र त्वायन्त त्वत्कामा

सखाय: स्तोतार: कण्वा: कण्वपुत्रा: उक्थेभि: स्तोत्रै: जग्न्ते स्तुवन्ति त्वाम् ॥ (३)

इन्द्राय मद्वने सुतं परिष्टोभन्तु नो गिरः । अर्कमर्चन्तु कारवः ॥

श्रुतकक्षस्यार्षम् । इन्द्राय । तादर्थ्ये चतुर्थी । इन्द्रार्थम् । कीदृशाय इन्द्राय । उच्यते । मद्वने । इयमपि तादर्थ्ये चतुर्थी । मदवत इन्द्रस्यार्थाय । सुतं अभिषुतं सोमम् । परिष्टोभन्तु सर्वत स्तुवन्तु । न अस्माकं स्वभूता । गिर: स्तुतिलक्षणा वाच । अर्कं देवं सोमम् । अर्चन्तु पूजयन्त्वित्यर्थः । मदीया: कारव: स्तोतार । ऋत्विज इत्यर्थ. ॥

श्रुतकक्षः । इन्द्राय मद्वने मदनशीलाय । तदर्थं सुतं सोमं परिष्टोभन्तु परि अभिस्तुवन्तु । नः अस्मदीया गिरः वाचः । अर्कं अर्चनीयं इन्द्रं त्वा अर्चन्तु कारवः स्तोतारः ॥ (४)

अयं त इन्द्र सोमो निपूतो अधि बर्हिषि । एहीमस्य द्रवा पिब ॥

इरिम्बिठिर्नाम ऋषि: । तस्येदमार्षम् । अयं सोम । ते इति तादर्थ्ये एषा चतुर्थी । त्वदर्थमित्यर्थ । हे इन्द्र निपूतः नियमेन दशापवित्रशोधित इत्यर्थ । क पुनर्निपूत । उच्यते । अधि बर्हिषि । बर्हिष उपरि । एतत् ज्ञात्वा आ आभिमुख्येन । इहि द्रव इति द्वावपि गत्यर्थौ । अभ्यासे च भूयांसमर्थं मन्यन्ते । शीघ्रमेहीत्यर्थ. । ईमिति पादपूरणः । एत्य च अस्य सोमस्य । षष्ठीनिर्देशात्स्वाङ्गं पिब ॥

इरिम्बिठिः । अयं सोमः हे इन्द्र ते त्वदर्थं निपूतः नितरां शोधितः अधि बर्हिषि स्थितः । अतः एहि आगच्छ । ईं एनम् । अस्य इमं पिब । अस्य द्रव त्वरितमागच्छ ॥ (५)

**सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यवि द्यवि ॥**

मधुच्छन्दस आर्षम् । सुरूपकृत्नुं शोभनस्य वृत्रवधादेः कर्मणः कर्तारमिन्द्रम् । ऊतये आत्मन पालनार्थं तस्यैव तर्पणार्थं वा । सुदुघामिव सुदोहनामिव । गोदुहे तस्या एव गोदोहनार्थम् । एतदुक्तं भवति । यथा कश्चिद्गोदोहकर्मा तस्या एव गोदोहनार्थमाह्वयति तद्वत् जुहूमसि आह्वयाम । द्यवि द्यवि अहन्यहनीत्यर्थः ॥

मधुच्छन्दाः । सरूपकृत्नुं सुरूपाणां कर्मणां कर्तारं इन्द्रं जुहूमसि । पुनः पुनराह्वयाम । द्यवि द्यवि दिने दिने । ऊतये रक्षणार्थं तर्पणाय वा । सुदुघामिव दोग्धुं सुशकामिव गां गोदुहे गोदोहनाय । गोशब्दोऽनुवादः । दोहनाय इत्यर्थं ॥ (६)

**अभि त्वा वृषभा सुते सुतं सृजामि पीतये । तृम्पा व्यश्नुही मदम् ॥**

त्रिशोकस्यार्षम् । अभीत्ययमुपसर्गः सृजामीत्याख्यातेन सम्बन्धयितव्यः । अभिसृजामि । आभिमुख्येन ददामीत्यर्थः । किं तत् । पुरोडाशादिलक्षणं हविः । त्वा । प्रथमैकवचनमिदं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम् । ते । हे इन्द्र । वृषभ वर्षितः । कस्मिन् काले हविर्विसृजामि । सुते अभिषुते सोमे । न केवलं सुते सोमे हविरेव ददामि । किं तर्हि । सुतं सृजामि । अभिषुतं च सोमं ते ददामीत्यर्थः । पीतये पानार्थम् । दत्तं च सत् तृम्प भक्षय तर्पय आत्मानं वा । यद्भक्षयितव्यं तद्भक्षय । यत्पातव्यं तत्पिब । पीत्वा च व्यश्नुहि प्राश्नुहि । मदम् ॥

त्रिशोकः । *अभि उद्दिश्य त्वा त्वा हे वृषभ वर्षितः कामानां इन्द्र सुते । भावे निष्ठा । अभिषवे सति । सुतं सोमं सृजामि पीतये तव । तृम्पा तृप्य तेन सोमेन व्यश्नुहि व्याप्नुहि मदं हर्षं तृप्त्यर्थम् ॥* (७)

य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः। पिबेदस्य त्वमीशिषे ॥

वसीदिन आर्षम्। हे इन्द्र। चमसप्वा सोम। आकार पाद पूरण। चमसषु यवस्थित सोम इत्यर्थ। चमूषु अभिषवणफलकषु। त त्वदर्थम्। सुत अभिषुत सोम पिब। इत् इति पादपूरण। अथवा चमु भक्षण। भक्षणीयषु ग्रहचमसादिषु। अथवा बहुवचन बहुयज्ञापेक्षम्। बहुषु यज्ञष्वधिषवणफलकषु। अस्य सोमस्य। षष्ठीनिर्देशात् एकदेशमिति वाक्यशेष। कस्मात्पुनरह पिबामि। उच्यत। यस्मात्त्व ईशिष सर्वस्य ईश्वर ॥

कुसादी। य साम चमसेषु आ आसिक्त चमूषु अधिषवणफलकया। द्विवचने बहुवचन व्यत्ययात्। चम्वा सुत पिब त सोमम्। इदिति पूरण। अस्य सामस्य त्व ईशिषे ईश भवसि ॥ (८)

योगे योगे तवस्तर वाजे वाजे हवामहे। सखाय इन्द्रमूतये ॥

शुन शेपस्यार्षम्। योग नियोग व्यापार कर्म वृत्रवधादि। तस्मिन् सर्वस्मिन्। तव इति बलनाम। तवस्तर अतिशयन बलवत्। वाज वाज अन्ने अन्ने हविर्लक्षण उपकल्पित। हवामहे आह्वयाम इत्यर्थ। हे सखाय ऋत्विज। इन्द्र ऊतय तर्पणाय। अथवा योग अलब्धस्यार्थस्य लाभ। अस्मिन् सर्वस्मिन्। लाभार्थमित्यर्थ। अतिशयन बलवन्तम्। वाजे वाजे सर्वस्मिन् सङ्ग्राम। हवामहे हे सखाय। इन्द्रमूतय तर्पणाय आत्मन पालनार्थम् ॥

शुनश्शेप। यागे यागे सवषु योगेषु। अप्राप्ताना प्राप्तिर्योग। तदर्थं तवस्तर प्रवृद्धतर इन्द्रम्। वाजे वाजे सर्वेषु युद्धेषु अन्येषु वा निमित्तषु

हवामहे आह्वयाम. स्तुम इति वा । सखाय स्तोतृत्वेन सहायभूता वय इन्द्रम् । ऊतये रक्षणार्थम् ॥ (९)

**आ त्वेता निषीदतेन्द्रमभि प्र गायत । सखायः स्तोमवाहसः ॥**

मधुच्छन्दस आर्षम् । आ तु इति पादपूरणौ । आ इत क्षिप्रमागच्छत । एत्य च निषीदत । निषद्य च इन्द्रमभिप्रगायत आभिमुख्येन स्तुतेत्यर्थ । हे सखाय ऋत्विज. । स्तोमवाहस स्तोमाना प्रापयितार । स्तोतार इत्यर्थ ॥

मधुच्छन्दाः । आ इत्यय उपसर्ग इतेत्यनेन सम्बन्धनीय । तु क्षिप्र आ इत आगच्छत । उपसर्गाभ्या च आख्यातावृत्ति सूचयति । हे प्रस्तोत्रादयः आगच्छतागच्छत इति प्रत्येक स्तोतॄन् आह्वयति । निषीदत उपविशत स्तोतुम् । निषद्य इन्द्र अभि प्रगायत । हे सखाय प्रस्तोत्रादयः । हे स्तोमवाहस । स्तोमान् त्रिवृदादीन् स्तोत्राणि वा वहन्ति इति स्तोमवाहस ॥ (१०)

द्वितीये सप्तम्या दशत्या

---

**इदं ह्यन्वोजसा सुतं राधानां पते । पिबा त्वस्य गिर्वणः ॥**

विश्वामित्रस्यार्षम् । इदम् । नपुंसकलिङ्गं व्यत्ययेन पुल्लिङ्ग द्रष्टव्यम् । इमम् । हि अनु । द्वावपि पादपूरणौ । ओजसा बलेन । सुत अभिषुतं सोम ज्ञात्वा । हे राधाना पते धनानामधिपते । पिब । तु इति पादपूरण । अस्य । षष्ठीनिर्देशात् एकदेशमिति वाक्यशेष । हे गिर्वण ।

गिर स्तुतय । नाभिर्यो वन्यते सम्भज्यते स गिर्वणा । तस्य सम्बोधनं हे गिर्वण । स्तुतिभि सम्भजनीय ॥

विश्वामित्र । इद अन्नम । हि इति पूरणः । अनु आनुपूर्व्येण ओजसा बलेन सुत अभिषुत अस्माभिः अन्न सोमम् । त्वदर्थ इति शेषः । राधाना पते धनाना स्वामिन् पिब तु क्षिप्र अस्य । इद मन्न इत्यर्थः । हे गिर्वणः गीर्भिः वननीय । गिरा वा भर्तः ॥　　(१)

## महाँ इन्द्र पुरश्च नो महित्वमस्तु वज्रिणे । द्यौर्न प्रथिना शवः ॥

मधुच्छन्दस आर्षम् । महान् इन्द्र· पुरश्च परश्चेत्यर्थ सर्वस्मात् । नो इति पादपूरण । महित्वं माहात्म्यं च । अस्तु भवतु । वज्रिणे । चतुर्थ्येकवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । वज्रिणः वज्रवत. । इन्द्रस्येत्यर्थ । अतिभक्ततया एतदाशास्महे । किंच द्यौर्न । नशब्द उपरिष्टादुपचारत्वादुपमार्थीय । द्यौरिव । प्रथिना पृथुत्वेन । शव बलं सेनालक्षणम् । अस्त्वित्येतदनुषज्यते ॥

मधुच्छन्दाः । महान् भवति इन्द्रः पुरन्दरः । पुरश्च पुरस्तात् च नः अस्माक आगच्छतु रक्षणार्थम् । महित्वं महत्व अस्तु पुनश्च वज्रिणे इन्द्राय । इन्द्रस्येत्यर्थः । द्यौर्न अन्तरिक्षमिव भवतु । प्रथिना प्रथिम्ना पृथुत्वेन । शवः बलं इन्द्रस्य इति इन्द्रभक्त्या आशास्ते । वृत्रस्य चिद्वर्धमानस्य तनूः (ऋ. वे. ६. २४. ७) इति यथा ॥　　(२)

## आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय । महाहस्ती दक्षिणेन ॥

कुसीदिन आर्षम् । आ तू इति द्वावपि पादपूरणौ । नः अस्माकं स्वभूतं सोमम् । हे इन्द्र । क्षुमन्तम् । क्षु । क्षु शब्द इत्येतस्येदं रूपम् ।

कीर्तिमन्तम् । चित्र विचित्र पूज्य वा । ग्राभ ग्राह्य ग्रहणयोग्यम् । अभिसंस्कारै सम्स्कृतमित्यर्थ । सगृभाय सम्यक् गृहाण । गृहीत्वा च पिबेत्यभिप्राय । केन पुन गृह्णामि । महाहस्ती । महाश्चासौ हस्तश्च महाहस्त । तस्मादिद तृतीयैकवचनम् । महता हस्तेनेत्यर्थ । कतमन । उच्यते । दक्षिणेन ॥

क्षुमन्तं । आ इत्युपसर्गदर्शनात् योग्यक्रियापदाध्याहार । आहर न अस्मभ्य तु क्षिप्र हे इन्द्र । ग्राभ इति वक्ष्यमाण इहापि सम्बध्यते । क्षुमन्त कीर्तिमन्त कीर्तिसहित ग्राभम् । तदर्थं चित्र विचित्र ग्राभ धनम् । गृह्यते सगृह्यते सर्वं इति ग्राह । त सगृभाय सगृहाण । छन्दसि शायजपि (पा ३ १.८४) इति हल श्न शानजादेश । महाहस्ती महान् हस्त महाहस्त । महाहस्तवान् त्व दक्षिणेन हस्तेन ॥ (३)

अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे । सूनु सत्यस्य सत्पतिम् ॥

प्रियमेधस्य आर्षम् । अभीत्ययमुपसर्गं अर्चेत्याख्यातेन सम्बन्धयितव्य । प्रेति पादपूरण । गोपतिम् । गोशब्देनात्र सोम उच्यते । तस्य पति स्वामी । त गोपतिम् । सोमस्य स्वामिनमित्यर्थ । गिरा स्तुतिलक्षणया वाचा । इन्द्रमभ्यर्च । मध्यमपुरुषैकवचनमिद उत्तमपुरुषैकवचनस्य स्थाने द्रष्टव्यम् । लोट् लडर्थे द्रष्टव्य । अभ्यर्चामि । आभिमुख्येन स्तौमीत्यर्थ । कथ पुन स्तौमि । उच्यते । यथा विदे जानामीत्यर्थ । कीदृश पुनरिन्द्र स्तौमि । उच्यते । सूनु सत्यस्य सत्यस्य पुत्रमित्यर्थ । कथ पुनरिन्द्र सत्यस्य पुत्र । उच्यते । त्रैविद्यलक्षण ब्रह्म सत्यम् । तेन यानि हवींषि हूयन्ते तैर्नीयते यस्मात्तस्मात्सत्यस्य सूनु । अथवा सत्यमन्नमुच्यते हविर्लक्षणम् । तेन सन्नायते आप्यायते वा । तस्मात्सत्यस्य सूनु । सत्पतिं सता यजमानाना पतिं पालयितारम् ॥

प्रियमेधः । अभिप्रार्च अभिप्रगाय हे स्तोतः गोपतिं गवां पतिं गवा सोमाना अपां तेजसा गवामेव वा पतिं इन्द्रं गिरा स्तुत्या यथा विदे ज्ञायते त्वया सूनुं सत्यस्य प्रजापतेः सत्पतिं श्रेष्ठानामधिपतिम् । इन्द्रो ज्येष्ठानामधिपतिः इति निगमः ॥ (४)

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥

वामदेवस्यार्षम् । कया न अस्माकम् । चित्रो विचित्र पूज्यो वा इन्द्र. । आभुवत आभिमुख्येन भवति । ऊती । तृतीयैकवचनस्यायं सुपां सुलुक् (पा. ७. १. ३९) इति पूर्वसवर्णः । ऊत्या तर्पणेन प्रीणनेन वा । कीदृशस्य मम । उच्यते । सदावृधः । सदा यः स्तुतिभिर्हविर्भिश्च देवान्वर्धयति स सदावृत् । तस्य सदावृधः । सर्वदा वर्धयितुर्ममेत्यर्थः । अथवा सदावृधः नित्यवर्धितः इन्द्रः । कया ऊत्या पालनेन । सखा भवति । कया शचिष्ठया । शचीति कर्मनाम । अतिशयेन शची शचिष्ठा । तया शचिष्ठया । अतिशयवत्या यागक्रिययेत्यर्थ । वृता । वर्तनेऽसाविति वृत् । तया वृता । वर्तमानयेत्यर्थ. ॥

वामदेवः । कया ऊती ऊत्या तर्पणेन नः अस्मान् आभुवत् अभिमुखो भवेत् । चित्रः चायनीयः पूज्यः सदावृधः सखा च इन्द्रः । कया च आवृता आवर्तमानेन कर्मणा शचिष्ठया । शचीति प्रज्ञाकर्मणोर्नाम । प्रज्ञावत्तमया । प्रज्ञासहितमनुष्ठीयमानया इत्यर्थः ॥ (५)

त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतये ॥

श्रुतकक्षस्यार्षम् । श्रुतकक्षः पुत्रपौत्रानाह । त्यशब्दः तच्छब्दपर्यायः । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । य उक्तगुण

इन्द्र तम । उ इति पादपूरण । व । षष्ठीबहुवचनमेतत् ऊतय इत्येतेन सम्बन्धयितव्य· । सत्रासाहम् । सत्राशब्द: सत्यवचन: सदाशब्दपर्यायो वा । सहि अभिभवे मर्षणे च । अत्र सहि अभिभवार्थे । सत्येन सर्वदा वा शत्रूणामभिभवितारम् । विश्वासु गीर्षु । सप्तमीबहुवचनमिदं तृतीयाबहुवचनस्य स्थाने द्रष्टव्यम् । विश्वाभिर्गीर्भिः । सर्वाभि. ऋग्यजुस्सामलक्षणाभिर्वाग्भि-रित्यर्थ । आयतं निबद्धम् । स्तुतमित्यर्थ । आच्यावयसि । च्यवतिर्गत्यर्थ· । मध्यमपुरुषैकवचनमिदं उत्तमपुरुषस्य स्थाने द्रष्टव्यम् । आभिमुख्येन च्याव-यामि । गमयामीत्यर्थ । ऊतये युष्माकं पालनार्थमित्यर्थः ॥

श्रुतकक्ष: । त्य त इन्द्रम् । उः पूरणः । सत्रासाह विश्वस्याभिभवितारं सर्वदा अभिभवितार इति वा । विश्वासु गीर्षु स्तुतिषु आयतं अभिगतम् । व: । त्वमित्यर्थ. । हे स्तोत. आच्यावयसि गमय ऊतये रक्षणाय तर्पणाय च ॥ (६)

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥

मेधातिथेरार्षम् । सद यज्ञगृहम् । तस्य पतिं स्वामिनम् । अद्भुतं महान्तम् । प्रियं इन्द्रस्य । षष्ठ्येकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम । इन्द्रम् । कीदृशम् । काम्यं कमनीयं यष्टॄणाम् । सनिं निधानम् । कस्य । सामर्थ्यात् धनस्य । मेधा प्रज्ञा च । अयासिषं याचे इन्द्रम् ॥

मेधातिथि: । सदसस्पतिर्नाम देव: । अग्निविशेष: इति केचित् । तं अद्भुतं महान्तम् । अत्पूर्वात् भवतेरद्भुतः । प्रियं सखायं इन्द्रस्य काम्य कमनीयम् । सनिं संभवनीया दात्री फलाना मेधा बुद्धिं अयासिष अयाचिषं याचामि । लङर्थे लुङ । सनिमिति मेधाविशेषणम् । सन्या मेधया इति बह्वृचः दर्शनात् ॥ (७)

**ये ते पन्था अधो दिवो येभिर्व्यश्वमैरय । उत श्रोषन्तु नो भुवः ॥**

वामदेवस्यार्षम् । ये ते तव स्वभूता । पन्था । एकवचनमिद बहुवचनार्थे भवति । पन्थान । ब । अधो दिव द्युलोकस्य अधस्तात् । अन्तरिक्षलोक इत्यर्थ । यभि ये पथिमि । व्यश्व वेगिताश्वम् । शीघ्रमित्यर्थ । ऐरय पूर्वकालमपि आगतवानसि । ये ते पन्था इति पूर्वस्मिन्नर्धर्चे यच्छब्दस्य श्रुतत्वात् परस्मिन्नर्धर्चे तच्छब्दो योग्यार्थ सम्बन्धोऽध्याहर्तव्य । तैर्गत्य उत अपिच । श्रोषन्तु । बहुवचनमिदमेक वचनस्य स्थाने द्रष्टव्यम् । श्रोषतु शृणोतु भवान् । किम् । सामर्थ्यात्स्तुती । न अस्माक सम्बन्धिनी । अस्मत्कर्तृका इत्यर्थ । व पुन शृणोतु स्तुती । उच्यते । भुव । भूशब्द पृथिवीनाम्ना मध्ये पठ्यत । तस्मादिय अवयवलक्षणा षष्ठी । पृथिव्या अवयवे वेद्याख्ये प्रदेश इत्यर्थ ॥

वामदेव । ये ते त्वदीया पन्था पन्थान सन्ति । अध अधस्तात् दिव द्युलोकात् तत्प्राप्तिहेतव । येभि यै पथिभि व्यश्व ऋजुक ऐरय प्रापय दिवम् । उत अपिच श्रोषन्तु ते पन्थान शृण्वन्तु न अस्मदीया भुव भावयित्री सती । द्युलोकप्रापका देवा यज्ञाद्यभिमानिन वा अत्र विवक्षिता ॥　　(८)

**भद्रं भद्र न आभरेषमूर्जं शतक्रतो । यदिन्द्र मृडयासि नः ॥**

शुनकक्षस्यार्षम् । भद्रशब्द शोभनवचन । तस्यायमभ्यास भद्र भद्रमिति । अभ्यासे च भूयासमर्थं मन्यन्ते यथा अहो दर्शनीया अहो दर्शनीया इति अतिशयेन दर्शनीया इति गम्यते एवमिहापि भद्र भद्र अतिशयेन शोभनमित्यर्थ । न । चतुर्थीबहुवचनमिदम् । अस्मभ्यम् । आभर । हरेरिद रूप हकारस्य भकारापत्त्या । आभर आहर आनय ।

ददीत्यथ । किं पुनराहरामि । उच्यते । इषमूर्जम । द्वे अप्यते अन्न नामनी । अत पौनरुक्त्यप्रसङ्गात् ऊर्जशब्दोऽत्र रसवचनो द्रष्टव्य । अन्न च रस चत्यर्थ । हे शतक्रतो । शतमिति बहुनाम । क्रतुरित्यपि कर्मनाम प्रज्ञानाम वा । बहूनि कर्माणि यस्य बह्वो वा प्रज्ञा यस्य स शतक्रतु । तस्य सम्बोधन हे शतक्रतो बहुकर्मन् बहुप्रज्ञ वा । कीदृश च पुन अन्न च रस च भरामि । उच्यत । यत । तृतीयाया अत्र लुक् । यन अन्नेन रसेन च । मृडयसि सर्वदा सुखयसि । जीवयसीत्यर्थ । न अस्मान् । परस्ताद्यच्छब्दश्रुते पूर्वार्धेच तच्छब्दमध्याहृत्य एकवाक्यता नेया । येन अन्नेन रसेन च हे इन्द्र मृडयसि न तद्भद्र भद्र न आभरेति ॥

श्रुतरक्ष । भद्र भद्र सर्व कल्याण न अस्मभ्य आभर इष पुष्टि ऊर्ज रस च आभर हे शतक्रतो । यत् यदि हे इन्द्र मृडयासि सुखय दया कुर्या न अस्मभ्यम् ॥ (९)

अस्ति सोमो अय सुतः पिबन्त्यस्य मरुतः । उत स्वराजो अश्विना ॥

पूतदक्षस्य बिन्दो वा इदमार्षम् । अस्ति विद्यत इत्यर्थ । सोम अय सुत अभिषुत इत्यर्थ । पिबन्ति । लडय लोडर्थे द्रष्टव्य । पिबन्तु । अस्य । षष्ठीनिर्देशात् एकदेशमिति वाक्यशेष । अथवा षष्ठ्येकवचन द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । पिबन्तु एतम् । मरुत । न केवल मरुत एव । किं तर्हि । उत अपिचत्यर्थ । स्वराजम् ॥

बिन्दु पूतदक्ष वा । इय च गौरीवितीति च प्रातस्सवन सामातिरेके स्तोत्रीये विकल्पन भवत । अस्ति विद्यत सुत अय साम । पिबन्ति पिबन्तु

अन्य चमसान्दियर्थः। मरुतः स्वराजः स्वय दीप्ताः। उत अपि च अश्विना अश्विनौ च पिबतन् ॥ (१०)

द्वितीयेऽष्टम्या दशत्या

---

ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते। वन्वानासः सुवीर्यम् ॥

इन्द्रमातरो देवजामय । तासा आर्षम् । ईङ्खयन्ती । द्वितीया-बहुवचनमिदं प्रथमाबहुवचनम् । ईङ्खयन्त्य गच्छन्त्य । अपस्युव स्तुतयः। कं प्रति गच्छन्त्य । प्रकृतत्वादिन्द्रं प्रति गच्छन्त्य । इन्द्रं जातं जातमेव उपासते । उपगम्येन्द्रं तस्यैव समीपे व्यवतिष्ठन्त इत्यर्थ । वन्वानासः। वनु याचने इत्यस्येदं रूपम् । याचमाना । किं याचमानाः । उच्यते । तस्यैवेन्द्रस्य शोभनं वीर्यम् ॥

इन्द्रमातरः देवजामयः। ईङ्खयन्तीः प्रेरयन्त्यः इन्द्रं इतस्ततः चालयन्त्यः। अपस्युवः अपांसि कर्माणि इन्द्रस्य कामयमानाः इन्द्रमातरः इति आत्मन एव ऋषीणा वचनम्। इन्द्र जातं उपासते प्रादुर्भूतमुपासते। वन्वानासः सेवजमानाः। सुवीर्यं शोभनवीर्ययुक्तं इन्द्रम् ॥ (१)

नकि देवा इनीमसि नक्यायोपयामसि। मन्त्रश्रुत्यं चरामसि ॥

गोधाया आर्षम् । नकि देवा इनीमसि । नेति प्रतिषेधः । कीति निपातोऽनर्थकः। इनीमसि। मिनातेर्हिंसार्थस्य मकारलोपः। तेनैतदुक्तं भवति । हे देवाः न इनीमसि । प्राणिबन्धनकर्म । पश्चादियागे न कुर्म

इत्यर्थः । नक्यायायपयाममि । योपयतिर्विमोहनकर्मा । स इह निखननार्थे द्रष्टव्य । यूपनिखननमपि न कुर्म । वृक्षौषध्यादिहिंसामपि न कुर्मः । किं तर्हि । मन्त्रश्रुत्य मन्त्रश्रवणीय जपास्य चरामसि । जप कुर्वन्तश्चराम । प्राणिवध न कुर्म । जपमेव कुर्म इत्यर्थ । उक्त च—

जप्येनैव तु ससिद्ध्येद्ब्राह्मणो नात्र सशय ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ।

इति ॥

गोधा। नकि नकि नकि इति त्रीणि नार्थे वर्तन्ते। नकि इनीमसि। इनातिर्मिनातिना समानार्था हिंसाकर्मा। न हिंस्म युष्माक परिचरणादीनि हे देवा इति पूजाया बहुवचनम्। इन्द्र होट सूक्तम्। हे देवेन्द्र नकि आयोपयामसि न मिश्रयाम। सुधुतीदुष्टुतीश्च न मिश्रयाम। सुकृतानि दुष्कृतानि च साधुन्येव आचराम। मन्त्रश्रुत्य मन्त्रश्रवण चरामसि चराम कुर्म ॥ (२)

दोषो आगाद्बृहद्गाय द्युमद्गामन्नाथर्वण। स्तुहि देवं सवितारम् ॥

वामदेवस्यार्षम्। दोषा रात्रि। उ इति पादपूरण। आगात् मर्यादया आगच्छति प्रभातम्। यागकालो वर्तत इत्यर्थ। अतो ब्रवीमि। बृहत् गाय उच्चारयेत्यर्थ। किं पुन उच्चारयामि। सामर्थ्यात्स्तुतिरूपम्। कीदृश स्तुतिरूपम्। उच्यते। द्युमत स्वरसौष्ठवयुक्तमित्यर्थ। गामन्। गामान् गाता उच्चारयिता स्तोता। तस्य सम्बोधन हे गामन्। स्तोतरित्यर्थ। आथर्वण। थर्वतिर्गत्यर्थ। थर्वा गन्ता। न थर्वा अथर्वा। अगन्तेत्यर्थ। अथर्वा यजमान प्राक प्रयोगपरिसमाप्ते वेदिदेशादन्यत्र गच्छति। अतोऽसौ अथर्वेत्युच्यते। तस्माय स्वभूत स्तोता। तेन स आथर्वण। तस्य सम्बोधन हे आथर्वण। मम वामदेवस्य स्वभूत इत्यर्थ। स्तुहि देव सवितार सर्वस्य प्रसवितार बृहता साम्ना। सवितृदेवत्य च बृहत ॥

वामदेवः । दोषो आगादिति सन्धिश्छान्दसः । दोषः । दूषयति नाशयति तमांसीति वा दुनोति उपतपति रक्षांसि इति वा दोषः सविता । स आगात् आगतः । बृहत् महत् महाफल स्तोत्रं गाय उच्चारय द्युमत् दीप्तिमत् स्तोत्र हे गामन् । गायतीति गामान् स्तोता । हे स्तोतः आथर्वण अथर्वणः पुत्र इन्थेव मात्मानमेव अभिमन्त्रयते । स्तुहि देवं सवितारं इति पुनरुक्तिरगदगर्था ॥　(३)

## एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥

प्रस्कण्वस्यार्षम् । एषा । उकार पादपूरण । उषा अपूर्व्या । यत पूर्व नास्ति सा अपूर्वा । अपूर्वा एव अपूर्व्या । स्वार्थिकस्तद्धित । प्रथमेत्यर्थ । व्युच्छति । उच्छ विवासे । विवासयति । किम् । सामर्थ्यात्तमांसि । न चानुदिता तमांसि शक्नोति विवासयितुम् । अतो विवासनेनात्र उदितत्वं लक्ष्यते । उदितेत्यर्थः । प्रिया दिव । साहचर्यात् प्रियत्वव्यपदेश । प्रभातसमयो वर्तते । यत एवमतो ब्रवीमि । स्तुषे स्तौम्यहं वा युवा हे अश्विनौ । कथं पुनः स्तौमि । उच्यते । बृहत् महत अस्त्वित्यर्थः ॥

प्रस्कण्वः । एषो उषाः । उ इत्यनर्थकम् । एषा उषाः अपूर्व्या । पूर्वकालभवाः यस्मान्न सन्तीति । सर्वासां हि देवतानां प्रथमा उषाः । एते वा देवाः प्रातर्यावाणो यदग्निरुषा अश्विनौ (ऐ. ब्रा. २. १५) इति ऐतरेयकम् । व्युच्छति विवासयति तमांसि प्रिया दिवः आदित्यस्य । अतः स्तुषे स्तौमि । वा युवा हे अश्विना अश्विनौ बृहत् बृहन्तौ महान्तौ वाम् । औटो लुक् ॥　(४)

## इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥

गोतमस्यार्षम् । अत्रेतिहासमाचक्षते । कालकञ्जा नाम असुराः । तैरसुरैर्बाध्यमाना देवा ब्रह्माणमुपगम्योक्तवन्तः । भगवन् कालकञ्जैरसुरैर्बा-

ध्यामहे । तेषां मारणोपायं विधत्स्वेति । तच्छ्रुत्वा स तानुवाच । दधीचिर्नाम ऋषि । तमुपगम्य ब्रूत । स मारणोपायं विधास्यतीति । ते तच्छ्रुत्वा तथेत्यङ्गीकृत्य त दधीचमुपगम्य उक्तवन्त । भगवन्नस्मदीयान्यस्त्राणि शुक्रस्तेषां पुरोधा अपहरति । तानि रक्षस्व तत । स ऋषिस्तानुवाच । मम मुखे प्रक्षिपध्वम् । तत इन्द्रादिभिर्देवै समरुद्गणैस्तस्य मुखे प्रक्षिप्तानि । पुन कालेन देवासुरसङ्ग्रामे पर्युपस्थिते एत्य देवा ऊचु । भगवन् तान्यस्त्राणि प्रयच्छस्वास्माकम् । ततस्तेनोक्तम् । तानि मे जीर्णानि । न तानि पुनः प्राप्तु शक्यानि । तत प्रजापतिमुखा देवा ऊचु । भगवन् प्राणत्याग कुरुष्वेति । तच्छ्रुत्वा पुन कृतश्च तेन प्राणत्याग । तस्य दधीच स्वभूतैरस्थिभिरिन्द्रो वृत्राणि जघान इति । इन्द्र दधीच अस्थभि वृत्राणि । वृत्राणीति नपुसकलिङ्गमिद व्यत्ययेन पुल्लिङ्गस्य स्थाने द्रष्टव्यम् । वृत्रान् शत्रूनित्यर्थ । अप्रतिष्कुत अप्रतिस्खलित सै । असुरान् जघान हतवान् । कियन्त पुनरसुरान् जघान । उच्यते । नवतिर्नव दशोत्तराणि अष्टौ शतानीत्यर्थ ॥

गौतम । ऋषिराथर्वणो दध्यङ्ङिन्द्रेणास्थीनि याचित । अस्थीनि प्रददौ तस्मै योगेन स्वां तनु त्यजन् । तैरस्याक्लपयद्वज्र त्वष्टा नेता सुरानहन् । इन्द्रो बहून् कालकञ्जान् । तदिह कीर्त्यते । इन्द्र. दधीच ऋषे· अस्थभि अस्थिभिः वृत्राणि शत्रून् असुरान् जघान घातितवान् । नवती. नव । दशाधिकानि अष्टौ शतानि । अप्रतिष्कुत· । ष्कुञ् आद्रवणे । अप्रत्यागत केनापि ॥ (९)

**इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाꣳ अभिष्टिरोजसा ॥**

मधुच्छन्दस आर्षम् । हे इन्द्र आ इहि आगच्छेत्यर्थ । एत्य च मत्सि हृष्यस्व । अन्धस । षष्ठ्येकवचनमिद तृतीयैकवचनस्य स्थाने द्रष्टव्यम् । अन्धसा अन्नेन पुरोडाशादिलक्षणेन । विश्वेभि सर्वै सोमपर्वभि । पर्वाणि

अवयवा । सोमस्य पर्वाणि सोमपर्वाणि । तै सोमपर्वभि । तदर्थमभिषुतै सोमावयवैस्तृप्यस्वेत्यर्थ । कस्मात् । उच्यते । यस्मान्महान् त्वं अभिष्टि आभिमुख्येन यष्टव्यश्च । अन्वेषणशीलो वा शत्रूणाम् । ओजसा बलवत्त्वादित्यर्थ ॥

मधुच्छन्दा । हे इन्द्र आ इहि एहि आगच्छ । मत्सि मादयस्व अन्धस: अन्नस्य सोमस्य रसेनेत्यर्थ: । विश्वेभि: विश्वै: सोमपर्वभि: सोमांशुभि: अभिष्टुतस्य । महान् त्व अभिष्टि: अभिष्टोता अभिगन्ता शत्रूणाम् । अभिपूर्वादिषे: गतिकर्मणोऽभिष्टि: । ओजसाभिष्टि: इति सम्बन्ध ॥　　(६)

## आ तू न इन्द्र वृत्रहन्नस्माकमर्द्धमा गहि । महान्महीभिरूतिभि: ॥

वामदेवस्यार्षम् । आ तु इति द्वावपि पादपूरणौ । न अस्माकं हे इन्द्र वृत्रहन् । वृत्रहा वृत्रशत्रु वृत्रस्य हन्ता । तस्य सम्बोधनं हे वृत्रहन् । अस्माकं शत्रोर्हन्तरित्यर्थ । अस्माकं स्वभूतं अर्ध वेद्याख्यं स्थानमागच्छ । कस्मात्पुनरेवमुच्यते । यस्मात्त्वं महान् तस्मादित्यर्थ । कथं पुनरागच्छामि । उच्यते । महीभिरूतिभिर्महद्भि पालनैस्तर्पणैर्वा सह । अस्मान् यै पालनैस्तर्पणैर्वा पास्यति तर्पयिष्यसि वा तै सहेत्यर्थ ॥

वामदेव. । आगहि आगच्छ तु क्षिप्र न: अस्मान् प्रति हे इन्द्र वृत्रहन् । उक्तमेव पुनराह आदरार्थम् । अस्मास्मर्धं समीप आगहि । महान् त्वं महीभि. महतीभि: ऊतिभि: रक्षाभि: सार्धम् ॥　　(७)

## ओजस्तदस्य तित्विष उभे यत्समवर्तयत् । इन्द्रश्चर्मेव रोदसी ॥

वत्सस्यार्षम् । ओज बलं तत् अस्येन्द्रस्य स्वभूतं तित्विषे । त्विष दीप्ताविस्यस्येदं रूपम् । दीप्यत इत्यर्थ: । कतमत् । उच्यते । अपि यत् । तृतीयाया अत्र लुक् । येन बलेन समवर्तयत् संवेष्टयति इन्द्र. । कथं पुन.

मवेष्टयति । उच्यते । चर्मेव । यथा कश्चित् चर्म वेष्टयति तद्वदित्यर्थ । किं पुन सवेष्टयति । उच्यते । उभे रोदसी द्यावापृथिव्यावित्यर्थ ॥

वत्स । आजा बल अस्य इन्द्रस्य तित्विषे दीप्यते । यत् येन उभे रोदसी द्यावापृथिव्यौ समवर्तयत् सवर्तयेत । इन्द्र समवर्तयत् इति पञ्चम ल्काारान्तम् । छन्दस्यपि दृश्यते (पा ६ ४ ७३) इति अडागम । चर्मेव यथा चर्म संवेष्टयति चमकार तद्वत् ॥ (८)

## अयमु ते समतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ॥

शुन शपस्यार्षम् । अयम् । उ इति पादपूरण । ते तव स्वभूत अभिषुत सोम । कीदृश । य प्रति समतसि सम्यक सतत वा गच्छसि । कथ पुनर्गच्छसि । उच्यते । कपोत इव गर्भधिम् । गर्भ धीयते यस्या सा गर्भधि कपोतिका । यथा कामार्त कपोत हृष्टमना कपोतिका गच्छति तद्वत्त्वमपि त समतसीत्यर्थ । एतज्ज्ञात्वा वच तत् । उत्तरत्र तच्छब्द श्रवणात् पूर्वत्र योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्य । यद्यपि नियुक्त स्व वचन तत् । चिदिति पादपूरण । न । बहुवचनमिद एकवचनस्य स्थाने द्रष्टव्यम् । तन्मम स्वभूत वच । ऊहमे । वहेरिद रूपम् । वहस्व आत्मान प्रति प्रापय । शृण्वित्यर्थ । ममायमभिप्राय । सोम एवास्तु । मुञ्च मामिति ॥

शुनश्शेप । अय सोम । उ पूरण । ते तुभ्य कल्पित । यस्मात् अय ते अत समतसि । अत सातत्यगमने । सम्यक् आगच्छ । कपोत इव गर्भधि गर्भस्य धात्रीं कपोतीम् । वच स्तोत्र तच्चित् तदेव न अस्मदीय ओहसे वहसे हृदयेन ॥ (९)

**वात आ वातु भेषजं शंभु मयोभु नो हृदे । प्र न आयूंषि तारिषत् ॥**

उले वातायन । तस्यार्षम् । वात आवातु । कीदृशम् । उच्यते । भेषजम् । पथ्यमित्यर्थ । शभु सुखस्य भावयितृ । इदानीं सुखकरमित्यर्थ । मयोभु । कालान्तरे च सुखस्य भावयितृ इत्यर्थ । अथवा मयो बलम् । तस्य भावयितृ । नो हृदे अस्माकं हृदयस्य । प्रेत्ययमुपसर्ग तारिषदित्याख्यातेन सम्बन्धयितव्य प्रतारिषत् । प्रवर्धयत्वित्यर्थ । न अस्माकं आयूंषि । जीवितानीत्यर्थ ॥

वातायन उल । वातो वायु आवातु आगमयतु । वातेः अन्तर्भावितण्यर्थः । भेषजं रोगनाशनम् । शभु । श शान्तिरुपद्रवाणाम् । तस्य भावयितृ । मयोभु । मय. सुखम् । तस्य भावयितृ । नः अस्माकं हृदे हृदयाय । शमु मयोभु च इति सम्बन्धः । प्रतारिषत् वर्धयतु नः अस्माकं आयूंषि ॥ (१०)

द्वितीये नवम्या दशत्या

---

**यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा । नकिः स दभ्यते जनः ॥**

कण्वस्यार्षम् । यं रक्षन्ति प्रचेतस प्रवृद्धज्ञाना । वरुण मित्र अर्यमा । न इत्ययं प्रतिषेधे वर्तते । कि इति पादपूरण । दभ्यते । स इति निर्देशः । दभ्नोतिर्वधकर्मा । न स दभ्यते न स हिंस्यते केनचित् । जन. मनुष्य. ॥

कण्वः । यं जन रक्षन्ति प्रचेतसः प्रकृष्टज्ञाना देवाः वरुणः मित्रः अर्यमा च स जनः नकिः दभ्यते न हिंस्यते केनापि ॥ (१)

**गव्यो षु णो यथा पुराश्वयोत रथया । वरिवस्या मघोनाम् ॥**

वत्सस्यार्षम् । गोषु इच्छा गव्या । तस्मात् तृतीयैकवचनम् । तस्य सुपां सुलुक् इति पूर्वसवर्णः । गव्या गव्यया गवीच्छयेत्यर्थः । उ सु इति द्वावपि पादपूरणौ । नः द्वितीयाबहुवचनमिदं प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् । वयं त्वा स्तुमः इति वाक्यशेषः । कथं पुनः स्तुमः । उच्यते । यथा पुरा यथा पूर्वस्मिन् काले अस्तुवन् तद्वत् इत्यर्थः । अश्वया अश्वेच्छया स्तुमः । उत अपि च रथया रथेच्छया स्तुमः । वरिवस्या । वरिवस्य परिचरणीयः । तस्मात्सम्बुद्ध्येकवचनम् । तस्य स्थाने सुपां सुलुक् इति आकारः । वरिवस्या । परिचरणीय इत्यर्थः । कस्य पुनः परिचरणीयः । उच्यते । मघोनाम् । मघं धनं हविर्लक्षणम् । तद्येषामस्ति ते मघवानः हविष्मन्तो यजमानाः । तेषामित्यर्थः ॥

वत्स । गव्यो । गव्या उ इति समुदायो गव्यो इति । गवादिशब्देभ्यः शसो यादेशः सुपां सुलुक् इत्यादिना । गव्या गाः । सु सुष्ठु नः अस्मभ्यं वरिवस्य प्रयच्छ । यथा पुरा दत्तवानसि । अश्वया अश्वान् । उत अपि च रथया रथान् । वरिवस्य महानाम् । महो धनं हविर्लक्षणम् । तद्वताम् । महोना इति चतुर्थ्यर्थे षष्ठी । हविष्मद्भ्यः अस्मद्भ्यः ॥ (२)

**इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् । एनामृतस्य पिप्युषीः ॥**

वत्सस्यार्षम् । इमाः ते तव सम्बन्धिन्यः । हे इन्द्र पृश्नयः स्तुतयः । घृतं दुहते घृतं दुह्यन्ते । घृतं क्षरन्ति घृतसहिताः क्रियन्त इत्यर्थः । न केवलं घृतं दुह्यन्ते । किं तर्हि । आशिरं च । सोममिश्रं यत् दधि तत् आशिरम् । तत् दुह्यन्ते । तेन च सह क्रियन्त इत्यर्थः । एनाम् । द्वितीयैकवचनमिदं प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् । एनाः । ऋतस्य यज्ञस्य पिप्युषीः

ओप्यार्थौ वृद्धाविन्यस्येद रूपम्। द्वितीयाबहुवचन न प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम। पिप्युष्य वर्धयित्र्य इत्यर्थ ॥

वत्स । इमा पृश्नया गाव ते तुभ्य घृत दुहते । आशिरञ्च । सोममिश्र दधि आशिरम्। तच्च। एना भूमिम्। ऋतस्य ऋतेन उदकेन पिप्युषीः पूरयन्त्य यज्ञसाधनद्वारेण वृष्टि उत्पादयन्त्य ॥ (३)

अया धिया च गव्यया पुरुणामन् पुरुष्टुत । यत्सोमेसोम आभुवः ॥

शुनःशेपस्यार्षम। अया अनया धिया । धीरिति प्रज्ञानाम । प्रज्ञया । त्वा स्तुम इति वाक्यशेष । अथवा धीरिति कर्मनाम । अनेन यागाख्येन कर्मणा । त्वा यजाम इति वाक्यशेष । किमर्थं पुन स्तुम । उच्यते। गव्यया गविच्छया। पुरुनामन्। पुर्विति बहुनाम। नमति प्रह्वीभावे। बहव शत्रव य प्रति नमन्ति स पुरुनामा । तस्य सम्बोधन हे पुरुनामन्। बहूना शत्रूणा प्रह्वीकर्तरित्यर्थ । अथवा बहवो यजमाना प्रह्वीभूता । पुरुष्टुत । बहुभि स्तोतृभि स्तुत । कस्मात पुनस्त्वा स्तुम । उच्यते । यत्। पञ्चम्या अत्र लुक्। यस्मात्त्वं सोमे सोमे सर्वसोमयागेष्वित्यर्थ । आभुव आभिमुख्येन भवसि । यस्मात्त्व सर्वेषु सोमयागेषु ईश्वरो भवसि तस्मादित्यर्थ ॥

शुनःशेपः । अया अनया धिया स्तुत्या। त्वा स्तुम इति शेष । च इति पूरणः। गव्यया गोकामनया। हे पुरुनामन् बहुरूप बहुनामेत्येव वा। पुरुष्टुत बहुभिः स्तुत। यत यस्मात् त्व सोमे सोमे सर्वेषु सोमेषु आभुवः अभिमुखः भवसि। तस्मात् त त्वाम् ॥ (४)

पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥

मधुच्छन्दस आर्षम् । पापस्यापनयनं पावनं कर्म । तस्य कर्त्री पावका । शोधयित्री इत्यर्थः । अथवा पवतिः क्षरणार्थः । उदकाना क्षरित्री । नः अस्माकं स्वभूता सरस्वती माध्यमिका वाक् । कीदृशी । उच्यते । वाजेभिर्भक्षणीयैरन्नैः हविर्लक्षणैर्वा अन्नैः वाजिनीवती । अन्नवती इत्यर्थः । अथवा वाजेभिरित्यनेन यज्ञस्य विशेषणम् । हविर्लक्षणैरन्नैर्युक्तं यज्ञमित्यर्थः । वाजिनीवती । वाजः बलं वेगो वा । तद्यस्या विद्यते सा वाजिनी सेना । तद्वती या सा वाजिनीवती । अथवा वाजः अन्नं हविर्लक्षणम् । तद्यस्यामस्ति सा वाजिनी वर्ती । यज्ञं वष्टु कामयतु धियावसु । धीरिति कर्मनाम प्रज्ञानाम वा । वस्वित्यपि धननाम । धी वसुभूता यस्या सा धियावसुः कर्मधना प्रज्ञाधना वा । अथवा वसुरित्येतत् वस आच्छादने इत्येतस्येदं रूपम् । प्रज्ञया आच्छादयित्री सर्वस्य जगतः ।

मधुच्छन्दाः । पावका शोधयित्री सरस्वती वाक् नः अस्माकं यज्ञं वष्टु इति समन्वयः । वाजेभिः अन्नैः वाजिनीवती । वाजसमूहः वाजिनी । तद्वती । अन्नैः तद्वतीत्यर्थः । यज्ञं इमं वष्टिति वहते रूपम् । वाचा हि यज्ञ उह्यते । धियावसुः । धिया प्रज्ञया वासयति व्याप्यति जनान् इति धियावसुः । यत्र वष्टिति यदाह यज्ञं वहतु इत्येव तदाह इत्येतरेयकम् ॥ (९)

**क इमन्नाहुषीष्वा इन्द्र सोमस्य तर्पयात् । स नो वसून्या भरात् ॥**

वामदेवस्यार्षम् । कः मा मुक्त्वा अन्यः इमं इन्द्रं नाहुषीषु । नहुष इति मनुष्यनाम । तेषु भवा ज्योतिष्टोमाद्या क्रिया नाहुष्यः । तासु नाहुषीषु । ज्योतिष्टोमादिषु क्रियास्वित्यर्थः । इन्द्रं सोमस्य आ आभिमुख्येन तर्पयात् । तर्पयतीत्यर्थः । अहमेव तर्पयामीत्यभिप्रायः । यत एवमतो ब्रवीमि । स इन्द्रः नः अस्मभ्यं वसूनि धनानि आभरात् आहरतु । ददात्वित्यर्थः ॥

वामदेवः। को जन अस्माक सम्बन्धी नाहुषीषु। नहुष इति मनुष्यनाम। मानुषीषु प्रजासु। तासा मध्ये क इम इन्द्र सोमस्य। सोमेनेत्यर्थ। आतर्पयात् आतर्पयेत्। किमर्थ इन्द्रस्य तर्पण आशास्यते तत्राह। स इन्द्र तर्पितस्सन् न. अस्मभ्य वसूनि धनानि आभरात् आभरतु ॥　　　　(६)

आ याहि सुषमा हि त इन्द्र सोमं पिबा इमम्। एदं बर्हि सदो मम ॥

इरिम्बिठेरार्षम्। आयाहि आगच्छ। कस्मात्। उच्यते। सुषुमा हि। हिशब्दो हेतौ। यस्मात्सुषुम अभिषुणुम सोम तस्मादित्यर्थ। ते त्वदर्थं हे इन्द्र। एत्य च पिब इमम्। क पुनरभिषुणुम। उच्यते। इद बर्हि। द्वे अप्येते सप्तम्येकवचनान्त द्रष्टव्ये। अस्मिन् बर्हिषि। क पुनर्यत् बर्हि। उच्यते। सद। इदमपि सप्तम्येकवचनान्त द्रष्टव्यम्। सदसि। मम स्वभूते वेद्याख्ये स्थाने इत्यर्थ ॥

इरिम्बिठि। आयाहि अस्मिन् यज्ञे सुषुमा अभिषुतवन्तः हि ते तुभ्य वय सोम हे इन्द्र मम मदीयम्। पिबा इम इति दीर्घः गुणाभावश्च छान्दस। आसद. आसीद। इद बर्हिः अस्मिन् बर्हिषि स्तीर्णे ॥　　　　(७)

महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः। दुराधर्षं वरुणस्य ॥

सत्यधृतेरार्षम्। महि महत्। त्रीणा त्रयाणा स्वभूतमव पालन तर्पण वा अस्तु भवतु। त्रय मा पालयन्त्वित्यर्थ। कीदृशं पुनस्त्रयाणा सम्बन्धि पालनमस्तु। उच्यते। द्युक्ष दुराधर्षम्। द्वे अप्येते पालनस्य विशेषणे। द्युशब्द दीप्तिवचन। क्षि निवासगत्यो। तस्मिन् यत् क्षियति तत् द्युक्षम्। दीप्तमित्यर्थ। दुराधर्ष अन्येन कृच्छ्रेण धार्यते यत् तद्दुराधर्षम्। अन्येनाभिभवितुं न शक्यते इत्यर्थ। केषा पुनस्त्रयाणा पालनं एवंगुणविशिष्टमस्तु। उच्यते। मित्रस्य अर्यम्ण वरुणस्य च ॥

त्रारुणि सत्यधृति । महि महत त्राणा त्रयाणा देवाना अव रक्षण अस्तु भवतु । अस्मभ्य अवोऽस्तु इति बह्वचा । द्युक्ष दीप्तम् । प्रसिद्ध सर्वत्र इत्यर्थ । दुराधष अन्यै । केषा त्रयाणाम् । मित्रस्य अर्यम्ण वरुणस्य च ॥ (८)

त्वावत पुरूवसो वयमिंद्र प्रणेतः । स्मसि स्थातर्हरीणाम् ॥

वयस्यार्षम् । त्वावत । वतुप्रकरण युष्मदस्मभ्या छन्दसि सादृश्य उपसङ्ख्यानम् (वा ५ २ ३९, इत्यपसङ्ख्यानिको वतुप्रत्यय । त्वावत त्वत्सदृश । त्वत्सदृशस्य । हे पुरूवसो । पुर्विति बहुनाम । वस्विति धननाम । पुरु वसु यस्य स पुरुवसु । तस्य सम्बोधन हे पुरुवसो । बहुधन इत्यर्थ । वय हे इन्द्र प्रणत । प्रपूर्वस्य नयते इद रूप प्रणता । तस्य सम्बोधन प्रणत इति भवति । प्रकर्षेण नत प्रणत प्रकर्षेण नाशयित शत्रूणाम् । स्मसि भवाम । त भवाम । सामर्थ्यात् स्तोतार यशस्य । हे स्थात अधिष्ठात । हरीणामात्मीयाना अश्वानाम् । एतदुक्त भवति । त्वत्सदृशस्यापि वय स्तोतार । किं पुन तवैव भवाम ।

इति माधवाचार्यकृत छन्दसिकाभाष्य द्वितीय प्रपाठक

वय । त्वावत युष्मदस्मद्भ्या छन्दसि सादृश्ये इति वतुप् । त्वावत त्वभूत । स्मसि भवाम वय हे पुरूवसो बहुधन इन्द्र प्रणेत विश्वस्य । हरीणा तव वाहनाना स्थात अधिष्ठात । हर्यो स्थाता पृश्न प्रेता (तै स १ ४ २८ १) इति हि निवित् ॥ (९)

द्वितीयस्य दशमा दशत्या

द्वितीय प्रपाठक

## तृतीयः प्रपाठकः

उ त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्मद्विषो जहि ॥

प्रगाथस्यार्षम् । उदिति पादपूरण । त्वा त्वा मन्दन्तु । मदी हर्षे मदतृप्तावित्यस्य वेदं रूपम् । मदिश्चान्तर्णीतण्यर्थो द्रष्टव्य । मदयन्तु हर्षयन्तु तर्पयन्तु वेत्यर्थ । सोमा अभिषवादिभि संस्कारै संस्कृता । त्वमपि तैर्हृष्ट तर्पितो वा कृणुष्व राध । करोति क्रियासामान्यवचनो दानार्थो द्रष्टव्य । देहि धनमित्यर्थ । हे अद्रिव । आदरणयोगात् अद्रि वज्र । तद्वान् अद्रिवान् । तस्य सम्बोधन हे अद्रिव । वज्रिन्नित्यर्थ. । न केवलं धनमेव देहि । किं तर्हि । अव ब्रह्मद्विषो जहि । अवेत्ययमुपसर्गो जहीत्यास्यातेन सम्बन्धयितव्य । जहीति च हन्तेर्गत्यर्थस्येदं रूपम् । अवजहि अधो गमय । नरकं नयेत्यर्थ । कान । उच्यते । ब्रह्मद्विष अस्मदीयान् ब्राह्मणान् ये द्विषन्ति ते ब्रह्मद्विष । तान् । ब्राह्मणद्वेषकानित्यर्थ ॥

प्रगाथः । उत् अधिक मन्दन्तु मोदयन्तु त्वा सोमाः मदीयाः । ते· कृतमोद· त्वं कृणुष्व देहि । राधः धन अस्मभ्य हे अद्रिवः अद्रिवन् । अद्रिः वज्रः । अवजहि अधरात् कृत्वा जहि । ब्रह्मद्विषः असुरान् राक्षसान् ॥ (१)

गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे । इन्द्र त्वादातमिद्यशः ॥

विश्वामित्रस्यार्षम् । गिरः स्तुतिलक्षणा वाचः । ताभिर्यो वन्यते सम्भज्यते स गिर्वणाः । तस्य सम्बोधनं हे गिर्वणः । स्तुतिभिः सम्भजनीय । पाहि रक्ष नः अस्मान् । कस्मात् । उच्यते । सुतम् । द्वितीयैकवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । सुतस्य सोमस्य । मधो मधुस्वादुयुक्तस्य । अवयवभूताभिः धाराभिः अज्यसे । प्रथमपुरुषैकवचनमिदं मध्यमपुरुषैकवचनस्य स्थाने द्रष्टव्यम् । अज्यते भज्यते । यस्मात्त्वं पिबसीत्यर्थः । यस्माच्च हे इन्द्र त्वादात त्वया दत्तम् । इदिति पादपूरणः । यश अन्न कीर्तिर्वा । तस्मादपि पाहीत्यर्थः ॥

विश्वामित्र । हे गिर्वणः गीर्भिः वननीय गिरा वा सभक्त इन्द्र । पाहि पिब नः अस्मदीय सुत अभिषुत साम मधो मादयितुः सामस्य धाराभिः अज्यसे सिच्यसे त्वम् । त्वादातमित् त्वया दत्तमेव यशः नमस्कारमस्तु । नान्यदत्त कामयामहे वयम् ॥ (२)

सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन् । न देवो वृतः शूर इन्द्रः ॥

वामदेवस्यार्षम् । आत्मीयान् पुत्रपौत्रानाह । सदा सर्वदा वः युष्माकं इन्द्रः चर्कृषत् अत्यर्थं करोति पुनः पुनर्वा करोति । किम् । उच्यते । बलं पुष्टिं धनं हिरण्यं दीर्घं च जीवितम् । आ उप उ नु चत्वारोऽप्येते पादपूरणाः । सशब्दः यच्छब्दमन्तरेण निराकाङ्क्षो न किंचित्प्रतिपद्यते । अतो योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यः अधस्तादुक्तगुणः इन्द्रः सः । कथं पुनः बलपुष्ट्यादीन् करोति । उच्यते । सपर्यन् । सपर्यतिः परिचरणकर्मा । नशब्दः उपरिष्टादुपचारत्वादुपमार्थीयः । परिचरन्निव । यथा कश्चित् कस्मैचित्परिचरन् प्रीतिमुत्पादयति तथेत्यर्थः । देवः दानादिगुणयुक्तः । वृतः अभ्यर्थितः । शूरः विक्रान्तः । इन्द्रः ईश्वर इत्यर्थः ॥

वामदेव । सदा सर्वदा व युष्मभ्य हे जना मदीया इन्द्र आचर्कृषत आकरोतु भृश करोतु । करोते यङ्लुकि पञ्चमल्कारान्त. चर्कृषदिति । आकरण आनयनम् । उपो उप समीपे । नु क्षिप्र स इन्द्र: सपर्यन् परिचर्यमाण । परस्मैपद व्यत्ययात् । न वृत न नास्ति केनचित् । देव दाता शूर: इन्द्र । नहि त्वा शूर देवा न मर्तासो दित्सन्तम् । भीम न गा वारयन्ते (ऋ. वे. ८. ८१. ३) इति निगम ॥ (३)

आ त्वा विशन्त्विन्दव समुद्रमिव सिन्धवः। न त्वामिन्द्रातिरिच्यते॥

श्रुतकक्षस्यार्षम् । आ इत्यष प्रेत्यतस्य स्थाने विशन्त्वित्याख्यातेन सम्बन्ध्यते । त्वा प्रविशन्तु । त्वया पीयतामित्यभिप्राय । केन पुन प्रविशन्तु । उच्यते । समुद्रमिव सिन्धव । नद्यो यथा समुद्र प्रविशन्ति तद्वदित्यर्थ । कस्मात् । उच्यते । यस्मात्त्वाम् । द्वितीयैकवचनमिद पञ्चम्येकवचनस्य स्थाने द्रष्टव्यम् । यस्मात्त्वत्त हे इन्द्र अन्यद्देवान्तर नातिरिच्यते । सर्वशा देवताना यस्मात् त्वमुत्कृष्टतरस्तस्मादित्यर्थ ॥

श्रुतकक्ष । आविशन्तु त्वा इन्दवः सोमा समुद्रमिव सिन्धव । न त्वा कश्चित् अतिरिच्यते हे इन्द्र ॥ (४)

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत ॥

मधुच्छन्दस आर्षम् । इन्द्र इत । इच्छब्द अवधारणे । इन्द्रमेव गाथिन । गाथानि सामानि । तद्वन्तो गाथिन उद्गातार । बृहत् । प्रथमैक वचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम् । बृहता बृहन्नाम्ना महता वा । इन्द्र अनूषतेत्येतत् परस्ताच्छ्रुतम् । अभिष्टुवन्तीत्यर्थ । इन्द्रमेव अर्केभि । अर्का मन्त्रा । तै अर्केभि । मन्त्रैरित्यर्थ । अर्किण मन्त्रवन्त

स्तोतार । अभिष्टुवन्तीत्यनुषज्यते । इन्द्रमेव वाणी । द्वितीयाबहुवचनमिदं तृतीयाबहुवचनस्य स्थाने द्रष्टव्यम् । वाणीभि यज्ञलक्षणाभिर्वाभि अभिष्टुवन्ति अध्वर्यव ॥

मधुच्छन्दाः । इन्द्रमित् इन्द्रमेव गाथिनः । गाथा गीतिः । तद्वन्तः उद्गातारः अनूषत । णु स्तवने । स्तुवन्ति । बृहत् बृहन्तमिति वा बृहता साम्ना इति वा । इन्द्र अर्केभि. शस्त्रैः अर्किणः शस्त्रिण. होतारः अनूषत । किं बहुना इन्द्रमेव वाणीः वाण्यः सर्वा. अनूषत ॥ (५)

इन्द्र इषे ददातु न ऋभुक्षणमृभुं रयिम् । वाजी ददातु वाजिनम् ॥

श्रुतकक्षस्यार्षम् । इन्द्र ईश्वर· इषे । चतुर्थ्येकवचनमिदं द्वितीयैक वचनस्य स्थाने द्रष्टव्यम् । इषमन्नं ददातु न अस्मभ्यं । न केवलमन्नमेव । किं तर्हि । ऋभुक्षणं महान्तं ऋभुं मेधाविनं रयिं पुत्रलक्षणं च धनं ददात्वि त्यर्थ । किं च वाजी वेगवानिन्द्र· ददातु वाजिनमश्वम् ॥

श्रुतकक्षः । इय ऐन्द्री । आर्भवीत्येके । सुधन्वन. त्रयः पुत्रा· ऋभुः विभ्वा वाजी इति । ते त्रयोऽपि क्वचिदमव इत्युच्यन्ते । क्वचित् वाजा इति । तेषामाद्यन्तयोर्नाम दृश्यन्ते बहुवत् स्तुतिः (बृ. दे. ३. ८९) इति बह्वृचाना बृहद्देवताख्ये ग्रन्थे विद्यते । आर्भवीति पक्षे तावत योज्यते । इन्द्र इषे अन्नाय अन्नसिध्यर्थं ददातु । नः अस्मभ्यं ऋभुक्षणं महान्त ऋभु सौधन्वन रयिं रयिमन्त वाजी वाजिन सौधन्वन ददातु । अस्मदभिमुख करोतु । ऐन्द्रपक्षेऽपि इन्द्र इषे इति वचनव्यत्ययः । इष नः अस्मभ्य ददातु ऋभुक्षणं ऋभुक्षय उरुनिवासं ऋभु महान्तं रयिं धन वाजिनं अन्नयुक्त रयिं वाजी इन्द्रः ॥ (६)

इन्द्रो अङ्ग महद्भयमभीषदप चुच्यवत् । स हि स्थिरो विचर्षणिः ॥

गृत्समदस्यार्षम् । गृत्समद बहूनुत्पातान् दृष्ट्वा इन्द्रमनया ऋचा स्तौति । इन्द्रः अङ्ग क्षिप्रं महत् भयं अभि सत् आभिमुख्येन सीदत् । पर्युपस्थितम् । वातादय उत्पाता भयसूचका. । तान् अपचुच्यवत् अपच्यावयति । अपगमयतीत्यर्थ । कस्मात्पुनः अपनयति । उच्यते । यस्मात स हि स्थिर· अविचलो नित्य । विचर्षणि लोकपालत्वात्सर्वत्र मनुष्याणा शुभस्य अशुभस्य च कर्मणो द्रष्टा ॥

गृत्समदः । इन्द्रः अङ्ग क्षिप्रं महत् भय भयकारण अभिषदभितः सम्भवदिति वा अभिभवदिति वा । अपचुच्यवत् अपच्यावयतु । स हि इन्द्र स्थिरो विचर्षणिः विद्रष्टा च भवति भक्तक्लेशानाम् ॥　　(७)

इमा उ त्वा सुते सुते नक्षन्ते गिर्वणो गिरः । गावो वत्सं न धेनवः ॥

शंयोरार्षम् । इमा उ इति पादपूरण· । त्वा त्वा सुते सुतेऽभिषुते सोमे । यागकाले इत्यर्थ· । नक्षन्ते । व्याप्नुवन्ति । हे गिर्वणः गीर्भिर्वननीय स्तुतिभि· संभजनीय । का पुनर्व्याप्नुवन्ति । उच्यते । गिरः स्तुतिलक्षणा वाच । कथं पुनर्व्याप्नुवन्ति । उच्यते । गावो वत्सं न । नशब्द उपरिष्टादुपाचारत्वादुपमार्थीय । वत्सं गाव इव । कीदृश्यो गाव । उच्यते । धेनव· । अचिरप्रसूता । यथा अचिरप्रसूता गावः स्नेहार्द्रेण मनसा वत्सं व्याप्नुवन्ति तद्वत्त्वा हे इन्द्र अस्मदीया स्तुतयः व्याप्नुवन्तीत्यर्थः ॥

शयुः भारद्वाजः । इमाः गिरः त्वा त्वा नक्षन्ते व्याप्नुवन्ति सुते सुते सोमेषु सोमेषु सुतेषु हे गिर्वणः गाव इव धेनवः वत्सम् ॥　　(८)

इन्द्रा नु पूषणा वयं सख्याय स्वस्तये । हुवेम वाजसातये ॥

भरद्वाजस्यार्षम्। इन्द्रापूषणा नु क्षिप्रं वयम्। बहुवचनमिदं एकवचनस्य स्थाने द्रष्टव्यम्। अहम्। सख्याय स्तुत्यस्तोतृलक्षणाय सखिभावाय। स्तोतुमित्यर्थः। स्वस्तय अविनाशाय। आत्मन पालनाय चेत्यर्थः। हुवेम। इदमपि बहुवचनमेकवचनस्य स्थाने द्रष्टव्यम्। आह्वयामि। वाजसातये। वाज अन्नम्। तस्य च सातये सम्भजनाय। तस्य लाभार्थमित्यर्थः॥

भरद्वाज। इन्द्रापूषणा इति परस्परापेक्षया द्वित्वम्। इन्द्र च पूषण च। नु अद्य। वयं हुवेम। सख्याय स्वस्तये सखिभावाय च अविनाशाय। वाजसातये अन्नलाभाय च॥ ९॥

नकि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन्। नक्येव यथा त्वम्॥

वामदेवस्यार्षम्। नकि। न कश्चिदित्यर्थः। हे इन्द्र त्वत्। पञ्चम्या अत्र लुक् द्रष्टव्यः। त्वत्त। अन्यो देव उत्तर उत्तरः उत्कृष्टतरः। न ज्यायान् न प्रशस्ततरः वृद्धतरो वा अस्ति हे वृत्रहन्। नकि न कश्चित् एव सर्वोपकारप्रवृत्त यथा त्वम्॥

वामदेव। नकि न भवति किंचित्। त्वत् त्वत्त। उत्तर उत्कृष्ट हे इन्द्र। नास्ति ज्याय प्रशस्ततर च त्वत्त हे वृत्रहन्। यथा यथा विवस्त्वं भवसि। एवं एवंविध नकि नास्ति॥ १०॥

तृतीये प्रथमा दशती

---

तरणिं वो जनानां त्रदं वाजस्य गोमतः। समानमु प्रशंसिषम् ॥

त्रिशोकस्यार्षम्। तरणिं क्षिप्रम्। व । द्वितीयाबहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम्। त्वाम्। जनाना असुरजनानाम्। त्रदं तर्दयितारम्। हिंसितारमित्यर्थ । वाजस्य गोमत अन्नस्य गोसहितस्यार्थाय। समानं सदृशम्। योग्यमित्यर्थ । उ इति पादपूरण । प्रशसिषं प्रकर्षेण स्तौमीत्यर्थ ॥

त्रिशोकः। तरणिं तारक आपद्भ्यः। जनाना स्तोतॄणाम्। व.। त्वमित्यर्थ । त्रदं तर्दन प्रकाशयितार दातार वा। वाजस्य गोमत । वाजस्य अन्नस्य गोमतः गोसहितस्य। समानं साधारण सर्वेषाम्। उ· पूरण । प्रशंसिष प्रशंसामि ॥ १ ॥

असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत। सजोषा वृषभं पतिम् ॥

मधुच्छन्दस आर्षम्। असृग्रं विसृष्टवानहम्। हे इन्द्र ते तव गिर स्तुती । विसृष्टाश्च ता गच्छन्तु त्वा प्रति। उदहासत। ओहाङ् गतावित्यस्येदं रूपम्। ऊर्ध्वं गच्छन्तु इत्यर्थ । कीदृशं त्वा प्रति गच्छन्तु। उच्यते। वृषभं वर्षितारं पतिं स्वामिनम्। गता च ता सजोषा । जुषी प्रीतिसेवनयोरित्यस्येदं रूपम्। सेवितवानसि ॥

मधुच्छन्दाः। असृग्रं असृज्यन्त सृज्यन्ते उच्यन्ते। हे इन्द्र ते त्वदर्थम्। गिरः स्तुतयः। ताश्च सृष्टा. त्वा प्रति उदहासत उद्गच्छन्तु। लोडर्थे व्यत्ययेन लङ्। ओहाङ् गतौ। सजोषा· सजोषसः हे सेव्यमाना । वृषभं वर्षितारं पति विबुध्य त्वा प्रति ॥ २ ॥

सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा। मित्रस्पान्त्यद्रुहः ॥

वत्सस्यार्षम् । मुनीथ सुप्रशस्त । घ इति पादपूरण । स मर्त्यं मनुष्य य मरुत य अर्यमा यं मित्र च । त्रयोऽप्येते य पान्ति रक्षन्ति अद्रुह अद्रोग्धार स सुनीथ इति ॥

वत्स । सुनीथ॰ सुमार्गः स भवति मर्त्यः य मरुत पान्ति रक्षन्ति। यं अर्यमा मित्रश्च पात इति विपरिणामेन सम्बन्ध । अद्रुह॰ अद्रोग्धारः स्तोतॄणाम् । मरुता वा विशेषणम् । इतरयोश्च विपरिणामेन ॥ ३ ॥

यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् । वसु स्पार्हं तदाभर ॥

त्रिशोकस्यार्षम् । यत् वीडौ दृढे । यत्स्थिरे पर्वतादौ । पर्शाने वृषादौ पराभृत सम्भृतम् । सस्थापितमित्यर्थ । वसु धन स्पार्हं स्पृहणीयम् । तत् अस्मभ्य आभर । आनयेत्यर्थ ॥

त्रिशोक॰। यत् वसु धनं वीडौ दृढे पुरुषे। यच्च स्थिरे यच्च पर्शाने निश्चले पराभृत सम्भृतम् । स्पार्हं स्पृहणीय तदाभर आहर ॥ ४ ॥

श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम् । आशिषे राधसे महे ॥

सुकक्षस्यार्षम् । श्रुत विख्यातम् । व । बहुवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । त्वाम् । वृत्रहन्तम अतिशयेन शत्रूणा हन्तारम् । प्रेति पादपूरण । शर्धं उत्साहिनं बलवत्तरम् । चर्षणीना मनुष्याणा मध्ये । आशिषे अधिगच्छामि । प्रार्थये इत्यर्थ । राधसे महे । द्वे अप्येते चतुर्थ्येकवचने द्वितीयैकवचनस्य स्थाने द्रष्टव्ये । राध महत् । महद्धनं इत्यर्थ ॥

सुकक्षः। श्रुतं विश्रुतम्। वः त्वाम्। वृत्रहन्तमं अतिशयेन वृत्रहणम्। शर्धं वर्धयितारं चर्षणीनाम्। प्र प्रकर्षेण। आशिषे इति श्रयतेरर्थकर्मणः शवतेः श्रयतेः वा लटि रूपम्। अभिगच्छामि। राधसे धनार्थम्। महे महते। तत् लब्धुम्॥ ५॥

अरं त इन्द्र श्रवसे गमेम शूर त्वावतः। अरं शक्र परेमणि॥

वामदेवस्यार्षम्। अरं अलम्। प्रभूतमित्यर्थ। ते तव हे इन्द्र श्रवसे। चतुर्थ्येकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्। श्रव अन्नं सोमलक्षणम्। गमेम गमयेम। दधामि इत्येतदाशास्महे। हे शूर त्वावतः। मतुप्प्रकरणे युष्मदस्मभ्यां छन्दसि सादृश्य उपसङ्ख्यानात् वत्प्रत्ययः। त्वावतः त्वत्सदृशस्येत्यर्थ। अतिभक्ततया ब्रूमः। त्वत्सदृशस्यापि श्रवः गमेम। किं पुनः त्वत्स्वेत्यभिप्रायः। अरं अलम्। अभ्यासेन भूयानर्थः प्रतीयते। सुष्ठु प्रभूतं दधामीत्यर्थ। हे शक्र। क पुन दद्याम्। उच्यते। परेमणि। परं उत्कृष्टं स्वर्गाख्यं स्थानम्। तत्र गम्यते येन सः परेमा यज्ञः ज्योतिष्टोमादिः। तत्रेत्यर्थ॥

वामदेवः। अरं पर्याप्तं गमेम उपगच्छामः। त्वा ते त्वदीयाय। श्रवसे अन्नाय। हे इन्द्र हे शूर। त्वावतः त्वत्सदृशस्य। परेमणि। पॄ पालनपूरणयोः इत्यस्मात् परेमा। तस्मिन्निमित्ते। तद्रक्षणार्थं च। अरं गमेमहि॥ ६॥

धानावन्तं करम्भिणमपूपवन्तमुक्थिनम्। इन्द्र प्रातर्जुषस्व नः॥

विश्वामित्रस्यार्षम्। धानाः सन्ति यस्य स धानावान्। तं धानावन्तम्। करम्भिणम्। करम्भश्च दधिसक्तवः उच्यन्ते। सः अस्मिन्नस्तीति करम्भी। तं करम्भिणं सोमम्। अपूपवन्तम्। अपूपा

अस्मिन् सन्तीति अपूपवान्। तमपूपवन्तम्। उक्थिनम्। उक्थानि स्तोत्राणि। तानि यस्मिन् सन्ति स उक्थी। तमुक्थिनम्। स्तोत्रवन्त इत्यर्थ। एवगुणविशिष्ट सोम हे इन्द्र प्रात प्रात सवने। जुषस्व सेवस्व। न अस्माक स्वभूतम्॥

विश्वामित्र। इय प्रातस्सवने सवनीयपुरोडाशाना पुरोनुवाक्या बह्वृचानाम्। प्रस्तोतुरपि साम अस्या गीयमान यत्र क्वचित् ब्राह्मणेन नून विनियुज्यते पुरोडाशयागे। धानावन्तम। धाना भ्रष्टयवा। तद्वन्तम्। ताभि सहितम्। करम्भिणम्। धाना पिष्टा आज्येन सयुक्ता करम्भ। तद्वन्तम्। अपूपवन्तम्। अपूप पुरोडाश। तद्वन्तम्। उक्थिन स्तुतशस्त्र सहित सामम्। हे इन्द्र प्रात प्रातस्सवने जुषस्व सेवस्व न अस्मदीयम्॥ ७॥

अपा फेनेन नमुचेः शिर इन्द्रोदवर्तयः। विश्वा यदजयः स्पृधः॥

गोषूक्ती चाश्वसूक्ती च इमामृच दृष्टवान्। अत्रेतिहासमाचक्षते। इन्द्रश्च वै नमुचिश्चासुर समदधाताम्। न नो नक्त न दिवाहन नार्द्रेण न शुष्केणेति। तस्य व्युष्टायामनुदित आदित्येऽपा फेनेन शिरोऽछिनत्। एतद्वै न नक्त न दिवा। यद्व्युष्टायामनुदित आदित्य। एतन्न आर्द्र न शुष्क यदपा फेन। तदेन पापीया वाच वददन्ववर्तत वीरहन् न द्रुहो द्रुह इति। त नर्चा न साम्ना अपाहन्तुमशक्नोत्। तत् हारिवर्णस्यैव निधनेनापाहत। अप शुच हते हारिवर्णस्य निधनेन श्रिय च हरश्चोपैति तुष्टुवान। एतदनयोच्यते। अपामुदकाना फेनेन नमुच असुरस्य शिर हे इन्द्र उदवर्तय उदवर्तितवान्। छिन्नवानित्यर्थ। कदा। उच्यते। विश्वा सर्वा यत्। सप्तम्या अत्र लुक् द्रष्टव्य। यदा अजय जितवानसि। स्पृध। स्पृध इति सङ्ग्रामनाम। त

स्पृधयति इति क्विप । स्पृधातो स्पृध । सङ्ग्रामकारिणी । स्त्रीलिङ्गनिर्दे शात्सेना ॥

गोपूस्त्यश्वसूक्तिनौ । अपा फेनेन अतिल्घुना । नमुचे असुरस्य । शिर उदवर्तय उद्वर्तितवान् असि । उद्वर्तन विशरणम् । हे इन्द्र विश्वा स्पृध स्पधमाना सेना । यत् यदा अजय तदा शिर उदवतय ॥ ८ ॥

इमे त इन्द्र सोमाः सुतासो ये च सोत्वाः। तेषा मत्स्व मभूवसो ॥

वामदेवस्यार्षम् । इमे ते तव इन्द्र सोमा सुतास सुता । अभिषुता इत्यर्थ । कतमा । उच्यते । ये सोत्वा सोतव्या । अभिषवार्हा इत्यर्थ । तेषा मत्स्व । मद तृप्ताविल्यस्यद रूपम् । तृप्यस्व । तर्पणनात्र पान लक्ष्यते । तान् पिबत्यर्थ । प्रभूवसो । प्रभु बहु वसु धन यस्य स प्रभुवसुरेव प्रभूवसु । छान्दस दीर्घत्वम् । तस्य सम्बोधन हे प्रभूवसो । प्रभूतधन इत्यर्थ ॥

वामदेव । हे इन्द्र इमे सामा ते त्वदर्थ सुतास अभिषुतास्तिष्ठन्ति हे इन्द्र । ये च सोमा सोत्वा । सुनाते कृत्यार्थे तवैकेन्केन्यत्वन (पा ३ ४ १४) इति त्वन्प्रत्यये रूप सोत्वा इति । सातव्या । तेषाम् । ते इत्यर्थ । मत्स्व तृप्तो भव हे प्रभुवसो प्रभूतधन ॥ ९ ॥

तुभ्य सुतासः सोमाः स्तीर्ण बर्हिर्विभावसो । स्तोतृभ्य इन्द्र मृडय ॥

सुकक्षस्यार्षम् । तुभ्य त्वदर्थम् । हे इन्द्र सुतास सुता । अभि षुता इत्यर्थ । सोमा । न केवल सोमा अभिषुता । स्तीर्ण च वेद्याख्ये प्रदेश बर्हि हे विभावसो । विविध भाति दीप्यते वसुर्यस्य स विभावसु ।

तस्य सम्बोधन हे विभावसो । दीप्तधन इत्यर्थ । एतत् ज्ञात्वा स्तोतृभ्य । चतुर्थीबहुवचनमिद द्वितीयाबहुवचनस्य स्थाने द्रष्टव्यम् । अस्मत्प्रभृतीन् स्तोतृन् । हे इन्द्र मृडय सुखय । स्तोतृभ्य धन देहीत्यर्थ ॥

सुकक्ष । तुभ्य त्वदर्थं सुतास अभिपुता सामा । स्तीर्ण च बर्हि त्वदर्थं हे विभावसो दीप्तधन । दीप्तिभि व्यापक इति वा । ततो बर्हिषि निषद्य सामान् पीत्वा स्तोतृभ्य अस्मभ्य मृडय उपदया कुरु हे इन्द्र ॥ १० ॥

तृतीये द्वितीया दशत्या

---

आ व इन्द्र क्रिविं यथा वाजयन्त॰ शतक्रतुम् । मंहिष्ठं सिञ्च इन्दुभिः ॥

शुन शपस्यार्षम् । आ इत्ययमुपसर्ग सिञ्चे इत्याख्यातेन सम्बन्धयितव्य । व इति द्वितीयाबहुवचनमिद द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । त्वा इन्द्रम् । क्रिविं यथा । क्रिविरिति कूपनाम । तत्सामीप्यात् आवाहकोऽपि क्रिविरुच्यते । यथाशब्द उपमावाची । आवाहकमिव । यथा कश्चित् आवाहकमुदकेन आसिञ्चति तद्वदित्यर्थ । वाजयन्त पूजयन्त इत्यर्थ । अथवा वाज अन्नम् । तदिच्छन्त इत्यर्थ । कीदृश त्वाम् । उच्यते । शतक्रतुम् । शतमिति बहुनाम । क्रतुरित्यपि कर्मनाम यज्ञनाम वा । बहुकर्माण बहुयज्ञ वेत्यर्थ । मंहिष्ठ अतिशयेन दातारम् । अथवा पूजनीयतमम् । आसिञ्चे । एकवचनमिद बहुवचनस्य स्थाने द्रष्टव्यम् । आसिञ्चाम इत्येतदाशास्महे ॥

शुनश्शेपः। आसिञ्चे इन्दुभिः सोमैः वः त्वा इन्द्रम्। मंहिष्ठं दातृतमम्। शतक्रतुं शतकर्माणं शतप्रज्ञं वा। वाजयन्तः इति वचनव्यत्ययः। वाजं अन्नं इच्छन् अहम्। अथवा आसिञ्चे इत्यत्र वचनव्यत्ययः। आसिञ्चामः इति। क्रिविं कूपं यथा अद्भिः आसिञ्चति कृत्रिमं तद्वत् इन्दुभिः त्वा आसिञ्चामि॥ १॥

अतश्चिदिन्द्र न उप याहि शतवाजया। इषा सहस्रवाजया॥

श्रुतकक्षस्यार्षम्। अतः स्वर्गाख्यात् स्थानात्। चिदिति पादपूरणः। हे इन्द्र नः उपयाहि अस्मत्समीपमागच्छ। केन पुनरागच्छामि। उच्यते। शतवाजया। शतमिति बहुनाम। वाजः वेगः। बहुर्वेगो यस्याः सा शतवाजा। तया शतवाजया बहुवेगया। शीघ्रया गत्या उपयाहीत्यर्थः। इषा। इषेत्यन्ननाम। तया इषा अन्नेन च। अस्मदीयेन सहान्नेनेति वाक्यशेषः। कीदृश्या इषा। उच्यते। सहस्रवाजया। तया बहुभिरवयवैरुपेतया। नः अस्मदीयेनान्नेन गृहीतेनेत्यर्थः॥

श्रुतकक्षः। अतः एतस्मात् द्युलोकात् उपयाहि उपगच्छ। चिदिति पूरणः। हे इन्द्र नः अस्मान्। शतवाजया सहस्रवाजया इति च बहुलयुक्तया इत्यर्थः। इषा अन्नेन सह॥ २॥

आ बुन्दं वृत्रहा ददे जातः पृच्छाद्वि मातरम्। क उग्राः के ह शृण्विरे॥

त्रिशोकस्यार्षम्। आ इत्ययमुपसर्गः। ददे इत्याख्यातेन सम्बन्धयितव्यः। बुन्दं इषुम्। वृत्रहा मेघस्य हन्ता इन्द्रः। आददे आदत्तवान्। जातः जातमात्र एव। आदाय च पृच्छात्। वि इत्ययं छन्दसि परेऽपि (पा. १. ४. ८१) इति परप्रयुक्तः सन् पूर्वो द्रष्टव्यः। विपृच्छात्।

विविधं पृष्टवानित्यर्थ । क पृष्टवान् । उच्यते । मातरं जनयित्रीं अदितिम् । किं पृष्टवान् । उच्यते । के उग्रा अप्रसह्या अस्मच्छत्रव के वा स्फुट ह शृण्विरे श्रूयन्ते विख्याता इति शीघ्रमाचक्ष्व यानह हन्मीति ॥

त्रिशोक' । आददे आदत्तवान् इन्द्र वृत्रहा जात जातमात्र एव । बुन्दम् । वृन्देन समानार्थः । दृढम् । वज्रमित्यर्थ' । जातमात्र एव विपृच्छात् पप्रच्छ । मातर स्वाम् । कथ विपृच्छात् । के उग्रा उद्गीर्णा ओजस्विन इति वा । के ह के च शृण्विरे श्रूयन्ते बलादिभि ३ ॥

बृवदुक्थं हवामहे सृप्रकरस्नमूतये । साधु कृण्वन्तमवसे ॥

मेधातिथेरार्षम् । बृवत् । बृहच्छब्द । हकारस्य वकारापत्या रूपम् । उक्थ्यशब्द स्तोत्रवचन । बृवत् उक्थ यस्य स बृबदुक्थ । त बृबदुक्थम् । बृहत्स्तोत्रमित्यर्थ । वक्तव्यमस्मै उक्तमिति वा । इन्द्र हवामहे आह्वयाम । सृप्रकरस्नम् । करस्नू बाहू । सृप्रौ गतौ प्रलम्बौ बाहू यस्य स सृप्रकरस्नु । सृप्रकरस्नुरेव सृप्रकरस्न । उकारस्याकारापत्या रूपम् । त सृप्रकरस्नम् । प्रलम्बबाहुमित्यर्थ । किमर्थं पुनराह्वयाम । उच्यत । ऊतये तस्यैव तर्पणार्थम् । कि पुन कुर्वाण आह्वयाम । उच्यते । साधु कृण्वन्त वृत्रव धादिकर्म कुर्वन्तम् । अवसे आत्मन पालनार्थं च ॥

मेधातिथि । बृबदुक्थ बृहद्भि महद्भि स्तोतव्यम् । हकारस्य वकार । अथवा ब्रवीतेर्धातो कर्मणि बृवत् । वक्तव्य उच्चारणीय स्तोत्र अस्येति । बृवदुक्थो महदुक्थ । वक्तव्यमस्मै उक्तमिति वा इति यास्क (नि. ६. ४) । अस्य च व्याख्या कृतैव भवति अस्माभि । हवामहे आह्वयाम । सृप्रकरस्नम् । कर एव करस्न । सृप्र सृतः कर दानार्थम् । ऊतये तर्पणाय । साधु साधक धन कृण्वन्त प्रयच्छन्त अवसे रक्षणाय हवामहे ॥ ४ ॥

ऋजुनीती नो वरुणो मित्रो नयति विद्वान्। अर्यमा देवैः सजोषाः॥

गौतमस्यार्षम्। नीतिर्मार्ग। ऋज्वी नीतिर्यस्य स ऋजुनीति। ऋजुमार्ग इत्यर्थ। न अस्मान्। वरुण मित्रश्च नयति। यत्रास्माभि स्वकर्मवशात गन्तव्य शुभे अशुभे वा स्थाने तत्र नयतु। कीदृश पुनर्वरुण नयतु। उच्यते। विद्वान् जानन् स्वमधिकारम्। अर्यमा च नयतु। देवैरन्यै सह सजोषा सह प्रीणयमाण। त्रयोऽप्येते अस्मान् नयन्त्वित्यर्थ॥

गौतम। ऋजुनीती ऋजुनीत्या सम्यक् मार्गेण। नयनीति पञ्चमलकारान्तम्। नयतु। नः अस्मान्। वरुण मित्रश्च विद्वान्। ऋजुनीतिः नयति अर्यमा च देवैः सजोषाः सह प्रीणयमाण॥ ६॥

दूरादिहेव यत्सतोऽरुणप्सुरशिश्वितत्। वि भानुं विश्वथा तनत्॥

ब्रह्मातिथेरार्षम्। उषा देवता। दूरात् द्युलोकात् इहेव। इवशब्द उपमार्थीय। अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोग इति पादपूरण। इह पृथिव्याम्। यत्। नपुंसकलिङ्गमिद व्यत्ययेन स्त्रीलिङ्गे द्रष्टव्यम्। या उषा सत प्रशस्ता यजमानान् प्रति। कीदृशी उषाः। उच्यते। अरुणप्सु अरुणरूपा। अशिश्वितत्। श्वितिर्गतिकर्मा। आगच्छतीत्यर्थ। पुरस्तादच्छन्दश्रुतर्यान्यार्थमस्वन्वस्मच्छब्दोऽध्याहर्तव्य। एत्य च सा। वीति पादपूरण। भानु दीप्ति विश्वथा सर्वप्रकार मृदुमध्यतीव्रलक्षण सर्वदा अतनत् तनितवती। उद्यत कृतवतीत्यर्थ॥

ब्रह्मातिथिः। दूरात् दूर। सतः। तिरः सत इति प्राप्तस्य नामनी। दूरे अन्तरिक्षे प्राप्ता इहैव अत्र विद्यमानेव यत् या उषाः। अरुणप्सुः।

प्सु इति रूपनाम। अरुणरूपा। अशिश्वितत् श्वेतते दीप्यते। सा उषा वितनत् वितनोति। भानु दीप्तिम्। विश्वथा सवत्र। इति अश्विनोराग मनकाल इति वेदयति ॥ ६ ॥

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। मध्वा रजांसि सुक्रतू ॥

जमदग्नेर्विश्वामित्रस्य वा आर्षम्। आ इत्ययमुपसर्ग उक्षतमित्या ख्यातेन सम्बन्धयितव्य। अस्माक स्वभूता हे मित्रावरुणौ। घृतैरद कैर्वृष्टिलक्षणै। गव्यूतिम्। गावो यत्र चरन्ति सा गव्यूतिरुच्यते। ता गव्यूतिम्। आ उक्षतमाभिमुख्यन सिञ्चतमित्यर्थ। न केवल गव्यूतिम्। किं तर्हि। मध्वा उदकेन रजांसि त्रीनपि लोकान् आभिमुख्येन सिञ्चतम्। सुक्रतू। क्रतुरिति कर्मनाम प्रज्ञानाम वा। सुशब्द शोभनवचन। सुकर्माणौ सुप्रज्ञौ वा ॥

विश्वामित्र जमदग्नि वा। आ समन्तात् सर्वत। उक्षत सिञ्चतम्। न अस्मदीयाम्। गव्यूतिं गोसञ्चारदेशम्। घृतै उदकै हे मित्रावरुणा मित्रावरुणौ। किं विशेषेण। मध्वा उदकेन रजांसि लोकान् सवान् उक्षत हे सुक्रतू सुकर्माणौ ॥ ७ ॥

उदु त्ये सूनवो गिर काष्ठा यज्ञेष्वत्नत। वाश्रा अभिज्ञु यातवे ॥

हिरण्यस्तूपस्यार्षम्। मारुती ऋक्। उत् इति उपसर्ग अत्नतेत्यनेन आख्यातेन सम्बन्धयितव्य। उकार पादपूरण। त्य ते। सूनव। सूनु रित्यपत्यनाम। अपत्यभूता मरुत। कस्य। पृश्ने रुद्रस्य वा। का। गिर गर्जितलक्षणा वाच। काष्ठाश्च वृष्टिलक्षणा आप। यज्ञेषु। सप्तमीबहु वचनमिदं तृतीयाबहुवचनस्य स्थाने द्रष्टव्यम्। यज्ञै। मेघ प्रतिगम्य

उदनत ऊर्ध्वं विस्तारयन्ति । ऊर्ध्वं क्षिपन्तीत्यर्थ । कीदृशो मरुत. विक्षिपन्ति । उच्यते । वाश्राः । वाशनस्वभावका. । कथं पुनः विक्षिपन्ति । उच्यते । अभिज्ञु । अभिनिपात्य जानुनी । महतादरेणेत्यर्थः । किमर्थं पुनर्विक्षिपन्ति । उच्यते । यातवे पृथिवीं प्रति गमनायेत्यर्थ. ॥

हिरण्यस्तूपः । उत् ऊर्ध्वं अधिक अत्नत आतन्वत काष्ठाः अपः । उ इति पूरणः । त्ये ते सूनवः प्रेरका विश्वस्य । षू प्रेरणे । गिरः इति गृणातेः धातोः कर्मणि गिरतेः वा कर्तरि रूपम् । स्तूयमानाः इति वा गिरन्ति उदकानि इति वा गिरः । अथवा सूनवः रुद्रस्य इति । यथा रुद्रस्य सूनवः (ऋ. वे. ८. २०. १७) इति हि निगमः । यज्ञेषु यजमानेषु यज्ञेष्वेव वा । काष्ठा अत्नन इति । वाश्राः शब्दायमानाः इति काष्ठाविशेषणम् । अभिज्ञु अभिज्ञा पृथिवीमभि । यातवे यातुं गमनार्थम् । अस्मान् । अकर्तृकेष्वपि छन्दसि तुमर्थीयाः दृश्यन्ते ॥ ८ ॥

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूढमस्य पांसुले ॥

मेधातिथेरार्षम् । वैष्णवी ऋक् । इदं त्रैलोक्यं बलिबन्धनकाले विष्णुर्विचक्रमे विविधं चक्रमे क्रान्तवान् । विक्रममाणः स्वस्थानभेदेन त्रिधा त्रिप्रकारं निदधे निहितवान् । कतमेषु त्रिषु स्थानेषु । पृथिव्यामन्तरिक्षे दिवीति शाकपूणि· । समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः । तच्च पदत्रयमपि समूढमस्य । वहेरिदं रूपम् । सम्यक् स्थापितं सुप्रतिष्ठापितम् । कथं सुप्रतिष्ठापितम् । उच्यते । पांसुरे । लुप्तोपममेतत् द्रष्टव्यम् । पांसुरे इव देशे । अथ पांसुलत्वयोगात् पांसुलशब्देन पृथिव्युच्यते । तेषां त्रयाणां पृथिव्यां यत्पदं तत्समूढम् । अथवा विष्णुरादित्यः । स इदं सर्वं अहरहर्विक्रमन् त्रिधा निदधे पदं उदयगिरौ मध्ये च नभसः अस्तगिरौ च । अथवा त्रिधा निदधे पदं पृथिव्यामग्न्यात्मना अन्तरिक्षे वैद्युता-

त्मना दिवि आदित्यात्मना । तत्र पदत्रयमस्य समूढ पासुरे इव देश । अथवा समूढमिति सुदेर्मोहनार्थस्य रूपम् । समूढ सछन्नम् । यदस्य वैद्युतात्मना पद तत् समूढ सछन्नम् ॥

मेधातिथि । इद जगत् विचक्रमे विक्रान्तवान् विष्णु । व्यश्नोतेर्व्याप्ति कर्मणो विशेर्वा प्रवेशकर्मण व्यश्नोते व्याप्तिकर्मणा वा विष्णु । कथ विचक्रमे । त्रेधा त्रिधा पृथिव्या अन्तरिक्षे दिवि इति । निदधे निहितवान् पद स्वम् । तदानीं समूढ अन्तर्गत इत्यर्थ । अस्य पासुले प्रदेशे । इद त्रैलोक्य इति शेष । लोकेभ्योऽपि महत् आसीत् त्रिविक्रमेण महत पदम् ॥ ९ ॥

इति तृतीये तृतीया दशत्या

---

अतीहि मन्युषाविण सुषुवासमुपेरय । अस्य रातौ सुत पिब ॥

मेधातिथेरार्षम् । इन्द्रो देवता । अति इहि अतीत्य आगच्छेत्यर्थ । मन्युषाविण दीप्तस्य सोमस्य अभिषोतार मेधातिथिं मा प्रति । कथ पुनरागच्छामि । उच्यते । यथा सुषुवास अभिषुतवन्त अङ्गिर प्रभृति अन्यमृषिं । उप ईरय उपगतवानसि तद्वदागच्छ । एत्य च अस्य । षष्ठीनिर्देशात् एकदेशमिति वाक्यशेष । रातौ दाने सति । दत्त सदित्यर्थ । सुतम् । द्वितीयैकवचनमिद षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । सुतस्य एक देश पिब ॥

मेधातिथि । अति इहि अतीत्य गच्छ । मन्युषाविण मन्युना क्रोधेन अभिषव कुर्वन्तम् । सुषुवास अभिषुवन्तम् । उपेरय त्व समीप

प्रेरय। अस्य यजमानस्य। मम इत्यर्थ । सुत सोम पिब रातौ दाने सति इन्द्राय इति त्यागे कृते सति ॥ १ ॥

**कद् प्रचेतसे महे वचो देवाय शस्यते। तदिद्ध्यस्य वर्धनम् ॥**

वामदेवस्यार्षम्। कत। किम उत्तरस्य पञ्चम्या अत आदश। कस्मात् कारणात्। उ इति पादपूरण। प्रचतस मह देवाय। त्रीण्यप्य तानि तादर्थ्यचतुर्थ्यन्तानि। प्रवृद्धज्ञानस्य महतो देवस्यार्थायेत्यर्थ। वच स्तुतिलक्षण वचनम्। शस्यते उच्चार्यत इत्यर्थ। उच्यते तत्। इत् इति पादपूरण। हीति यस्मादर्थे। यस्मात् अस्य वर्धन वृद्धिकर तस्मादित्यर्थ। स्तूयमाना हि दवता वीर्येण वर्धन्ते। अतस्तस्य वृद्ध्यर्थं स्तुतिलक्षण वचन उच्चार्यत इत्यर्थ ॥

वामदेव। कत् कदा। उ पूरण। प्रचेतसे प्रकृष्टज्ञानाय। महे महते। देवाय इन्द्राय। वच स्तोत्र शस्यते उच्चार्यते। तदित तत् स्तोत्र एव हि। अस्य देवस्य वर्धन वृद्धिकर भवति ॥ २ ॥

**उक्थ च न शस्यमानं नागो रयिरा चिकेत। न गायत्र गीयमानम् ॥**

मेधातिथे प्रियमेधस्य चार्षम्। उक्थ स्तोत्रम्। चेति पादपूरण। नेत्यय प्रतिषेध आचिकेत्याख्यातेन सम्बन्धयितव्य। शस्यमान उच्चार्य माणमित्यर्थ। नागो। कुङ् गुङ अव्यक्ते शब्दे। गु अव्यक्तभाषी। न गु अगु व्यक्तभाषी। न अगु न व्यक्तभाषी नागु। तस्य नागो। अव्यक्त भाषिण इत्यर्थ। रयि। अन्तर्णीतमत्वर्थमिद द्रष्टव्यम्। रयिमान् मघ वानिन्द्र। न आचिकेत न जानाति। न शृणोतीत्यर्थ। न गायत्र गीयमानम्। न च गायत्रसज्ञक साम गीयमान शृणोतीत्यर्थ ॥

मेधातिथिप्रियमेधौ। उक्थ शस्त्र शस्यमान न आचिकेत न बुद्ध्येत। चन इति अपि इत्यस्यार्थे। अगो गोरहितस्य गाभि हीनस्य अदक्षिणस्य यजमानस्य। रयि धनवान् इन्द्र। न च गायत्र स्तोत्र गीयमान अगो आचिकेत ॥ ३ ॥

इन्द्र उक्थेभिर्मन्दिष्ठो वाजाना च वाजपति। हरिवान्त्सुताना सखा॥

वामदेवस्यार्षम्। इन्द्र उक्थेभि स्तोत्रैरित्यर्थ। कीदृश इन्द्र। महिष्ठ अतिशयेन स्तुत्य इत्यर्थ। वाजानामन्नानाम्। दातति वाक्यशेष। चशब्द पादपूरण। वाजपति अन्नाना स्वामीत्यर्थ। हरिवान्। हरय अश्वा। तद्वान्। अश्ववानित्यर्थ। सुतानामभिषुताना सोमाना सखा सखिभूत। पातत्यर्थ॥

विश्वामित्र। इन्द्र उक्थेभि स्तुतशस्त्रै। मन्दिष्ठ अतिशयेन मदिता। वाजाना अन्नाना च। वाजपति इत्यत्र वाजशब्दोऽनुवादमात्रपर। वाजाना पति इत्यथ। वसूयवो वसुपते वसूनाम्। (ऋ वे १० ४७ १) विद्मा हि त्वा गोपति शूर गोनाम् (ऋ वे ३ ३६ ९) इतिवत्। हरिवान्। हरय इन्द्रवाहना। तद्वान्। सुताना सोमाना सखा नित्यावियुक्त इत्यथ। एवमेव च भवति इन्द्र॥ ४ ॥

आयाह्युप नः सुत वाजेभिर्मा हृणीयथा। माहाँ इव युवजानि॥

श्रुतकक्षस्यार्षम्। आयाह्युप। उपशब्द छन्दसि परऽपि (पा १ ४ ८१) व्यवहिताश्च (पा १ ४ ८२) इत्यव परप्रयुक्त सन् पूर्वो द्रष्टव्य। उपायाहि। समीपे आगच्छत्यर्थ। न सुत अस्माकमभिषुत सोम प्रति। कथ पुनरायाहि। उच्यत। वाजेभि अन्नैरस्मदीयैर्गृहीतै इत्यर्थ। एत्य च स्तोक्न अपराधन मा हृणीयथा मा क्रोध गम।

मा रोषीरित्यर्थः। कथं पुनः मा हृणीयथाः। उच्यते। महानिव युवजानिः। युवतिर्जाया यस्य स युवजानिः। तरुणभार्य इत्यर्थः। स यथा तरुण्या भार्यायाः अपराधेऽपि तस्या न रुष्यति तद्वन्मा रोषीरित्यर्थः॥

मेधातिथिप्रियमेधौ। उपायाहि नः अस्मदीयम्। सुतं सोमम्। वाजेभिः अन्नैः अस्मभ्यं देवैः सार्धम्। मा हृणीयथाः मा क्रुद्धोऽसि। महान् प्रवृद्धः इव युवजानिः। युवतिर्जाया यस्य स युवजानिः। स यथा जायामभिगच्छति न च तामभिक्रुध्यति तद्वत॥ ९॥

कदा वसो स्तोत्रं हर्यत आव श्मशा रुधद्वाः। दीर्घं सुतं वाताप्याय॥

दुर्मित्रस्य सुमित्रस्य वार्षम्। कदा इत्येतत् रुधदित्यनेन सम्बन्धयितव्यः। वसो प्रशस्तधनवन्। यदिदं स्तोत्रं हर्यते कामयमानाय तुभ्यं कृतं अस्माभिः। आकारः पदपूरणः। अवेत्ययमुपसर्गः व्यवहितोऽपि रुधदित्याख्यातेन सम्बध्यते। कदा अवरुधत् कस्मिन् काले अवरोत्स्यति। श्मशा वाः। वाःशब्देन उदकमुच्यते। श्मशाशब्देनापि कुल्योच्यते। लुप्तोपमं चेदं द्रष्टव्यम्। श्मशेव कुल्येवोदकम्। एतदुक्तं भवति। यथा कुल्या उदकमवरुणद्धि तद्वत्कदा स्तोत्रं अवरोत्स्यति। श्रोष्यसीत्यर्थः। कीदृशं स्तोत्रम्। दीर्घम्। सुतं अभिषुतं सोमं प्रति। अथवा सुतमिति सप्तम्यर्थे द्वितीया। सुते अभिषुते सोमे। वाताप्याय। वाताप्या उदकम्। तस्य अर्थाय। उदकार्थमित्यर्थः॥

दुर्मित्रः सुमित्रो वा। कदा श्मशा वायुः। शु आशु अश्नुत इति श्मशा वायुः इति यास्कः। आ अभिमुखं अवारुधत् अवरुन्धीत। वाः उदकम्। तव स्तोत्रं हर्यते कामयमानाय यजमानाय। हे वसो प्रशस्य

इन्द्र । दीर्घं दीर्घकालम् । सुत अभिषवण सोमस्य । वाताप्याय उदकाय भवति इति । स्तोत्रै यज्ञैश्च प्रीत. देवः वर्षति । वात प्राण आप्याययति इति वाताप्य उदकम् । आपोमयः प्राणः इति श्रुते. ॥ ६ ॥

**ब्राह्मणादिन्द्र राधसः पिबा सोममृतूऽरनु । तवेदं सख्यमस्तृतम् ॥**

मेधातिथेरार्षम् । ब्राह्मणात् ब्रह्मण स्वभूतात । हे इन्द्र राधस । राध इति धननाम । तस्मात्र सोमपात्र परिगृह्यते । एतदुक्तं भवति । ब्रह्मण प्राक् स्वभूतात् सोमपात्रात्पिब सोमम् । ऋतून् अनु ऋतूना पश्चात् । कस्मात् पिबामि । उच्यते । यस्मात्तवेदं सख्यं यष्टृयष्टव्यलक्षणम् । अस्तृतं अहिंसितम् । यस्मात्त्व सर्वदा यष्टव्य तस्मात् पिबेत्यर्थ ॥

मेधातिथि' । इय ब्राह्मणाच्छसिन ऋतुयाज्येति कौषीतकिनः । प्रस्तोतुश्च तदानीं कचिदपि विहित सभाव्येत् । ब्राह्मणात् ब्राह्मणाच्छसिनो यागात् । राधस राधकात् । पिब सोम ऋतून् अनु । तृतीयार्थे (पा. १.४.८९) इति अनु कर्मप्रवचनीय । तद्योगात ऋतूनिति द्वितीया । ऋतुनेत्यर्थ' । बहुवचन व्यत्ययात् । ऋतुना नभस्सज्ञेन सह पिब सोमम् । तव इद सख्य अस्माभि जात अस्तृत अहिसित भवति ॥ ७ ॥

**वयं घा ते अपि स्मसि स्तोतार इन्द्र गिर्वणः । त्वं नो जिन्व सोमपाः ॥**

मेधातिथेरार्षम् । वयम् । घ इति पादपूरण । ते तव । अपीति पादपूरण । स्मसि भवाम । क । उच्यते । स्तोतार वयं त्वा स्तुम इत्यर्थ । हे इन्द्र गिर्वण । गिर स्तुतिलक्षणा वाच । ताभिर्य वन्यते सभज्यते स गिर्वणा । तस्य सम्बोधनं हे गिर्वण' । वाग्भि संभजनीय इत्यर्थ । एतत् ज्ञात्वा त्वं न अस्माकं जिन्व प्रीणय । एतेन तर्पयेत्यर्थ । हे सोमपा सोमानां पात ॥

मेधातिथिः । वयं स्तोतारः । घेति पूरणः । ते तव स्वभूताः । अपि स्मसि अपि भवामः । किमस्मान् त्वदीयत्वेन नाङ्गीकरोषि इत्यर्थः । हे इन्द्र गिर्वणः गीर्भिः वननीय । त्वं वो जिन्व पूरय कामैः हे सोमपाः ॥ ८ ॥

एन्द्र पृक्षु कासु चिन्नृम्णं तनूषु धेहि नः । सत्राजिदुग्र पौंस्यम् ॥

वामदेवस्यार्षम् । आ इत्ययमुपसर्गो धेहीत्याख्यातेन सम्बन्धयितव्यः । हे इन्द्र पृक्षु । पृची सम्पर्के इत्यस्येदं रूपम् । सम्पृच्यन्ते यस्या यागक्रियायां यजमाना देवैः सह सा पृक् । तासु पृक्षु । यागक्रियासु इत्यर्थः । कासुचित् नृम्णं धनम् । तनूषु शरीरेषु । आधेहि नः । आ इत्ययं निशब्दस्य स्थाने द्रष्टव्यः । निधेहि । स्थापयेत्यर्थः । कस्य पुनः तनूषु । उच्यते । नः अस्माकं स्वभूतासु तनूषु । किंच सत्राजित् । सत्राशब्दः यद्यपि सत्यनाम तथापीह सदाशब्दस्यार्थे द्रष्टव्यः । सदाजिदिति सत्राजित् । सदा शत्रूणां जेता इत्यर्थः । हे उग्र अप्रसह्य । पौंस्यं बलम् । द्वितीयानिर्देशान्निधेहीत्येतदनुषज्यते । बलं च तनूषु निधेहीत्यर्थः ॥

वामदेवस्यार्षम् । हे इन्द्र पृक्षु सङ्ग्रामेषु कासुचित् यासु कासुचित् । सर्वासु इत्यर्थः । पौंस्यमिति व्यवहितमपि अत्र सम्बध्यते योग्यत्वात् । पौंस्यं आधेहि संग्रामेषु प्रवृत्तेषु । नृम्णं सुखं च आधेहि । नः तनूषु अङ्गेषु । हे सत्राजित् सर्वस्य जेतः । उग्र ओजस्विन् ॥ ९ ॥

एवा ह्यसि वीरयुरेवा शूर उत स्थिरः । एवा ते राध्यं मनः ॥

श्रुतकक्षस्यार्षम् । एवशब्दः पदपूरणः । हिशब्दो यस्मादर्थे । यस्मात्त्वं असि भवसि वीरयुः । वीरा यजमानपुरुषाः । तान् कामयते यः स वीरयुः । वीरयतेः युप्रत्ययः । वीरयुः यजमानकाम इत्यर्थः । यस्मात्त्वं

शूर । उत अपि च स्थिर । यस्मादिति वचनात्तस्मादित्यध्याहार्यम् । तस्मात् ते तव यागादिभि राध्य आराधनीय मन । तस्मात्त्व यष्टव्य इत्यर्थ ॥

श्रुतकक्ष । एव पूर्वे स्तुत इन्द्र स्तोत्रै कामान् प्रयच्छन् तेन तुष्ट ब्रवीति । एव एवम् । हि इति प्रसिद्धौ । त्व वीर्यु स्तोत्रकाम असि । एव च शूर असि । उत अपिच । स्थिर असि । एव च ते तव मन अत्र राध्य सग्रामधनयोग्य भवति हे इन्द्र ॥ १० ॥

तृतीये चतुर्थी दशत्या

---

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनव ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुष ॥

वसिष्ठस्यार्षम् । इन्द्रो देवता । बृहती छन्द । अभीत्ययमुपसर्ग नोनुम इत्याख्यानेन सम्बन्धयितव्य । त्वा त्वा हे शूर विक्रान्त अभि नोनुम । नु स्तुताविव्यस्येद रूपम् । आभिमुख्येन अत्यर्थं पुन पुनर्वा स्तुम । कथ पुन स्तुम । उच्यते । अदुग्धा इव धनव । अचिरप्रसूता गाव धेनुशब्देनोच्यन्ते । ता यथा आत्मीय वत्स स्नेहार्द्रेण मनसा हुकारादिभिरभिनन्दन्ति तद्वत्स्तुम इत्यर्थ । कीदृश स्तुम । उच्यते । ईशानमीश्वर अस्य जगत । स्वर्दृशम् । स्व आदित्य । तमिव य पश्यति स स्वर्दृक् । आदित्यमिव सर्वस्य जगत द्रष्टारमित्यर्थ । ईशानमीश्वर तस्थुष स्थावरस्य । स्थावरग्रहण प्रदर्शनार्थम् । जङ्गमस्य चेत्यर्थ ॥

ऋचोऽग्नीतिरभित्वेति बृहत्यः सकला अपि ।
न हि वो मास्नी तत्र प्रति त्वायेति सस्तुति. ॥
आदित्यानामथेन्द्राग्नी अपादिन्द्राग्निसंस्तुतिः ।
आश्विन्युक्ता शचीभिर्नो द्वयच चेमा उ मामिति ॥
यदा कदा वरुणस्य त्वष्टा नो बहुदेवता ।
उषस्या प्र त्वु इत्येषा वयमहीं सूर्यमस्तव ॥
इत्येकादश ताभ्योऽन्या ऐन्द्रय ऐकोनसप्तति' ॥

वसिष्ठः । अभिनोनुम. शूर अभिष्टुमः त्वा त्वा वयं हे शूर । अदुग्धा इव धेनवः सन्तः सोमपूर्णचमसत्वेन । ईशान अस्य जगतः जङ्गमस्य । स्वर्दृशं सर्वदृशम् । ईशान तस्थुषः स्थावरस्य च हे इन्द्र । तिष्ठतेर्लिट क्वसुः । तस्थिवच्छब्दात् वसोस्संप्रसारणम् (पा. ६. ४. १३१) इति षष्ठ्या संप्रसारणे तस्थुष इति रूपम् ॥ १ ॥

त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥

शंयोरार्षम् । इत् हि । द्वावपि पदपूरणौ । हवामहे । सातिर्लाभः । तस्मादियं निमित्तसप्तमी । निमित्तं च प्रयोजनम् । धनलाभार्थमित्यर्थ. । कस्य पुनर्लाभार्थम् । उच्यते । वाजस्य अन्नस्य । के पुन सन्त हवामहे । उच्यते । कारव स्तोतार इत्यर्थ । किंच त्वाम् । द्वितीयानिर्देशात् ह्वयतिरनुषक्तव्यः । त्वा ह्वयन्ति वृत्रेषु शत्रुषु । यस्य च भावेन भावलक्षणम् (पा. २. ३. ३७) इति सप्तमी । तच्छब्दश्च लक्षणभूतं योग्यक्रियापदमध्याहर्तव्यम् । शत्रुषु हन्तव्येषु । हे इन्द्र सत्पतिं सतां पालयितारम् । नरः अन्येऽपि मनुष्याः । त्वा काष्ठासु । काष्ठाशब्देन वृष्टिलक्षणाः आपः उच्यन्ते । तस्मादियं निमित्तसप्तमी । अप्सु च निमित्तभूतासु । तदर्थं त्वामाह्वयन्तीत्यर्थ. । कस्य पुनः सम्बन्धिनीष्वप्सु निमित्तभूतासु । उच्यते ।

अर्वत । ऋ गतावित्यस्य वनिप्रत्ययान्तस्य अवर्ण लादेशनैतद्रूपम् । गन्तुर्मेधम्य स्वभूतास्वित्यर्थ । अथवा काष्ठाशब्दन सङ्ग्राम उच्यते । अर्वशब्देनापि अश्व उच्यते । अन्तर्णीतमत्वर्थमेतद्द्रष्टव्य प्रथमाबहुवचनान्त च । सङ्ग्रामेषु मङ्ग्रामभूमिषु वा स्थिता अर्वत अश्ववत आत्मनो जयार्थं त्वामाह्वयन्तीत्यर्थ ॥

शयु भारद्वाज । त्वामित् त्वामेव वय हवामहे आह्वयाम । हि इति पूरण । सातौ लाभे निमित्ते । वाजस्य अन्नस्य । कारव स्तोतार । त्वा हवामहे वृत्रेषु उपद्रवेषु सत्सु हे इन्द्र । सता प्रभवता श्रेष्ठ सत्पति । त नर मनुष्या वय त्वा हवामहे । काष्ठासु युद्धेषु अर्वत अश्वस्य । अश्वार्थम् ॥ २ ॥

*अभि प्र व॰ सुराधसमिन्द्रमर्च यथा विदे ।*
*यो जरितृभ्यो मघवा पुरूवसु सहस्रेणेव शिक्षति ॥*

वालखिल्यानामार्षम् । अभि प्र इत्युपसर्गौ अर्चेत्याख्यानेन सम्बन्ध यितव्यौ । व । द्वितीयाबहुवचनमिद एकवचनस्य स्थाने द्रष्टव्यम् । त्वाम् । सुराधस शोभनधन इन्द्रम् । अर्च इति प्रथमपुरुषैकवचनमिदमुत्तमपुरुषैक वचनस्य स्थाने द्रष्टव्यम् । अभिप्रार्चामि । आभिमुख्येन स्थित्वा प्रकर्षेण पूजयामीत्यर्थ । कीदृशमिन्द्र पूजयामि । उच्यते । य जरितृभ्य स्तोतृभ्य । मघवान् धनवान् । पुरूवसु । पुर्विति बहुनाम । वस्वित्यपि धननाम । पुरु धन यस्य स पुरुवसु । पुरुवसुरेव पुरूवसु । बहुधन इत्यर्थ । सहस्रेणव प्रकारेणेति वाक्यशेष । बहुभि प्रकारैरित्यर्थ । शिक्षति ददातीत्यर्थ । किं पुनर्ददाति । सामर्थ्याद्धनम् ॥

वालखिल्या ऋषय । अभि उद्दिश्य इन्द्र प्रार्च प्रगाय हे स्तोत । व । स्वस्त्यर्थ । सुराधस सुधन इन्द्रम् । यथा विदे विदत ज्ञायते यथा

तथा प्राचं। यः मघवा। मघ दानं महतेः। दानवान् नित्यदानः। पुरूवसुः बहुधनः। जरितृभ्यः स्तोतृभ्य.। शिक्षति प्रयच्छति। पुरूवसुः इति विशेषणबलात् वसूनि सिध्यन्ति। सहस्रेण इति विभक्तिव्यत्यय.। सहस्र धनानि। इव इति पूरण.॥ ३॥

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे॥

नोधस आर्षम्। तं व। द्वितीयाबहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम्। त्वाम्। इन्द्र दस्मम्। तसु दसु उपक्षये इत्यस्येदं रूपम्। उपक्षयितारं शत्रूणाम्। ऋतीषहम्। ऋतय सेना गन्तृत्वात्। ता योऽभिभवति स ऋतीषाट्। तं ऋतीषहम्। परकीयाना सेनानामभिभवितारं इत्यर्थ। वसो प्रशस्तधन। अन्धस सोमलक्षणस्यान्नस्य। मन्दानम्। मदि मुदि मोदे इत्यस्येदं रूपम्। अत्तारम्। भक्षयितारमित्यर्थ। अभीत्ययमुपसर्ग· नवामहे इत्यास्यातेन सम्बन्धयितव्य। वत्सं न वत्समिव। यथा वत्सं धेनव अचिरप्रसूता गाव तद्वदित्यर्थ। स्वसरेषु यागगृहेषु। इन्द्रं गीर्भिर्नवामहे। नु स्तुतावित्यस्येदं रूपम्। अभिनवामहे। आभिमुख्येन स्तुम इत्यर्थ॥

नोधाः। तं प्रसिद्धम्। दस्म दर्शनीयम्। ऋतीषहम्। अर्तेः ऋतिः अरिः। अरीणामभिभवितारम। वसो· प्रशस्यस्य अन्धसः अन्नस्य। तृतीयार्थे षष्ठी। मन्दानं मोदमानम्। अभिनवामहे अभिष्टुमः। इन्द्र ईश्वरम। गीर्भिः स्तुतिभिः। वत्स न वत्समिव स्वसरेषु गोष्ठेषु धेनवः। इति सोमपूर्णता आत्मनः द्योतयति॥ ४॥

तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम्॥

कले प्रगाथम्य आर्षम् । तरोभिरात्मीयैर्बलै । व । द्वितीयाबहु वचनमिद द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । त्वाम् । विदद्वसुम् । विद्ले र्लाभार्थस्यद रूपम् । वस्वित्यपि धननाम । विदित धन यन स विदद्वसु । तम् । आत्मीयैर्बलै शत्रुधनानामपहर्तारमित्यर्थ । इन्द्र सबाध मदीया ऋत्विज । ऊतय तर्पणार्थं आत्मन पालनार्थं वा । बृहद्गायन्त सुष्ठु अर्चयन्त । स्तुवन्त इत्यर्थ । सुतसोमे । सुत अभिषुत सोमो यस्मिन् स सुतसोम ज्योतिष्टोमादिसोमयाग । तस्मिन् सुतसोमे । अध्वरे यज्ञे ज्योतिष्टोमादौ । हुवे । उत्तमपुरुषैकवचनमिद प्रथमपुरुषबहुवचनार्थे द्रष्टव्यम् । आह्वयन्ति । कथ पुनराह्वयन्ति । उच्यते । भर न द्वितीयैकवचन सप्तम्ये कवचनस्य स्थाने द्रष्टव्यम् । नशब्द उपरिष्टादुपचारत्वादुपमार्थीय । भर इव । सङ्ग्रामे इवेत्यर्थ । कारिणम् । करोतीति सन्निधानात् सङ्ग्रामम् । एतदुक्त भवति । यथा सङ्ग्रामे योद्धा प्रतियोद्धार महता यत्नेन आह्वयति तद्वदाह्वयन्तीत्यर्थ ॥

कठि प्रगाथ । तराभि वेग युक्त । व । त्वामित्यथ । विदद्वसु लब्धवन्त धनानि । इन्द्र ईश्वरम् । सबाध सबाधमाना परस्परम् । यद्वा बाधसहिता शत्रुभि बाध्यमाना । ऊतये रक्षणाय । हुवे इति वचनव्यत्यय । ह्वयामहे । बृहत् परिवृढ गुणै । साम गायन्त सुतसामे अध्वरे यज्ञे । भर न भरन्तमिव बलवन्तमिव । कारिण उपकारिण योद्धारम् ॥ ९ ॥

तरणिरित्सिषासति वाज पुरन्ध्या युजा ।
आ व इन्द्र पुरुहूत नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥

वसिष्ठस्यार्षम् । तरणि क्षिप्रकारी इन्द्र । इदिति पदपूरण । सिषासति सभक्तुमिच्छति । किम् । उच्यते । वाज अन्नम् । पुरन्ध्या

पत्न्या। युजा युक्तेन। आकार पदपूरण। व। युष्मच्छब्दोऽत्र व्यत्ययेन अस्मच्छब्दस्य स्थाने द्रष्टव्य। वहुवचनमेकवचनस्य स्थाने द्रष्टव्यम्। मम वसिष्ठस्य स्वभूतम्। यत एवमत इन्द्रं पुरुहूतं बहुभिर्यजमानै यज्ञेष्वाहृतम्। नमे प्रह्वीकरोमि। ऋजुं करोमीत्यर्थ। केन पुनर्ऋजुं करोमि। उच्यते। गिरा स्तुतिलक्षणया वाचा। स्तुत्वेत्यर्थ। कथ ऋजुं करोमि। उच्यते। नेमिं तष्टेव सुद्र्वं शोभनकाष्ठम्। एतदुक्तं भवति। यथा शोभनं काष्ठं तक्षणादिभि तष्टा वर्धकि वक्रं करोति तद्वत् स्तुतिभि ऋजूकरोमीत्यर्थ ॥

वसिष्टः। तरणिरित् त्वरित एव। स्तुत्यादिषु सिषासति सभजति। वाज अन्नम्। पुरन्ध्या बुद्ध्या। युजा सहायभूतया। सिषासति इत्यत्र सनोतेः स्वार्थिकस्सन्। आनमे वशं नयामि। वः त्वाम्। इन्द्र ईश्वरम्। पुरुहूत बहुभिराहूतम्। गिरा स्तुत्या। नेमिं चक्रस्य बाह्यवल्यम्। तष्टेव तक्षेव। यथा नेमि तष्टा आनमते सुद्रुव शोभनदारुक तथा त्वा आनमे ॥ ६ ॥

तृतीये पञ्चम्या दशत्या

---

नकिष्टं कर्मणा नशद्यश्चकार सदावृधम्।
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥

पुरुहन्मन आर्षम्। नकि न कश्चित् रक्ष पिशाचादि वा। तं यजमानम्। कर्मणा मारणात्मकेन। नशत्। शुद्धोऽप्ययं नशि विपूर्वो द्रष्टव्य अन्तर्णीतश्च। विनाशयतीत्यर्थ.। यो यजमानः किं कृतवान्।

उच्यत । यश्चकार करोति । सदा सर्वदा वृध वर्धयितारम् । इन्द्र न । न शब्द उपरिष्टादुपचारत्वादुपमार्थीय । अस्त्युपमार्थस्य सम्प्रत्यर्थ प्रयोग इति पादपूरण । य सर्वदा वर्धयितार आत्मन इन्द्र करोतीत्यर्थ । कै पुनर्वर्धयितारमिन्द्र करोति । उच्यत । यज्ञैरग्निष्टोमादिभि । कीदृशमिन्द्रम् । उच्यते । विश्वगूर्त सर्वशत्रूणा वधाय आगूतम् । ऋभ्वम महान्तम । अधृष्टमधर्षितम् । अनभिभूतपूर्व केनचिदित्यर्थ । धृष्णु शत्रूणामभिभवितारम् । ओजसा स्वेन बलेन ॥

पुरुहन्मा । नकि नशत् न व्याप्नुयात् । नानुगच्छेत् । त जन कर्मणा स्तुतिभि । य कश्चन इन्द्र सदावृध सर्वदा वृद्ध चकार कुर्यात् यज्ञे । नेति पूरण । विश्वगूत विश्वै स्तुतम् । गृणातेगूर्त । ऋभ्वस महान्तम् । ऋभु भवति इति ऋभ्वस । अधृष्ट अनभिभूतम् । धृष्णु धर्षकम् । ओजसा बलेन । सकललोकधृष्णु बलेनापि अधृष्यम् ॥ १ ॥

य ऋते चिदभिश्रिष पुरा जत्रुभ्य आतृद ।
सधाता सधि मघवा पुरूवसुर्निष्कर्ता विह्रुत पुन ॥

प्रगाथस्यार्षम् । भग्नस्य महावीरस्याभिमर्शनमनया ऋचा क्रियत । य इन्द्र । ऋते यज्ञे । चिदिति पादपूरण । अभिश्रिष अभिराभिमुख्य । श्रिपति श्रयणार्थे । आभिमुख्येन श्रित अभिश्रित । तस्य । अभिश्रिष । यज्ञे आश्रितस्य महावीरस्यत्यर्थ । पुरा प्राक् । जत्रुभ्य ग्रीवानाडीभ्य इत्यर्थ । आतृद आतर्दनात् । प्राक ग्रीवानाडीभ्यो हिंसाया इत्यर्थ । सन्धाता सन्धि इति षष्ठ्यर्थे द्वितीया । सन्धे भग्नस्यापि महावीरस्य य इन्द्र सन्धाता । मघवान् पुरूवसु बहुधन । निष्कर्ता सस्कर्तेत्यर्थ । कीदृशस्य पुनर्महावीरस्य सस्कर्ता । उच्यते । विह्रुतम् । इदमपि षष्ठ्यर्थे द्वितीया ।

विहुतस्य इतश्चेतश्च विक्षिप्तावयवस्य । भग्नस्येत्यर्थः । किं सकृदेव सन्कृता । उच्यते । पुनः पुनः । य ऋत चिदिति यच्छब्दश्रुतेः साकाङ्क्ष स्यात् तं वय स्तुम इति वाक्यशेषः ॥

मघातिथिः मध्यातिथिश्च अस्याः परस्याः ऋचः । या मघवा इन्द्रः ऋतं चित् रेतनापि अभिश्लिषः अभिश्लेषकात् श्लेष्मणः । येन छिन्नं संश्लिष्यते तत् श्लेष्म । पुरा पुरस्तादेव । जत्रुभ्यः असमावाभ्यां मध्ये नाभ्यः । आतृदः आतर्दनात् लोहितनिस्सारणात् । पुरा छिन्नमात्र एव सन्धि सन्धातव्यम् । सन्धाता सन्धातुं शक्तः । पुरूवसुः बहुधनः । स इन्द्रः विहुतं विच्छिन्नम् । पुनः निष्कृता सन्कृता भवति ॥ २ ॥

आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥

प्राग्भाष्यार्थम् । आ इत्ययमुपसर्गः वहन्त्वित्यनेन सम्बध्यते । आवहन्तु । त्वा त्वां सहस्रम् । आ इत्युपसर्गाभ्यासात् क्रियापदाभ्यासः । आवहन्तु त्वा सहस्रसङ्ख्याकाः । शतसङ्ख्याकाश्च आवहन्तु । हरयः अश्वाः । कीदृशाः सन्तः आवहन्तु । उच्यते । युक्ताः नियुक्ताः इत्यर्थः । क्व पुनर्नियुक्ताः । उच्यते । रथे हिरण्यये हिरण्मये । ब्रह्मयुजः । एतदपि अश्वानामेव विशेषणम् । ब्रह्म अन्नम् । तेन निमित्तभूतेन ये युज्यन्ते ते ब्रह्मयुजः । हविर्लक्षणस्यान्नस्य भक्षणाय गन्तुं ये रथे नियुज्यन्ते इत्यर्थः । अथवा मन्त्रविधियमानलक्षणं ब्रह्म । तेन निमित्तभूतेन ये युज्यन्ते ते ब्रह्मयुजः । अथवा ब्रह्मणा प्रजापतिना अनुज्ञातस्येन्द्रस्य ये युज्यन्ते ते ब्रह्मयुजः । हे इन्द्र केशिनः केसरवन्तः । किमर्थं पुनरावहन्तु । उच्यते । सोमपीतये सोमपानार्थमित्यर्थः ॥

आवहन्तु त्वा सहस्र हरयः। आवहन्तु शतम्। युक्ताः सन्त। रथे हिरण्यये हिरण्मये। ब्रह्मयुजः मन्त्रैर्युज्यमानाः। केशिन प्रशस्तकेशाः। हे इन्द्र सोमपीतये सोमपानार्थम् ॥ ३ ॥

आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः।
मा त्वा केचिन्नियेमुरिन्न पाशिनोऽति धन्वेव ताँ इहि ॥

विश्वामित्र आह। आ इत्ययमुपसर्ग याहीत्याख्यानेन सम्बध्यते। आयाहि अस्मद्यज्ञं हे इन्द्र। कै पुनरागच्छामि। उच्यते। मन्द्रैर्मन्द्रस्वरै गम्भीरस्वरै हरिभि। मयूररोमभि मयूरशब्दसदृशैर्हेषितशब्दैरित्यर्थ। अथवा मयूरपक्षसदृशै रोमभि। मा इत्ययमुपसर्गे नियेमुरित्यनेन सम्बध्यते। यमि श्चात्र बन्धनार्थे। मा नियेमुस्त्वा केचित्। मा निबध्नन्त्वित्यर्थ। इदिति पादपूरण। न पाशिन। नशब्द पुरस्तादुपचारोऽपि इह उपमार्थीय। पाशिन इव। एतदुक्तं भवति। यथा केचित्पाशिन लुब्धका शकुनिं निबध्नन्ति तद्वत् त्वा आगच्छन्तं मा केचिन्निरुध्यन्तु इत्यर्थ। यद्यपि च केचिन्निरुध्यन्ति तथापि। अति इत्ययमुपसर्ग। उपसर्गाश्च पुनरेवमात्मका। यत्र क्रियावाची कश्चिच्छब्द प्रयुज्यते तत्र विशेषमाहु। यत्र तु न प्रयुज्यते तत्र ससाधना क्रियामाहु। न चात्र क्रियावाची कश्चिच्छब्द प्रयुज्यते। अत उपसर्ग एवं क्रिया ब्रवीति। अतीत्य तान् धन्वेव। इवशब्द उपमार्थस्यासंभवात्पादपूरण। धन्वेत्यत्र च तृतीयाया लुग्द्रष्टव्य। धन्वना अन्तरिक्षेण। अथवा धन्वना धनुषा। अस्त्रैर्विजित्य तान् इह आगच्छ। एतदुक्तं भवति। यद्यप्यतीत्य तान् अन्तरिक्षेण धनुषा वा विजित्य आगच्छेत्यर्थ ॥

विश्वामित्रः। आयाहि मन्द्रैः मदनशीलैः स्तुत्यैर्वा हरिभिः। मयूररोमभिः श्यामवर्णैः। हे इन्द्र मा नियेमुः मा निरोत्सिषुः त्वा केचित् अन्ये स्तोतृस्तु-

निभिः। इत् एव। न पाशिन। नति पुरस्ताद्धुपचारादपि उपमार्थीय। पाशिन इव पक्षिण पार्श्व अति अतीत्य तान् अन्यान् इहि गच्छ अस्मान्। धन्वेव मरुदेशमिव पिपासितः॥ ४॥

त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यम्।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः॥

गौतम आह। त्व हे इन्द्र अङ्ग क्षिप्रम्। प्रशंसिष। प्रशस्त करोषि। देव दानात् द्योतनात् द्युस्थानात् शत्रूणा दमनाच्च। हे शविष्ठ अतिशयेन बलवन्। कं पुन क्षिप्र प्रशस्त करोषि। उच्यते। मर्त्य स्तोतार मनुष्यम्। किंच न त्वदन्य हे मघवन् धनवन् अस्ति विद्यते। मर्डिता सुखयिता हे इन्द्र। यत एवमतो ब्रवीमि उच्चारयामि। ते तव। वच स्तुतिलक्षण वचनम्। एतदुक्त भवति। यत एवमतोऽहमपि गौतम त्वा स्तौमीत्यर्थ॥

गौतमः। प्रशंसिष इति अन्तर्णीतण्यर्थ। प्रशसय। प्रशस्त कुरु। मर्त्य स्तोतारम्। अङ्ग क्षिप्रम्। देव त्व शविष्ठ अतिशयेन बलयुक्त। न त्वदन्योऽस्ति मर्डिता सुखयिता। हे मघवन् इन्द्र। अतो ब्रवीमि ते तुभ्य वच स्तुतिरूपम्॥ ५॥

त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः।
त्वं वृत्राणि हंस्यप्रतीन्येक इत् पुर्वनुत्तश्चर्षणीधृतिः॥

नृमेधस्य पुरमेधस्य आर्षम्। हे इन्द्र यशा यश अन्न कीर्तिर्वा। अन्तर्णीतमत्वर्थ चैतद् द्रष्टव्यम्। यशस्वी अन्नवान्वा कीर्तिमान्वा। असि भवसीत्यर्थ। ऋजीषी। सामस्य पूयमानस्य यदतिरिच्यते तत् ऋजीषम्।

नेन तद्वान् । कथं पुनरसौ तेन तद्वान् । उच्यते । शवस पति । शव बलम् । तस्याधिपतिभूत । किंच त्वं वृत्राणि हंसि शत्रुकुलानि मेघवृन्दानि वा । कीदृशानि पुनर्वृत्राणि हंसि । उच्यते । अप्रतीनि अप्रतिर्गुवन्ति । प्रतिबन्धं कर्तुं न शक्नुवन्तीत्यर्थः । एक इत् । इच्छब्द एवशब्दस्यार्थे । एक एव हंसि । केन पुन हंसि । उच्यते । पुरु बहुरूप । अनुत्त । चर्षणीधृति । चर्षणयो मनुष्या । तैर्यो धार्यते स चर्षणीधृत् । तेन चर्षणीधृता । एतदुक्तं भवति । तव पश्चाद्य मनुष्यैः धार्यते वज्र तेन हंसीत्यर्थं । कथं च मनुष्यै धार्यते वज्र । प्रभुणा येऽनुचरास्ते धारयन्त्यायुधम् । अथवा यजमानस्य चर्षणय स्वभूता ऋत्विज । तैर्धार्यते यः स वज्रोऽभिधीयते । अथवा चर्षणीधृतिरिन्द्र । मनुष्याश्चर्षणय । तं धारयति इति वा ॥

नृमेधा पुरुमेधा च । त्वं हे इन्द्र यशाः यशस्वी असि । यशश्शब्दान्मत्वर्थीयलोपः । ऋजीषी । ऋजीष गतरसमपि सोम न त्यजसि सोमेच्छया । ऋजीषं हि तृतीयसवनेऽभिषुण्वन्ति । शवसो बलस्य पति । त्वं वृत्राणि शत्रून् हंसि । अप्रतीनि अप्रतिद्वन्द्वीनि । एक इत् एक एव । पुरू पुरूणि बहूनि । शेश्छन्दसि (पा. ६. १. ७०) इति शेर्लोपः । अनुत्तः अप्रेरितः केनापि । चर्षणीधृति चर्षणीनां जनानां धारकः त्वम् ॥ ६ ॥

इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥

मेधातिथिराह । इन्द्र इत् । इच्छब्द एवशब्दस्यार्थे । इन्द्रमेव । देवतातये यज्ञे इत्यर्थ । इन्द्रमेव प्रयति प्रोत्सरति । अध्वरे यज्ञे । इन्द्रमेव समीके सङ्ग्रामे । वनिन । वनमुदकं सोमलक्षणम् । तेन तद्वन्त ।

सोमवन्त इत्यर्थः । इन्द्रमेव धनस्य सातये लाभार्थमित्यर्थः । हवामहे इत्येतत्सर्वत्रानुषक्तव्यम् ॥

मेधातिथिः तिसृणामृषिः । इन्द्रमित् इन्द्रमेव देवतातये यज्ञाय यज्ञलाभार्थं हवामहे । इन्द्रमेव प्रयति प्रगच्छति क्रियमाणे अध्वरे हवामहे । इन्द्र समीके सङ्ग्रामे । वनिनः सभजनवन्त हवामहे । इन्द्र हवामहे धनस्य सातये लाभाय ॥ ७ ॥

इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥

मेधातिथेरार्षम् । इमा । उ इति पदपूरण । त्वा त्वाम् । पुरूवसो । पुर्विति बहुनाम । वस्वित्यपि धननाम । पुरु वसु यस्य स पुरुवसुः । पुरुवसुरेव पुरूवसुः । छान्दसो दीर्घ । तस्य सम्बोधनं हे पुरूवसो । बहुधन । गिरः स्तुतयः वर्धन्तु । वृधिरन्तर्णीतण्यर्थो द्रष्टव्यः । वर्धयन्तु । कतमाः । उच्यते । याः मम मेधातिथेः स्वभूताः । सत्कर्तृका इत्यर्थः । किंच येऽप्येते मदीया ऋत्विजः पावकवर्णाः पावक इव वर्णीयाः । शुचयः दीप्ताः । विपश्चितः मेधाविन । एतेऽपि स्तोमैः स्तोत्रैस्त्वा अभि अनूषत आभिमुख्येन अस्तुवत स्तुवन्ति वा । एतत्कर्तृका अपि स्तुतयः त्वां वर्धयन्त्वित्यर्थः ॥

इमा गिरः स्तुतयः । त्वा त्वा वर्धन्तु हे पुरूवसो बहुधन । याः मम मदीया गिरः ता इमा इति समन्वयः । पावकवर्णाः शुचयः विपश्चितः विद्वांसः अभ्यनूषत अभिष्टुवन्ति स्तोमैः त्वाम् ॥ ८ ॥

उदु त्ये मधुमत्तमा गिरस्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥

मधातिथेरार्षम् । उदित्ययमुपसर्ग ईरते इत्याख्यातेन सम्बन्धयितव्य । त्वशब्दस्तवशब्दपर्याय । त्वे तव । मधुमत्तमा अत्यन्तमधुरा । प्रीतिकरा इत्यर्थ । गिर स्तुतय स्तोत्रलक्षणा । स्तोमास स्तोत्राणि च । उदीरत शस्त्राणि ते ऊर्ध्वं गच्छन्ति । भवन्त इन्द्र प्रतिगच्छन्तीत्यर्थ । कथ पुन उदीरते । उच्यत । यथा सत्राजित । सदा य जयन्ति शत्रून् ते सत्राजित । सदा शत्रूणा जेतार । धनसा परकीयाना धनाना सम्भक्तार । आहर्तार इत्यर्थ । अक्षितोतय । अक्षीणा ऊति पालन येषा ते अक्षितोतय । अक्षीणपालना इत्यर्थ । वाजयन्त पूजयन्त । अथवा वाजशब्दो वेगवचन । वेगवन्त रथा इव । एतदुक्त भवति । यथा एवगुणविशिष्टा रथा गच्छन्ति तद्वत् त्वा प्रति मदीयानि शस्त्राणि स्तोत्राणि च गच्छन्तीत्यर्थ ॥

उदीरते उदीरयन्ते । त्ये ते इमे स्तोमास स्तोतार । मधुमत्तमा रसवत्तमा । गिर स्तुती । सत्राजित सर्वदा जेतार इन्द्रप्रसादात् । धनसा धनाना सभक्तार । अक्षितोतय अक्षीणरक्षा । वाजयन्त युद्धमिच्छन्त रथा इव अकुण्ठनेमित्वना ॥ ९ ॥

यथा गोरो अपा कृत तृप्यन्नेत्यवेरिणम् ।
अपित्वे न प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥

देवातिथेरार्षम् । यथा गौर गौरमृग सिंहो व्याघ्रो वा । अपा उदकन कृत प्रदेश तडागादिक प्रति । तृप्यन् एति आगच्छति । अव इत्युपसर्गश्रुत क्रियापदमध्याह्रियते । अवहाय । इरिण प्रदेशम् । एव त्वा हे इन्द्र अपित्वे अपगमनकाले । प्रपित्वे प्राप्ते । न अस्माकम् । तूय तूर्णं क्षिप्र आगहि आगच्छेत्यर्थ । एत्य च कण्वेषु । सप्तमीबहुवचनमिद

तृतीयाबहुवचनस्य स्थाने द्रष्टव्यम् । कण्वैर्मेधाविभिरस्मदीयै ऋत्विग्भिः सह पिब सोमम् ॥

देवातिथिः काण्व । यथा गौरः गौरमृगः । तृष्यन् पिपासुः । अपा कृतं वर्जितं उदकेन । इरिणं ऊषरं क्षेत्रम् । अवैति गच्छति अभिगच्छति । उदकभ्रान्त्या । इरिणमिति निदर्शनं उदकाभावात् तृष्णातिशयनिदर्शनार्थम् । तथा त्व आपित्वे आगमने दिवसस्य । प्रातः । प्रपित्वे प्रगमने अपराह्णे । नः अस्मान् अभि । तूय क्षिप्रम् । आगहि आगच्छ । आगत्य च कण्वेषु कण्वपुत्रेषु अस्मासु यजमानेषु । सु सुष्ठु त्व पिब सोमं सचा सहास्माभिः ॥१०॥

तृतीये षष्ठया दशता

---

शग्ध्यू षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥

भर्गस्यार्षम् । शग्धि साधय । ऊ सु इति द्वावपि पदपूरणौ । हे शचीपते । शचीति कर्मनाम । शच्याः पतिः स्वामी शचीपतिः । तस्य सम्बोधनं हे शचीपते । सर्वकर्मणा ज्योतिष्टोमादीना अधिपतिभूत इन्द्र । किं पुनर्याचामहे । विश्वाभिः ऊतिभिः । सहयोगलक्षणा एषा तृतीया । विश्वैः पालनैः सह । भगं न । नशब्द उपरिष्टादुपचारत्वादुपमार्थीयः । अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोग इति पदपूरणः । पालनसहितं धनमित्यर्थः । हीति पदपूरणः । कं पुनर्याचामहे । उच्यते । त्वा त्वां इन्द्रम् । कीदृशं त्वाम् ।

उच्यते । यशसम् । अन्तर्णीतमत्वर्थमिद द्रष्टव्यम् । यशस्विनमन्नवन्तं त्वामित्यर्थ । वसुविदम् । वसु धनम् । तत् य विन्दति लभते स वसुवित् । तं वसुविदम् । शतुरस्याधीना लब्धारमित्यर्थ । कस्मात्पुनस्त्वा प्रार्थयामहे । उच्यते । अनु शूर चरामसि । अन्वित्ययमुपसर्ग परिशब्दस्य पर्याय । यस्मात्त्वा हे शूर परिचराम तस्मात्प्रार्थयाम ॥

भगं । शग्धि देहि यदभिलषित अस्माक तत् । उ षु इतीमौ पूर्णौ । हे शचीपते । शचीति प्रज्ञाकर्मणा नाम । हे इन्द्र विश्वाभिः ऊतिभिः महद्भिः सह । भग न भगमिव देवम् । हि यस्मात् त्वा त्वाम् । यशस यशस्विनम् । वसुविद धनलम्भनम् । अनुचरामसि परिचराम हे शूर ॥ १ ॥

या इन्द्र भुज आभरः स्वर्वाँ असुरेभ्यः ।
स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥

रेफ आह । यास्त्व हे इन्द्र भुज । भुज्यन्ते ताः इति भुज अन्नानि । आभर आहृतवानसि । केभ्य सकाशात् । उच्यते । स्वर्वान् । स्वर्शब्दो धनवचन । तदस्यास्ति स स्वर्वान् । प्रथमैकवचनमिदं पञ्चमीबहुवचनस्य स्थाने द्रष्टव्यम् । स्वर्वद्भ्य धनवद्भ्य । केभ्य पुन स्वर्वद्भ्य । उच्यते । असुरेभ्य सकाशादित्यर्थ । स्तोतार इत् स्तोतारमेव । हे मघवन् धनवन् । अस्य । षष्ठ्येकवचनमिद तृतीयाबहुवचनस्य स्थाने द्रष्टव्यम् । एभिरन्नैर्वर्धय पुष्टान् कुर्वित्यर्थ । न केवल माम् । ये च त्वे । यस्य च भावेन भावलक्षणम् (पा २. ३. ३७) इत्येतस्मिय सप्तमी । तच्छब्दश्रुतेश्च लक्षणभूतक्रियापदाध्याहार । ये च त्वे त्वयि । त्वयीष्ट्व्ये सति । वृक्तबर्हिषः आस्तीर्णबर्हिष त्वा ये यजन्ते तानपि तैरन्नै पोषयेत्यर्थ ॥

रेफः काश्यपः। याः भुजः भोजनानि धनानि। आभरः आहरः असुरेभ्यः। हे इन्द्र मघवन् सर्वधनवान् त्वम्। तान् अस्मभ्यं प्रयच्छ इति शेषः। स्तोतारमित् स्तोतारमेव वर्धय। अस्य कर्मणः स्तोतार इति सम्बन्धः। अथवा करणे षष्ठी। तव स्तोतारं अनेन धनेन वर्धय इति। ये च त्वे अन्ये वृक्तबर्हिषः स्तीर्णबर्हिषः यज्वानः तांश्च वर्धय हे मघवन्॥ २॥

प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो।
वरूथ्ये वरुणे छन्द्यं वचः स्तोत्रं राजसु गायत॥

जमदग्निः आत्मीयान् ऋत्विजः आह। प्रेत्ययमुपसर्गः गायत इत्यनेन सम्बन्धयितव्यः। मित्राय अर्यम्णे। द्वे अप्येते तादर्थ्यचतुर्थ्यौ। मित्रस्य अर्यम्णश्चार्थायेत्यर्थः। ऋतावसो। ऋतो यज्ञः। स वसुभूतो यस्य सः ऋतवसुः इन्द्रः। ऋतवसुरेव ऋतावसुः। छान्दसं दीर्घत्वम्। सम्बुध्येकवचनं चतुर्थ्यर्थे द्रष्टव्यम्। ऋतवसवे इन्द्रस्य चार्थायेत्यर्थः। वरुणे। सप्तम्येकवचनमिदं चतुर्थ्यर्थे द्रष्टव्यम्। वरुणस्य चार्थायेत्यर्थः। सचथ्यं सचनीयम्। सम्भजनीयमित्यर्थ। वरूथ्ये। सप्तम्येकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्। वरूथ्यं वरणीयम्। छन्द्यम्। छन्दशब्देन स्तुतिरुच्यते। तस्या स्तुतौ भवमीत्यर्थ.। किं पुनस्तत्। वचः वचनं स्तोतृलक्षणं स्तोत्रं च। राजसु। सप्तमीबहुवचनमिदं चतुर्थीबहुवचनस्य स्थाने द्रष्टव्यम्। राजभ्य ईश्वरेभ्य दीप्तेभ्यो वा मित्रादिभ्यः। तेषां अर्थाय। प्रगायत हे मदीया ऋत्विज इत्यर्थः॥

जमदग्निः। प्र प्रकर्षेण गायत इत्युपरितनं विपरिणतं अत्र सम्बद्ध्यते। गायत गीतं कुरु हे स्तोतः। मित्राय प्रगायत। अर्यम्णे च प्रगायत। सचथ्यं सचथस्य सेवायाः योग्यं स्तोत्रम्। हे ऋतावसो यज्ञधन। अथ जमदग्निः बहुवदात्मानं आह। वरूथ्ये वरूथ्यं वरूथाय गृहाय हितम्।

छन्द्य कमनीयम् । वच स्तोत्रम् । वरुणे वरुणमुद्दिश्य गायत । अथ सर्वान् आदित्यान् उद्दिश्य आह । स्तोत्र गायत जमदग्नय राजसु नियन्तृषु आदित्येषु । तान् उद्दिश्य ॥ ३ ॥

अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभव समस्वरन् रुद्रा गृणन्त पूर्व्यम् ॥

मेधातिथेरार्षम् । अभीत्ययमुपसर्ग गृणन्त इत्याख्यातेन सम्बध्यते । त्वा त्वाम् । पूर्वपीतये अनादिकालप्रवृत्ताय सोमपानाय । हे इन्द्र स्तोमेभि स्तोत्रै । आयव ऋत्विग्लक्षणा मनुष्या । कीदृशा मनुष्या । उच्यते । समीचीनास सङ्गता । सहभूता इत्यर्थ । ऋभव महान्त । समस्वरन् पूर्वकालेऽपि स्तुतिमुच्चारितवन्त । रुद्रा रोदनस्वभावका । स्तुत्युच्चारणशीला इत्यर्थ । अभिगृणन्ते आभिमुख्यन स्तुवन्तीत्यर्थ । कीदृश त्वा स्तुवन्ति । उच्यते । पूर्व्यं पूर्वतनमित्यर्थ ॥

मेधातिथि । अभिसमस्वरन् अभिसस्तुवन्ति । त्वा त्वाम् । पूर्वपीतये प्रथमपानाय । हे इन्द्र स्तोमेभि स्तोत्रै । आयवो मनुष्या । समीचीनास सङ्गता । ऋभव दीप्ता । रुद्रा स्तोतार अन्ये गृणन्त अस्तुवन् । पूर्व्य पुरातन इन्द्रम् । रुद्रा रवन्त शब्दायमाना । रुवन्ति उपगायन्ति इति रुद्रा ॥ ४ ॥

प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्र हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥

पुरुमधा आत्मीयान् ऋत्विज आह । प्रेत्ययमर्चेनेत्यनेन सम्बन्धयितव्य । व । द्वितीयाबहुवचनमिद प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् । यूयम् । इन्द्राय बृहते इन्द्रस्य बृहतोऽर्थाय । हे मरुत

मदीया ऋत्विज । ब्रह्म सोमलक्षणमन्नम् । प्रार्चत प्रकर्षेण स्तुतेत्यर्थ । स इन्द्र कीदृश यस्यार्थाय स्तुम । उच्यते । य वृत्र मघ हनति हन्ति । वृत्रहा पूर्वकालमपि शत्रूणा हन्ता । शतक्रतु बहुमज्ञ बहुकर्मा वा । कथ पुनर्यो वृत्राणि हन्ति । उच्यत । वज्रेण । कीदृशन वज्रेण । शतपर्वणा । पर्वशब्देन सन्धिरुच्यते । शतसन्धिना । बहुसन्धिनेत्यर्थ ॥

अस्या. परस्याश्च नृमेधपुरुमेधौ द्वावृषी । प्रार्चत प्रकुरुत इयर्थ । वः यूयम् । इन्द्राय बृहते ह मरुतः स्तोतार. । महत् रुवन्तीति मरुत । ब्रह्म स्तोत्रम् । स्तुत्श्च शतक्रतु' शतकर्मा शतप्रज्ञा वा इन्द्र । वृत्र शत्रु युष्माकम् । हनतीति पञ्चमलकारान्तम । वृत्रहा वृत्राणा हन्ता । वज्रेण शतपर्वणा ॥ ९ ॥

बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥

मेधातिथि आत्मीयान् ऋत्विज आह । बृहत् महत् । सुष्ठित्यर्थ । इन्द्राय गायत उच्चारयत । किं तत् । सामर्थ्यात् स्तुतिरूपम् । हे मरुत मदीया ऋत्विज । कीदृश पुन स्तुतिरूपमुच्चारयाम । उच्यते । वृत्रहन्तम अतिशयेन वृत्रस्य हन्तृ । येनासौ स्तुत वृत्र हन्तु शक्नोतीत्यर्थ । येन च ज्योतिरादित्यास्य अजनयत् आरोपितवानित्यर्थ । हे ऋतावृध । ऋतो यज्ञ । त य वर्धयन्ति ते ऋतावृध । तेषा सम्बोधन हे ऋतावृध । यज्ञस्य वर्धयितार । उपरि समीपयितार इत्यर्थ । कीदृश पुन स्तुतिरूप मुच्चारयाम । उच्यते । देवं । द्वितीया तृतीयार्थे द्रष्टव्या । देवेन सोमेन सयुक्तम् । कीदृशस्येन्द्रस्यार्थाय । उच्यते । देवाय । दानादिगुणयुक्तस्ये न्द्रस्यार्थाय । कीदृश पुन स्तुतिरूपमुच्चारयाम । उच्यते । जागृवि अति प्रीतिकरमित्यर्थ ॥

बृहत् महत् स्तोत्र बृहदाख्यमेव वा साम। इन्द्राय गायत हे मरुत स्तोतार। वृत्रहन्तम वृत्राणां पापानां अतिशयेन हन्तृ। येन साम्ना ज्योति यज्ञ अजनयन्। ऋतावृध यज्ञस्य वर्धयितार अङ्गिरस। देव दीप्तज्योतिषम्। देवाय इन्द्राय। जागृवि प्रबुद्ध अतिरोहितम् ॥ ६ ॥

**इन्द्र क्रतु न आभर पिता पुत्रेभ्यो यथा।**
**शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥**

शक्तिरिन्द्रमाह। हे इन्द्र क्रतु प्रज्ञानम्। न अस्माकम्। आभर आहर। आनयत्यर्थ। शिक्ष देहि। कथ वा देहि। पिता पुत्रेभ्यो यथा यथा पिता पुत्रेभ्यो ददाति तद्वदित्यर्थ। क पुनर्न्दामि। उच्यते। अस्मिन् यामनि। यान्ति देवा यस्मिन् स यमा यज्ञ। तस्मिन् यामनि। यज्ञ इत्यर्थ। हे पुरुहूत पुरुभिर्यजमानै आहूत। त्वद्दत्तया च प्रज्ञया जीवा जीवन्तो वयम्। ज्योति ज्ञान अशीमहि प्राप्नुयामत्यर्थ ॥

वसिष्ठ। हे इन्द्र क्रतु कर्म प्रज्ञान वा। न अस्मभ्यम्। आभर आहर। पिता पुत्रेभ्य यथा धनम्। शिक्षा देहि न अस्मभ्य धन हे पुरुहूत। अस्मिन् यामनि यज्ञे। जीवा वयम्। ज्योति सूर्यम्। अशीमहि प्राप्नुयाम प्रतिदिनम् ॥ ७ ॥

**मा न इन्द्र परावृणग्भवा न सधमाद्ये।**
**त्व न ऊती त्वमिन्न आप्य मा न इन्द्र परावृणक् ॥**

रेफो नाम ऋषि इन्द्रमाह। मा न अस्मान्। हे इन्द्र परावृणक्। वृजी वर्जने इत्यस्यैद रूपम्। मा अस्मान् परावर्जी। भव न अस्माकम्। सधमाद्ये इत्यपा सप्तमी प्रथमैकवचनस्य स्थाने द्रष्टव्या। सहभूताना

मदनीयः । किंच त्वं नः अस्माकम् । ऊती अविता रक्षिता तर्पयिता वा । त्वं इत त्वमेव नः आप्यं ज्ञानव्यमित्यर्थः । यतश्चैवमतः पुनरपि ब्रवीमि मा न इन्द्र परावृणक् ॥

रेफः । हे इन्द्र मा परावृणक् मा त्याक्षीः । नः अस्मान् हे इन्द्र । भव नः अस्माकं असावारणः सवनाचे यज्ञे । त्वं नः ऊती ऊतये रक्षायै भव । त्वमित् त्वमेव हि नः आप्यं ज्ञातेयम् । बन्धुः इत्यर्थः । पुनरुक्तिः आदरार्था ॥ ८ ॥

**वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।**
**पवित्रस्य प्रस्रवणेषु वृत्रहन् परि स्तोतार आसते ॥**

मेधातिथेरार्षम् । घ इति पदपूरणः । त्वा त्वाम् । परि इत्येतत् आसत इत्येतेन सम्बन्धयितव्यम् । कीदृशा वयम् । उच्यते । सुतावन्तः सोममभिषुतवन्तः । कृतसोमाभिषवा इत्यर्थः । न केवलं सुतावन्तः । वृक्तबर्हिषश्च आस्तीर्णबर्हिष इत्यर्थः । पर्यास्महे त्वा परिवार्य व्यवतिष्ठामहे । न केवलं वयम् । येऽप्येते मदीया ऋत्विजः पवित्रस्य भवतः इन्द्रस्य स्तोतारः एतेऽपि त्वा हे वृत्रहन् पर्यासते । कथं पुनः पर्यासते । आपो न । नशब्द उपरिष्टादुपचारत्वादुपमार्थीयः । आप इव प्रस्रवणेषु । एतदुक्तं भवति । यथा आपः नद्यः निम्नस्थानेषु द्वीपं परिवार्य व्यवतिष्ठन्ते तद्वत् वयं स्तोतारश्च त्वां परिवार्य व्यवतिष्ठाम इत्यर्थः ॥

मेधातिथिः । वयं सुतवन्तः अभिषुतवन्तः सोमम् । वृक्तबर्हिषः स्तीर्णबर्हिषः । त्वा त्वां उपगच्छामः इति शेषः । घेति पूरणः । आपो न आप इव प्रवणाः । पवित्रस्य सोमस्य । प्रस्रवणेषु सवनेषु । हे वृत्रहन् स्तोतारः इमे पर्यासते स्तोतुं त्वाम् ॥ ९ ॥

**यदिन्द्र नाहुषीष्वाँ ओजो नृम्णं च कृष्टिषु ।**
**यद्वा पञ्च क्षितीनां द्युम्नमाभर सत्रा विश्वानि पौंस्या ॥**

शंयुराह । हे इन्द्र नाहुषीषु । नहुष इति मनुष्यनाम । तेषु भवा नाहुष्य । मनुष्यजातीया । ताश्चावान्तरजातीया अभिप्रेता । या यक्ष रक्षोगन्धर्वादय तासु । यत् ओज बलम् । नृम्णं धन च । तत् मम शयो आभर आनय । न केवल यक्षरक्षोगन्धर्वादिष्वेव यत ओजो नृम्ण च तत् आभर । किं तर्हि । कृष्टिषु मनुष्येषु च । रक्ष पिशाचादिषु मनुष्येषु च यद्धन बल च तदपि आभर । यद्वा वाशब्दश्चशब्दस्यार्थे । यच्च पञ्च क्षितीनाम् । क्षितय इत्यपि मनुष्यनाम । पञ्च च ते क्षितयश्च । कतमे पुनस्ते । चत्वारो वर्णा निषादा पञ्चम । तेषा क्षितीना द्युम्न यश अन्न वा तत् आभर । न सकृदेव । किं तर्हि । सत्रा । यद्यपि सत्राशब्द सत्यनामसु पठित तथापीह सर्वदाशब्दपर्यायो द्रष्टव्य । सर्वदा इत्यर्थ । विश्वानि सर्वाणि पौंस्यानि बलानि आभरेत्यथ ॥

शयु । यत् ओजो बल हे इन्द्र । नाहुषीषु मानुषीषु । कृष्टिषु प्रजासु विद्यते । आ इति चार्थे । नृम्ण धन च विद्यते । यद्वा यच्च द्युम्न अन्नम् । पञ्च पञ्चानाम् । विभक्तेर्लुक् । क्षितीना जनानाम् । निषादपञ्चमा वर्णा पञ्च क्षितय । तदाभर आहर अस्मभ्यम् । सत्रा महान्ति । विश्वानि पौंस्यानि वीर्याणि चाहर ॥ १० ॥

तृतीये सप्तम्या दशत्या

---

सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता ।
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥

मेध्यातिथिरिन्द्रमाह । सत्यं इत्था अनेन प्रकारेण । वृषा वर्षिता । दानेत्यर्थः । इत् इति पदपूरण । असि भवसि । वृषजूति । जूतिर्गमनम् । जवतिर्गत्यर्थः । वृषस्येव गमनं यस्य स वृषजूति । तत्र तत्र वृषवद्गन्तेत्यर्थः । नः अस्माकम् । अविता रक्षितेत्यर्थः । किंच वृषा त्वम् । हीति पदपूरणः । हे उग्र अप्रसह्य । शृण्विषे श्रूयसे । परावति दूरे । वृषा अर्वावति सन्निकृष्टे च । सर्वत्र वर्षितेत्यर्थ । श्रुत विख्यात इत्यर्थ. ॥

मेध्यातिथिः । सत्यमित्थेति च सत्यमित्यर्थे वर्तते । सत्यं सत्यमेव वृषेदसि वर्षितैव भवसि । वृषजूतिः वृषभिः सोतृभिः सोमरसस्य सोतृभिः प्रेषितः । नः अस्माकं अविता रक्षिता । वृषा हि हे उग्र त्वं शृण्विषे श्रूयसे । परावति दूरे स्थितः । वृषा उ वृषो । वृषैव श्रुतोऽसि अर्वावति अन्तिके ॥ (१)

यच्छक्रासि परावति यदर्वावति वृत्रहन् ।
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति ॥

रेभस्यार्षम् । यत् यदि हे शक्र इन्द्र । असि परावति दूरे । द्युलोके इत्यर्थः । यत् यदि अर्वावति सन्निकृष्टे । अन्तरिक्षे इत्यर्थः । हे वृत्रहन् वृत्रस्य हन्तः । अतः उभयप्रकारात् स्थानात् । पञ्चमीनिर्देशात् आगतमिति वाक्यशेषः । आगतं त्वाम् । केन पुनरागतम् । उच्यते । केशिभिः । केशा येषां सन्ति ते केशिनः अश्वाः । तैः केशिभिः । वालवद्भिरित्यर्थः । गीर्भिः स्तुतिभि । द्युगत् क्षिप्रम् । हे इन्द्र सुतावान् । सुत अभिषुतः सोमो यस्यास्ति स सुतावान् । अभिषुतेन सोमेन

तद्वानित्यर्थ । आविवासति । रेभ आत्मानमेव परोक्षरूपेण प्रतिनिर्दिशति। रेभो नामाय ऋषि परिचरतीत्यर्थ ॥

रेभ । यत् यदि हे शक्र असि भवसि । परावति दूरे । यद्वा अर्वावति अन्तिके हे वृत्रहन् । अतो देशात् त्वा त्वा आविवासति आह्वयति। गीर्भि स्तुतिभि हे इन्द्र । केशिभि अश्वै । द्युगत् दिव स्तुतिं गच्छन् स्तुतवान् यजमान ॥ (२)

अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् ।
इन्द्र नाम श्रुत्य शाकिन वचो यथा ॥

वप्रो नाम ऋषि अन्तरात्मानमाह । अभीत्ययमुपसर्ग गायत्या ख्यातेन सम्बन्धयितव्य । व । द्वितीयाबहुवचनमिदं प्रथमैकवचनस्य स्थाने द्रष्टव्यम् । हे मदीय अन्तरात्मन् त्वम् । वीर विक्रान्त इन्द्रम् । अन्धस सोमलक्षणस्य अन्नस्य सम्बद्धेषु मदेषु । सप्तमीनिर्देशात् प्राप्ते ष्विति वाक्यशेष । सोमेषु देवेषु सन्निधानभूतेष्वित्यर्थ । अभिगाय अभिस्तुहीत्यर्थ । कथं पुन स्तुहि । उच्यते । गिरा महा महत्या गिरेत्यर्थ । कीदृश च पुनरिन्द्रं स्तुहि । उच्यते । विचेतस विविधप्रज्ञमित्यर्थ । क पुन स्तुहि । उच्यते । इन्द्र नाम । नामशब्दो निपात पादपूरण । कीदृश पुनरिन्द्रं स्तुहि । शाकिनम् । शाकन शाक । शक्तिरित्यर्थ । सा यस्यास्ति स शाकी । त शाकिनम् । शक्तिमन्तमित्यर्थ । किमिव स्तुहि । उच्यते । श्रुत्य वचो यथा । श्रुतौ भव श्रुत्यम् । वच वचनम् । यथा कश्चित् श्रुतौ भव वचन सत्यार्थत्वेन स्तौति तद्वत् स्तुहीत्यर्थ ॥

वप । इयं पिपीलिकमध्या बृहतीति बह्वृचा । आद्यन्तौ पादौ त्रयोदशाक्षरौ । मध्यमोऽष्टाक्षर इति त्रिपदा । अभिगाय हे स्तोत व त्वम् । गिरा

स्तुत्या। मह्ना महत्या। वीरं वीरयितारं शत्रूणाम्। अन्धसः सोमस्य मदेषु जातेषु। विचेतसं विशिष्टज्ञानम्। इन्द्रम्। नामेति पूरणः। श्रुत्य श्रवणीयम्। शाकिनम्। शाकः शक्तिः। तद्वन्त शक्तम्। वचः त्वदीयं यथा प्रवर्तते तथाभिगाय। न पुनरिन्द्रस्य गुणानुगुण्येन। तथा स्तोतुमशक्तेः॥　(३)

इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तये।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः॥

शंयुराह। हे इन्द्र त्रिधातु। धातुशब्देन रसा उच्यन्ते। त्रयो रसाः देवपितृमनुष्योपभोग्याः। अपिवा धातवः कामक्रोधलोभादयः। तैर्युक्तम्। अथवा सुवर्णरजतमाणिक्यैः त्रिभिर्धातुभिर्युक्तम्। यत् त्रिधातु शरणं गृहम्। त्रिवरूथं वरणीयम्। ग्रीष्मवर्षाहेमन्तेषु चन्दनागरुकुङ्कुमादिविलेपनं त्रिप्रकारमपि यस्मिन् तत् त्रिवरूथम्। अथवा त्रिभिरग्निभिर्युक्तम्। वेदैस्त्रिभिर्देवैर्वा ब्रह्मविष्णवीशैः सवनैर्वा त्रिभिः उपेतमित्यर्थः। स्वस्तये अविनाशाय। छर्दिः इति यद्यपि गृहनामसु पठितं तथापि शरणमित्यनेन पौनरुक्त्यप्रसङ्गात् क्रियानिमित्तं द्रष्टव्यम्। उछन्दिरुद्दीप्तिदेवनयोरित्येतस्य दीप्त्यर्थस्येदं रूपम्। समृध्या दीप्तमित्यर्थः। यच्छ देहि। मघवभ्यश्च येऽप्येते मघवन्तः अनेन सोमलक्षणेन धनेन धनवन्तः तेभ्यश्च। मह्यं च। किंच यावय पृथक्कुरु। यावत्प्रमाणकं दिद्युं देयमस्मभ्यम्। अथवा दिद्युदिति वज्रनाम। तस्यायं छान्दसः तकारलोपः। दिद्युतम्। पृथक्कुरु वज्रं एभ्यः। मा एतैर्वज्रसंसर्गं कार्षीः। मा एतान् हिंसीः इत्यर्थः॥

भरद्वाजः। हे इन्द्र त्रिधातु त्रिभूमिकम्। शरणं गृहम्। त्रिवरूथं त्रयाणां वारकं वर्षवातातपानाम्। स्वस्तये अविनाशाय। अस्माकं छर्दिः छादनयुक्तम्।

यच्छ प्रयच्छ । मघवद्भ्य हविष्मद्भ्य अस्मत्पुरुषेभ्य । मह्य च भरद्वाजाय । यावय पृथक्कुरु । दिद्यु आयुध शत्रुभि प्रहितम् । एभ्यः अस्मभ्यम् ॥ (४)

श्रायन्त इव सूर्य विश्वेदिन्द्रस्य भक्षत ।
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिम ॥

नृमेधस आर्षम् । श्रायन्त इव यथा सूर्य रश्मय सश्रयन्ते तद्वत् इन्द्र मरुत सश्रयन्ते । विश्वा विश्वानि । इदिति पदपूरण । इन्द्रस्य स्वभूतानि । भक्षत । शुद्धोऽप्यय भक्षिर्विपूर्वो द्रष्टव्य । विभक्षत । विभजत इत्यर्थ । किं पुनर्विभजत । उच्यते । वसूनि उदकलक्षणानि धनानि । जातो जनिमान् । द्वे अप्येते प्रथमैकवचने चतुर्थ्येकवचनस्य स्थाने द्रष्टव्ये । जाताय जनिष्यमाणाय च । भूतग्रामस्यार्थायेत्यर्थ । केन पुनर्विभजन्त । उच्यते । ओजसा स्वेन सामर्थ्येन । तानि च विभज्यमानानि प्रति । प्रतीत्यय अन्वित्यतस्य स्थाने दीधिम इत्याख्यातेन सम्बन्धयितव्य । भाग न । नशब्द उपरिष्टादुपचारत्वादुपमार्थीय । भागमिव । यथा कश्चित् पित्र्यस्य चार्थस्य साधारणस्य भाग अनुध्यायति तद्वद्वय तानि विभज्यमानानि उदकानि अनुध्यायाम ॥

नृमेधा । श्रायन्तः समाश्रिता यूयम् । इव इति सप्रत्यर्थे । सूर्य प्रेरक इन्द्र सूर्यमिति वा । विश्वेत् विश्वान्येव । वसूनि इन्द्रस्य स्वभूतानि । भक्षत भजत । जातो ह्येष इन्द्र ओजसा सह । जनिमानि जन्मानि जनान् सर्वान् । रक्षितु इति शेष । वय च प्रतिदीधिम प्रतिधारयाम' वसूनि । अनुध्यायाम इति यास्क (नि. ६. ८.) । भाग न भागमिव पितुः पुत्राय ॥ (५)

न सीमदेव आपतदिषं दीर्घायो मर्त्यः ।
एतग्वा चिद्य एतशो युयोजत इन्द्रो हरी युयोजते ॥

पुरुहन्मन आर्यम् । नेत्यय प्रतिषेध आपतदित्याख्यातेन सम्बन्ध यितव्य । सीमिति पदपूरण । अदेव । दवो दानवान् । न देव अदेव । अदानवानित्यर्थ । देवपितृमनुष्येभ्य यो न ददातीत्यर्थ । असो न आपतत् न प्राप्नोतीत्यर्थ । किं पुनर्न प्राप्नोति । उच्यते । इष अन्नम् । हे दीर्घायो दीर्घजीवित मदीय अन्तरात्मन् । मर्त्य मनुष्य । वसुदाता स एतग्वा एतश्वो अश्वो । चिदिति पदपूरण । एतश । प्रथमैकवचनमिद द्विवचनस्य स्थाने द्रष्टव्यम् । एतद्वर्णौ गन्तारो वा । युयोजते स्वे रथे । स्वत्यर्थे नियुङ्क्ते इत्यर्थ । एतदुक्त भवति । अश्वै रथैरसो गच्छतीत्यर्थ । क इव अश्वान् नियुङ्क्ते । उच्यते । इन्द्र । लुप्तोपममेतद्द्रष्टव्यम् । इन्द्र इव । हरी हरितवर्णो अश्वो युयोजते । एतदुक्त भवति । यथा इन्द्र स्वे रथे अश्वान्नियुङ्क्ते तद्वद्दाता स्वे रथे अश्वान्नियुङ्क्ते इत्यर्थ ॥

पुरुहन्मा । न आपतत नाप्नुयात् । सीं एन इन्द्रम् । इष एषणीयम् । अदेव अस्तोता मर्त्य । अथवा सामिति पूरण । इष अन्न अस्तोता मर्त्य नाप्नुयात् इति । हे दीर्घायो पुरुहन्मन् । आयुज्ञान दीर्घदर्शिन् । अत त स्तुहि तत्प्रीत्यर्थ अन्नलाभाय इति वा । य इन्द्र एतश । एत इति श्वेतनाम । शकार उपजन । श्वेतौ शुभ्रौ गुणै । एतग्वा एतस्यस्य गन्तारौ । चित् इति पूरण । हरी स्वीयौ वाहौ । युयोजते युङ्क्ते स्वे रथे स्तोतॄन् अभिगन्तुम् । युयोजत इति पुनरुक्ति पूरणार्था ॥　　　　　　　　(६)

आ नो विश्वासु हव्यमिन्द्रं समत्सु भूषत ।
उप ब्रह्माणि सवनानि वृत्रहन् परमज्या ऋचीषम ॥

नृमेधपुरुमेधौ आत्मीयान् पुत्रपौत्रानाह । आ इत्ययमुपसर्ग परीत्ये तस्य स्थाने भूषतेत्याख्यातेन सम्बन्धयितव्य । न अस्माकम् । हव्यम् ।

आह्वातव्यं इन्द्रम् । विश्वासु समस्तु सङ्ग्रामभूमिषु । सङ्ग्रामेष्वित्यर्थः । परिभूषत परिगृह्णीत आश्रयत्वेन । किंच उप । उपेत्ययमुपसर्ग. । तच्छ्रुतेश्चात्र क्रियापदमध्याह्रियते । उपगच्छ ब्रह्माणि अन्नानि पुरोडाशादीनि । सवनानि च प्रात सवनादीनि हे वृत्रहन् । परमज्या परमा उत्कृष्टा ज्या यस्य स परमज्याः । परमो वा शत्रूणा जेता परमज्याः । ऋचीषम । ऋचीत्यनेन शब्देन स्तुतिरुच्यते । ऋच स्तुतावित्येतस्य स्तुत्यर्थत्वात् । यावन्त स्तुतौ गुणा तैं सर्वैर्युक्त इत्यर्थ । परमज्या ऋचीषम इत्येते यत्तच्छब्दावध्याहृत्य एकवाक्यता नेयै । यस्त्वं परमज्याः ऋचीषम स ब्रह्माणि अन्नानि त्रैविद्यलक्षणानि वा सवनानि च उपगच्छ इत्येवमेकवाक्यता ॥

नृमेधपुरुमेधौ । पूर्वार्धर्चः परोक्षस्तुति । परः प्रत्यक्षस्तुतिः । अभूषत अभिप्रापयत । नः अस्माक हे मदीया ऋत्विजः । विश्वासु समत्सु सङ्ग्रामेषु । हव्य ह्वातव्य इन्द्रम् । उप उपगच्छ । ब्रह्माणि स्तोत्राणि । सवनानि । सूयन्ते इति सवनानि सोमाः । ताश्च अभिगच्छ हे वृत्रहन् । परमज्याः परमं अत्यर्थं क्षपयिता शत्रूणाम् । ज्या वयोहानौ । हे ऋचीषम ऋचा स्तुत्या सदृश । सर्वासा स्तुतीना योग्य ॥ (७)

तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।
सत्रा विश्वस्य परमस्य राजसि नकिष्ट्वा गोषु वृण्वते ॥

वसिष्ठ इन्द्रमाह । तव इत् तवैव हे इन्द्र । अवमं निकृष्टम् । वसु धनं पुष्यसि पुष्णासि । मध्यमं रूप्यादि । मध्यममपि तवैवेत्यर्थ । सत्रा सर्वदा । विश्वस्य सर्वस्य परमस्य सुवर्णादेः । त्वमेव राजसि ईशिषे इत्यर्थः । नकिः न कश्चित् त्वा त्वा गोषु ईशानमीश्वरं कुर्वन्तं वृण्वते वारयतीत्यर्थ ।

एतदुक्तं भवति । सर्वप्रकारस्य त्वमीशिषे । अतः अस्माकमपि ततः किंचन देहीत्यभिप्रायः ॥

वसिष्ठः । तवेत् तवैव स्वं भवति । हे इन्द्र अवमं त्रपुसीसादिकं वसु त्वमेव पुष्यसि । मध्यमं रजतहिरण्यादिकं वसु । सत्रा सत्यमेव विश्वस्य परमस्य श्रेष्ठस्य रत्नादिक वसु नः । राजसि ईशिषे । नकिः वृण्वते न वारयति । त्वा त्वाम् । गोषु निमित्तेषु । यद्वा अवमं वसु पार्थिवं मध्यमं आन्तरिक्ष्यं परम दिव्यम् ॥ (८)

क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः ।
अलर्षि युध्म खजकृत्पुरंदर प्र गायत्रा अगासिषुः ॥

प्रगाथः इन्द्रमाह । क्व इयथाः क्व गच्छसीत्यर्थः । क्व । इदिति पदपूरणः । असि भवसि इत्यर्थः । कस्मात्पुनरेवं पृच्छामि । उच्यते । पुरुत्रा बहुधा । चिदिति पदपूरणः । हिशब्दो यस्मादर्थे । यस्माद्बहुधा ते तव मनः तस्मात् पृच्छामीत्यर्थः । किंच अलर्षि गच्छसि शत्रून्प्रति । हे युध्म योद्धः । हे खजकृत् । खज इति सङ्ग्रामनाम । तस्य कर्ता खजकृत् । तस्य सम्बोधनं हे खजकृत् । असुरैः सह सङ्ग्रामकर्तरित्यर्थः । हे पुरन्दर असुरपुराणां विदारयितः । किंच गायत्राः मन्त्राः त्वामयासिषुः अस्मदुच्चारितमन्त्राः त्वां प्रकर्षेण स्तुवन्तीत्यर्थः ॥

मेधातिथिः मेध्यातिथिश्च । क्व इयथ गन्तासि । क्वासि भवसि । इदिति पूरणः । पुरुत्रा बहुषु देशेषु यज्ञभूमिषु । ते तव मनो भवति । चिदिति पूरणः । हि इति प्रसिद्धौ । अलर्षि इति वैदिको धातुः हिंसाकर्मा । अलर्षि हिंसि शत्रून् । त्वं हे युध्म । युद्धकुशल । हे खजकृत् युद्धकर्तः । हे पुरन्दर पुराणामासुरीणा दारयितः । प्रागासिषुः प्रगायन्ति त्वाम् । गायत्राः गानकुशलाः स्तोतारः ॥ (९)

वयमेनमिदा ह्योऽपीपेमहे वज्रिणम् ।
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥

कलिराह । वय एन इन्द्र इदा इदानीम् । ह्य पूर्वस्मिंश्चाहनि । अपीपेमहे । ओप्यायी वृद्धावित्यस्येद रूपम् । स्तुतिभिर्हविर्भिश्च आप्याय याम । एतदाशास्महे । इह यज्ञे वज्रिणम् । वज्रवन्तमित्यर्थ । यूयमपि हे मदीया ऋत्विज तस्मै इन्द्राय । उ इति पदपूरण । अद्य अस्मिन्न हनि । सवने माध्यन्दिनसवने इत्यर्थ । आ नून भूषत आभिमुख्येन क्षिप्र भवत । श्रुते । सप्तम्येकवचनमिद चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम् । श्रुताय । विख्यातायेत्यर्थ ॥

कलि । वय एन वज्रिणम् । इदा इदानीं अस्मिन् अहनि । ह्य अतीते अह्नि अपीपेमहे आप्याययाम॰ इह अत्राहर्गणे । तस्मा उ तस्मै एव इन्द्राय । अद्य च अस्मिन् दिनेऽपि । सवने यज्ञे । सुत सोम भर हे अध्वर्यो । अभि अनूषत अभिगायत । वर्धयत स्तुतिभि । हे उद्गातार: । नून अद्य श्रुते विश्रुते अहर्गणे । अथवा श्रुत् श्रव । श्रवसे कीर्त्यै युष्माकम् ॥ (१०)

*तृतीयेऽष्टम्या दशत्या*

---

यो राजा चर्षणीना याता रथेभिरध्रिगुः ।
विश्वासा तरुता पृतनानां ज्येष्ठ यो वृत्रहा गृणे ॥

पुरहन्मन आर्षम् । य इन्द्र राजा ईश्वर । चर्षणीना मनुष्या णाम् । याता रथेभि । यत्र गन्तव्य तत्र याता रथै । अध्रिगु । अधृत

गमनकर्म यस्य स अध्रिगु । अप्रतिविध्यगमन इत्यर्थ । विश्वासा तरुता पृतनाना सर्वासा निस्तारिता जता सङ्ग्रामभूमीनाम् । ज्यष्ठम् । द्विती येकवचनमिद प्रथमैकवचनस्य स्थाने द्रष्टव्यम् । ज्येष्ठ अतिशयेन प्रशस्य वृद्धो वा । यश्च वृत्रहा । यच्छब्दश्रुतस्तच्छब्दमध्याहृत्य क्रियापद योनयि तव्यम् । तमह पुरुहन्मा गृण गृणामि । स्तौमीत्यर्थ ॥

पुरुहन्मा । या राजा भवति चषणाना प्रजाना सर्वासाम् । याता गन्ता रथेभि रथै । यजमानाना गन्तायाऽभू । य त्व अध्रिगु अधृतगमन । विश्वासा पृतनाना सेनानाम् । तरुता हन्ता । ज्येष्ठमिति क्रियाविशेषणम् । अधि कतरमित्यर्थ । य वृत्रहा इन्द्र । गृणे स्तूयते अन्यस्य अधिकतरम् ॥ (१)

यत इन्द्र भयामहे ततो नो अभय कृधि ।
मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥

भर्ग इन्द्रमाह । यत यस्मात् हे इन्द्र भयामहे बिभ्म । तत तस्मात् । न अस्मास्म । अभय कृधि कुरु । हे मघवन् धनवन् शग्धि याचामहे । तव स्वभूत तन् अभयम् । किंच न अस्माक ऊतय पालनाय । वि इत्ययमुपसर्ग जहीत्यारयातेन सनध्यते । विनहि । द्विष द्वेष्टॄन् । वीति पदपूरण । मृध । मृध इति सङ्ग्रामनाम । मृध करोति । तत्करो तीति णिच । मृधयति । तद तात् क्विप । मृध । तान् मृध । सङ्ग्राम कारिण इत्यर्थ । अस्माभि सह सङ्ग्राम कर्तुमिच्छन्तीत्यभिप्राय । विन हि विविध जहि मारय विनाशयत्यर्थ ॥

भर्ग । यत भयामहे इन्द्र । तत न अस्माकम् । अभय कृधि कुरु । हे मघवन् शग्धि देहि । तव त्वया देय यत् धन तत धनम् । न अस्मभ्यम् । ऊतये तपणाय । विनहि द्विष द्वेष्टॄन् । विजहि मृध हिंसकाश्च ॥ (२)

वास्तोष्पते ध्रुवा स्थूणा सत्र सोम्यानाम् ।
द्रप्स पुरा भेत्ता शश्वतीनामिन्द्रो मुनीना सखा ॥

इरिम्बिठिर्नाम ऋषि । तस्यदमार्षम् । वास्तु गृहम् । तस्य पति वास्तोष्पति । गृहस्य स्वामीत्यर्थ । तस्य सम्बोधन हे वास्तोष्पते गृहस्य स्वामिन् । ध्रुवा स्थूणा । लुप्तोपममेतद्द्रष्टव्यम् । ध्रुवा स्तूणा इव । यथा गृहस्य ध्रुवा स्थूणा आश्रयभूता तद्वत् त्व आश्रयभूत इत्यर्थ । असत्रम् । एतदपि लुप्तोपमम् । असत्रमिव । असत्र धनु कवच वा । तत् यथा शत्रूणा जेतृ पालयितृ वा तद्वत् त्व जेता पालयिता वेत्यर्थ । केषा पुन पालयिता । उच्यते । सोम्याना सोमसपादिनाम् । यजमानानामित्यर्थ । द्रप्स सोमरस । अन्तर्णीतमत्वर्थ चेद द्रष्टव्यम् । द्रप्सवान् । सोमरसवानित्यर्थ । पुरा भत्ता असुरपुराणा भेत्ता । विनाशयितेत्यर्थ । शश्वतीना बह्वीनाम् । इन्द्र ईश्वर । मुनीना सखा मुनीना सखिभूत । ज्यष्ट इत्यर्थ ॥

इरिम्बिठि । वास्तो पते गृहस्य पते यजमान । ध्रुवा स्थूणा इत्युपमा । स्थूणावद्धारक विश्वस्य । असत्र कवचम् । साम्याना सोमार्हाणा विप्राणा । द्रप्स गन्ता सर्वत्र । भेत्ता पुरा पुरीणाम् । शश्वताना बह्वीनाम् । इन्द्र मुनीना स्तोतृणा सखा च भवति । मननात् स्तातृणा मुनीनाम् ॥ (३)

बण्महाँ असि सूर्य बडादित्य महाँ असि ।
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि ॥

जमदग्निराह । बट् सत्य महान् असि भवसि । वीयण । सूर्य । सुष्ठु ईरयिता नाशयिता शत्रूणा सूर्य । सुष्ठु नाशयित शत्रूणामित्यर्थ । बट् सत्य आदित्य अदिते पुत्र । महान् असि भवसि । महान् शरीरेण

वीर्येण चेत्यर्थः । महस्ते सतो महिमा माहात्म्यम् । पनिष्टम । पनतेः स्तुत्यर्थस्येदं रूपम् । स्तुत्यतम इत्यर्थः । मह्ना महत्वेन ऐश्वर्यादिना । देव दानादिगुणयुक्त । महान् असि भवसीत्यर्थः ॥

जमदग्निः । ऋग्विधानम्—

बण्महानिति दृग्सूर्कमुपतिष्ठेद्वचं जपन् ।
वदन्नप्यनृता वाणीं नानृतेन स लिप्यते ॥

इति । अत्र पुनरुक्तयोऽर्थभूयस्त्वद्योतकाः । बट् सत्यमेव । महानसि हे सूर्य । बण्महान् असि हे आदित्य । महः महतः । ते सतः श्रेष्ठस्य । महिमा महित्वं पनिष्टम स्तुत्यतमः । सोरकारादेशः । मह्ना महिम्ना । त्वं महानसि देव । सूर्यः सरणात् आदानात् रसानाम् । आदित्यः अदितेः पुत्रः ॥　　　　(४)

**अश्वी रथी सुरूप इद्गोमाँ यदिन्द्र ते सखा ।**
**श्वात्रभाजा वयसा सचते सदा चन्द्रैर्याति सभामुप ॥**

देवातिथिरिन्द्रमाह । अश्वी । अश्वा यस्य सन्ति सः अश्वी । अश्ववानित्यर्थः । मदीयः अन्तरात्मा । रथी रथवान् । सुरूपः शोभनरूपः । इदिति पदपूरणः । गोमान् हे इन्द्र । ते तव सखा सखिभूतश्च । एवंगुणविशिष्टो मदीयः अन्तरात्मा श्वात्रभाजा । श्वात्रमिति क्षिप्रनाम । क्षिप्रं यत् सम्भजते तत् श्वात्रभाक् । तेन श्वात्रभाजा । क्षिप्रं सम्भजतेत्यर्थः । वयसा अन्नेन । सचते सेवते । सदा नित्यमित्यर्थः । त्वाम् । य. कीदृशो मदीयः अन्तरात्मा । उच्यते । चन्द्रैः श्वेतैः अश्वैः उपयाति सभां त्वदीयाम् ॥

देवातिथिः । अश्वी रथी सुरूपश्च भवति । गोमाश्च भवति स जनः । यत् य इत्यर्थः । यस्ते सखा यस्स्तोता हे इन्द्र । श्वात्रभाजा । श्वात्रं

सुखम् । तद्वाजा वयसा अनेन । सचते सगच्छते । सदा सर्वदा । शरीरावस्थाविशेषो वा यौवन वय । चन्द्रै हिरण्यै युक्त सन् । उपयाति सभा ससद तव सखा ॥ (५)

यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्यु ।
न त्वा वज्रिन् सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥

पुरुहन्मन आर्षम् । यदित्ययं यद्यपि इत्येतस्यार्थे । यद्यपि द्याव द्युलोका । शतम् । स्युरित्येतत् परस्ताच्छ्रुत अपकृष्यते । यद्यपि शतं द्युलोका स्यु । तथा शत भूमी । भूमि पृथ्वी । द्वितीयाबहुवचनमिद प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् । उतशब्द अपिशब्दस्यार्थे । एतदुक्त भवति । यद्यपि शत पृथिव्य स्यु । यद्यपीति वचनात्तथापीत्येतदध्याहार्यम् । हे इन्द्र ते तव । अन्वित्येतत् तृतीयपादस्थमिहापकृष्टव्यम् । तथापि हे इन्द्र ते तवैतत् द्वयमपि अनु पश्चात् । न्यूनमित्यर्थ । किंच । नेत्यय प्रतिषेध प्रवृत्तिवचनेन सह सबद्ध्यते । प्रवृत्तिवचनश्च अष्टेति परस्ताच्छ्रूयते । स अपकृष्यते । न अष्ट । न व्याप्नोतीत्यर्थ । त्वा त्वा हे वज्रिन् । किं पुनस्त्वा न व्याप्नोति । उच्यते । सहस्र सूर्या । सूर्यसहस्रमपि त्वा न व्याप्नोतीत्यर्थ । जात जातमात्रम् । न च त्वा जातमात्रं अश्नुवाते रोदसी द्यावापृथिव्यौ । एतदुक्त भवति । मिश्रीभूते अपि द्यावापृथिव्यौ त्वा न व्याप्नुत । द्वे अपि मिश्रिते तव न्यूने इत्यर्थ ॥

पुरुहन्मा । यत् यदि । द्यावो द्युलोका । शत ते तव प्रतिमात्वेन स्यु हे इन्द्र । शत भूमी भूमय । उत अपिच स्यु । यदि च सहस्र सूर्या स्यु । ते सर्वे न त्वा अनु अष्ट न अन्वश्नुवते । अश्नोतेर्व्यत्ययेन लट्प्रथम पुरुषबहुवचनस्य एकवचने रूप अष्टेति । नैवानुव्याप्नुवन्ति । रोदसी जात जातमात्र त्वाम् ॥ (६)

यदिन्द्र प्रागपागुदङ् न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥

देवातिथेरार्षम् । यत् यद्यपि हे इन्द्र । प्राक् अपाक् उदक् न्यक् न्यूने अधस्तात् । हूयसे आहूयसे । नृभिर्मनुष्यैः । सिम सर्वरूप । पुरु । तृतीयायाः अत्र लुक् । पुरुभिः । नृभिर्मनुष्यैः सूत । षू प्रेरणे इत्येतस्य कृतादिसित्वं रूपं । सूत । दानाय प्रेरितः । प्रथमैकवचनं सम्बुद्ध्येकवचनस्य स्थाने द्रष्टव्यम् । पुरुभिर्नृभिः दानाय प्रेरित । यद्यपीति वचनात्तथापि दातेत्येतदध्याह्रियते । तथापि दाता असि भवसीत्यर्थः । कस्मै । उच्यते । आनवे । अनुर्मनुष्यः । तस्यापत्यमानव । तस्मै । इदं सप्तम्येकवचनं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम् । आनवाय । मनुष्यापत्यभूताय मह्यं देवातिथये इत्यर्थः । न केवलं मह्यमेव दाता असि । किं तर्हि । असि भवसि । हे प्रशर्ध प्रकर्षेण उत्साहिन् । तुर्वशे । इदमपि सप्तम्येकवचनं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम् । तुर्वशाय राज्ञे । एतदुक्तं भवति । न केवलं मह्यं दाता भवसीत्यर्थ. ॥

देवातिथिः । यत् यदि हे इन्द्र । प्राक् पुरस्तात् । अपाक् पश्चात् । उदक् उत्तरतः । न्यक् दक्षिणतो वा विद्यमानैः नृभिः हूयसे । सिम वय्नीम त्वा स्तुतिभिः । तान् परिहाय अस्मास्वेव पुरु बहु इत्यर्थः । नृषूतः नृभिः स्तोतृभिः प्रेरितः त्वम् । षू प्रेरणे । असि भवसि । आनवे अनोर्वंशजे । असि च तुर्वशे तुर्वशस्य वंशजे । हे प्रशर्ध प्रकृष्टोत्साह । यस्मात् त्वं आनवे तुर्वशे च भवसि स्तोतॄन् अन्यान् परित्यज्य त्वा भक्तानुग्राहक बुद्ध्वा वय्नीमः ॥ (७)

कस्तमिन्द्र त्वावसवा मर्त्यो दधर्षति ।
श्रद्धा हि ते मघवन् पार्ये दिवि वाजी वाजं सिषासति ॥

वसिष्ठस्यार्षम् । कस्तं यजमानम् । हे इन्द्र त्वावसो । त्वमेव वसु धनं यस्य स त्वावसुः । हे त्वद्धन । सम्बुद्धयेकवचनं च द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । त्वावसुम् । त्वद्धनमित्यर्थ. । आ इत्ययं दधर्षतीत्याख्यातेन सम्बन्धयितव्य । मर्त्यः मनुष्यः । शत्रुरित्यर्थः । आदधर्षति अभिभवति । न कश्चित्तमभिभवतीत्यर्थः । तच्छब्दश्रुतेर्यच्छब्दोध्याहर्तव्य· । यः श्रद्धा सत्यमित्यर्थ· । हीति पादपूरण· । ते तव सन्निधौ । हे मघवन् धनवन् । पार्ये दिवि पारयितव्ये द्युलोके । द्युलोकं प्राप्तव्यस्यार्थायेत्यर्थ. । वाजी अन्नवान् । वाजमन्नं सोमलक्षणम् । सिषासति सोमलक्षणमन्नं संस्करोति । सोमयागं करोतीत्यर्थ ॥

वसिष्ठः । को मर्त्यः तं प्रसिद्धम् । त्वा त्वाम् । आदधर्षति आधर्षयेत् । हे वसो व्यापक इन्द्र । श्रद्धा श्रद्धया । इत्थंभूतो वाजी हविष्मान् । हि ते तुभ्यम् । सिषासति दातुमिच्छति । वाजं हविः । हे मघवन् पार्ये अन्त्ये सौत्ये । दिवि दिवसे । यद्वा ते इति पञ्चम्यर्थे व्यत्ययात् चतुर्थी । त्वत्तो वाजं अन्नं लिप्सति ॥ (८)

इन्द्राग्नी अपादियं पूर्वागात् पद्वतीभ्यः ।
हित्वा शिरो जिह्वया रारपचरत्त्रिंशत् पदान्यक्रमीत् ॥

भरद्वाजस्यार्षम् । हे इन्द्राग्नी अपात् पादवर्जिता । इयमुषाः । पूर्वा प्रथमा । आ अगात् आगता । उदितेत्यर्थ· । कुतः पूर्वा । उच्यते । पद्वतीभ्यः । पादवतीभ्यो मनुष्यजातिभ्यः सकाशात् । यावन्मनुष्या न प्रबुद्धयन्ते तावत्तेभ्योऽपि प्रथमतरमित्यर्थः । हित्वा । ओहाङ् त्यागे इत्यस्येदं रूपम् । त्यक्त्वा । शिरः आदित्यम् । विना आदित्येन । आदित्यादपि पूर्वमुदितेत्यर्थः । उदिता च सती जिह्वया । जिह्वेति वाङ्नाम । तया

जिह्वया । वाचेत्यर्थ । रारपत् । नपुसकलिङ्गमिदं स्त्रीलिङ्गस्य स्थाने द्रष्टव्यम् । रारपती । अत्यर्थं शब्द कुर्वन्तीत्यर्थ । यथाग्रे उपउदयवेलाया पक्षिण शब्द कुर्वन्ति तदा उपस्युपचर्यते । चरत् । इदमपि स्त्रीलिङ्ग द्रष्टव्यम् । चरन्ती । आदित्योदय प्रति गच्छन्तीत्यर्थ । त्रिंशत्पदानि त्रिंशन्मुहूर्ताख्यानि स्थानानि अक्रमीत् । अ इत्येष आ इत्येतस्य स्थाने द्रष्टव्य । आक्रमीत् । आक्रान्तवतीत्यर्थ । एतदुक्त भवति । उषा उदिता । आदित्यश्च । यागकाले वर्तन । अतस्तत्र प्रकाशध्वमिति ॥

भरद्वाज । हे इन्द्राग्नी अपात् पादरहिता । इय उषा । पद्वतीभ्य प्रजाभ्य पूर्वा सती आगात् आगता । हित्वा शिर हीनापि शिरसा जिह्वया प्राणिना रारपत् भृश रपन्ति । रप व्यक्ताया वाचि । चरत् । चरन्ती । त्रिंशत्पदानि मुहूर्तान् अक्रमीत् क्रामन्ति एकेन अह्ना । एव च युवयो कर्मेति स्तुति ॥　　(९)

इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभिः ॥

वालखिल्यस्यार्षम् । हे इन्द्र नेदीय । अतिशयेन सन्निकृष्ट इत्यर्थ । आ इत् एदित्येष आ इत्यस्यार्थे । आ इहि आगच्छत्यर्थ । मितमेधाभि । मित प्रक्षिप्तो मेधो यज्ञो यासु ऊतिषु ता मितमेधा । ताभि । यज्ञ सहिते । ऊतिभि पालनैर्निमित्तभूतै । यज्ञान् पालनानि च अस्माक सपादयितुमित्यर्थ । आ इत्ययमुपसर्गश्श्रुते इहीत्यास्यातमनुषज्यते । आगच्छ । हे शतम अतिशयेन सुखतम । शतमाभि अभिष्टिभि । आभि मुख्येन इज्यन्ते यासु देवतास्ता अभिष्टय । इष्टय इत्यर्थ । ताभिश्च निमित्तभूताभि । ताश्च सपादयितुमित्यर्थ । आगच्छ हे स्वापे अस्माक

ज्ञातिभूत । स्वापिभि शोभनैश्च ज्ञातिभिरस्माभिर्निमित्तभूतै । अस्माक स्तुत्यस्तोतृल्क्षण ज्ञातित्व सपादयितुमित्यर्थ ॥

वाल्खिल्य । हे इन्द्र नेदीयः अन्तिकतरः । आ इत् इहीति त्रीणि पदानि । इदिति पूरण । एहि आगच्छ । मितमेधाभि: निर्मितयज्ञाभि निर्मितयज्ञमागाभि । ऊतिभि मरुद्भि. सह । ऊतिशब्दः स्त्रीलिङ्ग । वृत्रवधे सहायभूतेभ्य मरुद्भ्य प्रीत इन्द्र. मध्यन्दिने आत्मन. साधारणे शस्त्रे मरुत्वदीये भाग अकल्पयत—इति हि ऐतरेयके श्रूयते । आ इहि हे शक्म सुखकृत्तम । शतमाभि अभिष्टिभि त्वा अभिगच्छन्तीभि ऊतिभि सह । आगच्छ हे स्वापे शोभनबन्धो । स्वापिभि सुबन्धुभिः ऊतिभि सह ॥ (१०)

तृतीये नवम्या दशत्या

---

इत ऊती वो अजरं प्रहेतारमप्रहितम् ।
आशुं जेतारं हेतारं रथीतममतूर्तं तुग्रियावृधम् ॥

नृमेध इन्द्रमाह । इतो द्युलोकात् । आह्वयतीति वाक्यशेष । ऊती ऊत्यै । पालननिमित्तायेत्यर्थ । व । द्वितीयाबहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम् । त्वाम् । अजरं जरावर्जितम् । प्रहेतारं प्रकर्षेण गमयितारम् । शत्रूणा नाशयितारमित्यर्थ । अप्रहित अप्रतिगतं केनचिच्छत्रुणा । आशुं शीघ्रम् । जेतारं शत्रूणाम् । हेतारं यष्टृणाम् । रथीतम अतिशयेन रथवन्तम् । अतूर्तं अहिंसितं केनचित् । तुग्रियावृधम् । तुग्रिया इत्युदकनाम । तस्य संवर्धनम् । उदकस्य वर्धयितारमित्यर्थ ॥

नृमेधाः। इतः इतोमुखः। हवामहे इति शेषः। ऊती ऊतये रक्षणार्थं तर्पणार्थं वा। वः त्वाम्। अजरं जरारहितम्। प्रहेतारं प्रेरकं विश्वस्य। अप्रहितं केनापि। आशुं क्षिप्रकारिणम्। जेतारं शत्रूणाम्। हेतारं गन्तारम्। रथीतमं नेतृतमम्। अतूर्तं अहिंसितारम्। तुग्रियावृधं उदकस्य वर्धकम्॥ (१)

मो षु त्वा वाघतश्च नारे अस्मन्निरीरमन्।
आरात्ताद्वा सधमादं न आगहीह वा सन्नुपश्रुधि॥

वसिष्ठस्यार्षम्। मा इत्ययं प्रतिषेधो निरीरमन्नित्यास्यातेन सम्बन्धयितव्य। लुट् लोडर्थे द्रष्टव्य। मा नियमेन रमयन्तु। उ सु इति पदपूरणौ। त्वा त्वाम्। वाघत अस्मदीयेभ्य ऋत्विग्भ्यः अन्ये। च न इति पदपूरणौ। ऋत्विजः। आरे अदूरे। अस्मत् अस्माकम्। इन्द्र मा नियमेन रमयन्तु। आरात्तात् वा दूरादपि द्युलोकात् वा। सधमादम्। सह माद्यन्ते यत्र देवता स सधमाद यज्ञ। संप्रति नः अस्माकं स्वभूतं आगच्छेत्यर्थ। इह वा पृथिवीलोके सन् वा उपश्रुधि। उपश्रुत्या च आगच्छेत्यर्थः॥

अस्याः परस्याश्च वसिष्ठः। मा निरीरमन् मा नितरां रमयन्तु। त्वा त्वाम्। वाघतो यजमानाः अन्ये च। चन अपि च। आरे दूरे। अस्मत् अस्मत्तः। अस्मानवच्छिद्य। मा निरीरमन् यजमाना अप्यन्ये। आरात्ताद्वा दूरे वा सन्। सधमादं यज्ञम्। नः अस्मदीयम्। आगहि आगच्छ। इह वा सन् उपश्रुधि उपशृणु स्तोत्रम्॥ (२)

सुनोत सोमपाव्ने सोममिन्द्राय वज्रिणे।
पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः॥

वसिष्ठस्यार्षम्। सुनोत हे मदीया ऋत्विजः सुनोत अभिषुणुत। सोमपाव्ने। सोमं पिबतीति सोमपावा। तस्मादियं तादर्थ्ये चतुर्थी।

सोमपानसक्तायेत्यर्थ । सोममिन्द्राय वज्रिणे। इन्द्रस्य वज्रवतोऽर्थायेत्यर्थ । किंच पचता पक्ती पक्तव्यानि सवनीयादीनि हवींषि । अवसे तर्पणार्थमिन्द्रस्य । पक्त्वा च कृणुध्वं अलंकरणादिभि संस्कारैं सस्कुरुध्वम्। इदिति पदपूरण । पृणन्। प्रथमपुरुषबहुवचनमिदं मध्यमपुरुषबहुवचनस्य स्थाने द्रष्टव्यम्। पूरयत। सोमलक्षणाभिरद्भि । इदिति पदपूरण । पृणते पूरयित्रे। उदकेनापूरयत इन्द्रस्यार्थायेत्यर्थ । मय सुखम् ॥

सुनोत अभिषुणुत। सोम सोमपात्रे सोमस्य पात्रे इन्द्राय वज्रिणे। पचता। दीर्घ साहितिक । पक्ती पक्तव्यानि पुरोडाशादीनि। अवसे तर्पयितुम्। इन्द्र कृणुध्वमित् कुरुतैव कर्माणि। पृणन्नित् प्रयच्छन्नेवाभिभवति इन्द्रः। मयः सुखम्। पृणते हवींषि दत्तवते यजमानाय॥ (३)

यः सत्राहा विचर्षणिरिन्द्रं तं हूमहे वयम्।
सहस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे ॥

शंयोरार्षम्। य इन्द्र सत्राहा। सत्राशब्द सत्यनामा सदाशब्दपर्यायो वा। सत्येन हन्ता सर्वदा वा हन्ता शत्रुम्। विचर्षणि विविधं द्रष्टा सर्वस्य जगत । इन्द्र तं हूमहे वयं आह्वयाम । सहस्रमन्यो। सहस्रमिति बहुनाम। मन्युर्मन्यतेर्दीप्तिकर्मण क्रोधकर्मणो वा। सहस्रं मन्यूना यस्य स सहस्रमन्यु । तस्य सम्बोधनं हे सहस्रमन्यो। बहुदीप्ते बहुक्रोध वा इत्यर्थ । तुविनृम्ण। नृम्णमिति बलनाम। बहुबल इत्यर्थ । सत्पते सता पालयित । भव समत्सु सङ्ग्रामेषु। न अस्माकम्। वृधे वर्धनाय। जयलक्षणाय। वृद्धे कर्ता भवेत्यर्थ ॥

शंयु। य सत्राहा सर्वेषां शत्रूणा हन्ता। विचर्षणिः विद्रष्टा। तमिन्द्रं हूमहे ह्वयामः वयम्। अथ प्रत्यक्षस्तुतिः। हे सहस्रमन्यो बहुकर्मन्।

तुविनृम्ण प्रवृद्धबल । सत्पते सता पालयितः । भव नः अस्माकम् । वृधे वृद्धये । समत्सु संग्रामेषु ॥

ब्रह्मर्षीणां तु याः काश्चित् सम्रामविषयाशिषः ।
येषा पुरोहिता एते तेषा ता इति गृह्यताम् ॥　　　　(४)

**शचीभिर्नः शचीवसू दिवा नक्तं दशस्यतम् ।**
**मा वां रातिरुप दसत् कदा चनास्मद्रातिः कदा चन ॥**

पुरुच्छेपस्यार्षम् । अश्विनौ देवता । शचीभिः । शचीति कर्मनाम । तस्मादियं हेतौ तृतीया । यागाख्यैः स्तुत्याख्यैर्वा कर्मभिः हेतुभूतैः । यस्माद्यजामहे स्तुमश्च तस्मादित्यर्थः । न अस्मभ्यम् । हे शचीवसू कर्मधनौ अश्विनौ । दिवा अहनि । नक्तं रात्रौ च । दशस्यतम् । दाशने-दानकर्मणः एतद्रूपम् । दत्तमित्यर्थः । यद्यद्वयं प्रार्थयामस्तत्तद्दत्तमित्यर्थः । सा च वां युवयोः रातिः दानम् । यद्यत् युवामस्मभ्यं दानं कुर्वाथां तत् मा उपदसत् । दसु उपक्षये इत्येतस्य रूपम् । मा उपक्षैषीदित्यर्थः । कदाचन कदाचिदपि । अस्मत् । पञ्चम्येकवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । अस्माकमपि । रातिर्दानम् । अस्मत्कर्तृकं यद्यत् ब्राह्मणेभ्यो दानं तदपि न कदाचित् उपदसत् उपक्षैषीदित्यर्थ. ॥

पुरुच्छेपः । शचीभिः प्रज्ञाकर्मभिः । नः अस्मभ्यम् । हे शचीवसू शचीभिः शक्तिभिः वासयन्तौ । अश्विनोरेतत् सम्बोधनम् । दिवा दिवसे । नक्तं रात्रौ । दशस्यतं प्रयच्छतं धनानि । मा उपदसत् नोपक्षीयेत । वा युवयोः । रातिः दानम् । कदाचन कदाचिदपि । अस्मत् अस्मत्तः । रातिः कदाचनेति पुनरुक्तिः पुरुच्छेपस्य पुनरुक्तिशीलत्वात् ॥　　　　(५)

**यदा कदा च मीढुषे स्तोता जरेत मर्त्यः ।**
**आदिद्वन्देत वरुणं विपा गिरा धर्तारं वि व्रतानाम् ॥**

वामदेवस्यार्षम्। यदा कदा च यस्मिन् कस्मिन् कालेऽपि। मीढुषे उदकदातुरिन्द्रस्यार्थाय। स्तोता जरेत स्तुतिं कुर्यादित्यर्थ। मर्त्य मनुष्य। आदिद्वन्देत। आद् इत् इति पदपूरणौ। वरुण वरणीय मिन्द्रम्। कथ पुनर्वन्देत। उच्यते। विपा गिरा विविधमिन्द्रगुणान् प्रति प्राप्तया गिरा। इन्द्रगुणप्रकाशिकया गिरेत्यर्थ। तदा अहमपि त यजेयमित्यतदाशास्महे। कीदृश पुनम्त यजेम। उच्यते। धर्तारम्। विशब्द छन्दसि परऽपि (पा १ ४ ८१) इत्येव पर प्रयुक्त पूर्वो द्रष्टव्य। विविध धारयितारमित्यर्थ। केषाम्। व्रतानां कर्मणाम्॥

वामदेव। यदा कदाचित् स्तोता स्तुतिशील मर्त्य। मीढुषे सेक्त्रे वर्षित्रे कामानाम्। जरेत स्तुवीत स्तोतुमिच्छेत्। कामप्रदा देवता स्तुवीत इति यदा इच्छेत् इत्यर्थ। आदित् तदैव। वन्देत स्तुवीत वरुणमेव। नान्या देवतामित्यर्थ। विपा। विप्रा इति वा गिरो वा विशेषणम्। वेपयन्त्या कम्पयन्त्या तु खानि। गिरा स्तुत्या। धर्तार धारयितारम्। विव्रताना विविधयज्ञादिकर्मणा जनानाम्॥ (६)

पाहि गा अन्धसो मद इन्द्राय मेध्यातिथे।
यः संमिश्लो हर्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः॥

मेध्यातिथि इन्द्रमाह। पाहि रक्ष गा। अन्धस सोमलक्षणस्यान्नस्य। मदे। यस्य च भावेन भावलक्षणम् (पा २. ३. ३७) इतीय सप्तमी। तच्छ्रुतेश्च योग्यक्रियापदाध्याहार। सोमलक्षणस्यान्नस्य मदे प्राप्ते। सोमैं रमयन्नित्यर्थ। इन्द्राय। चतुर्थ्येकवचनमिद सम्बुद्ध्येकवचनस्य स्थाने द्रष्टव्यम्। हे इन्द्र। मेध्यातिथे। मेधो यज्ञ। तस्मिन् भव मेध्य। मेध्यश्चासावतिथिश्च मेध्यातिथि। तस्य सम्बोधन हे मेध्यातिथे। यज्ञेन च अतिथिभूत

इत्यर्थ·। यस्त्वं संमिश्ल· संमिश्रयिता आत्मना। स हर्यो अश्वयोरधिष्ठातेत्यर्थः। यश्च त्वं हिरण्यय हिरण्यसदृश । दीप्त इत्यर्थ । यश्च त्वं इन्द्र । यश्च त्वं वज्री वज्रवान्। हिरण्यय सर्वजनेभ्यो हित· रमणीयश्च। परस्ताद्यच्छब्दश्रुतेः पूर्वार्धेर्ऽपि तच्छब्दमध्याहृत्य एकवाक्यता नेया । स पाहि गा अन्धसो मदे इति ॥

मेध्यातिथिः। पाहि पिब इन्द्रोच्छिष्टसोमम्। गा इति गायतेः पञ्चमलकाररूपम्। गाय गीतिं कुरु इन्द्राय। अन्धसः सोमस्य। मदे मदं जनयितु हे मेध्यातिथे। यः इन्द्रः समिश्लः हर्योः संयोजकः। यः हिरण्ययः वज्री वज्रहस्तः। हिरण्ययः हिरण्यसदृशसर्वाङ्ग इत्यर्थ. ॥ (७)

उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः।
सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् ॥

भर्गस्यार्षम्। उभयं स्तुतिं प्रार्थनां च शृणवत्। चशब्दः पदपूरण·। न अस्माकं इन्द्र । कियन्तं पुन· कालं शृणोतु। उच्यते। अर्वाक् अभिलषितफलप्रदानात् प्राक्। शृणोतु। यावदभिलषितोऽर्थ· अस्मभ्यं ददाति इत्यर्थ । इदं वच· श्रुते प्रार्थनायाश्च प्रतिपादकमित्यर्थः। श्रुत्वा च सत्राच्या सदागत्या अस्मदनुग्रहार्थम्। मघवान् धनवान् इन्द्रः। सोमपानार्थं धिया प्रज्ञया। शविष्ठ अतिशयेन बलवान्। आगमत् आगच्छतु। एत्य च अभिलषितमर्थं ददात्वित्यभिप्राय· ॥

भर्गः। उभयं स्तोत्रशस्त्रात्मकं इदं वचः। शृणवत् शृणोतु। नः अस्मदीयं इन्द्रः। अपर आह। उभयं अस्मिन् अहनि क्रियमाणं पूर्वेद्युः कृतं च वचः अहर्गणेषु शृणवदिति। यच्चेदमद्य यदु च ह्य आसीत् (ऐ. ब्रा. ४. ३१.९. १८) इति हि ऐतरेयकम्। अर्वाक् अस्मदभिमुखम्। च इति चणो रूपम्। स च समुच्चये

चेदर्थे च वर्तते। च चण्योगात् श्रृणवत् इत्याख्यातस्य यद्यदि (पा ८. १. ३०) इत्यादिना उदात्तत्वम्। अत्र समुच्चये च वर्तते। श्रृणोतु वच. आगमत् चेति समुच्चय । सत्राच्या बहुस्वन्त्या बहुविषयया धिया युक्त । शविष्ठ शूरतम । मघवान् धनवान् दानवान् वा। सोमपीतये आगमत् आगच्छतु ॥ (८)

महे च न त्वाद्रिव परा शुल्काय दीयसे।
न सहस्राय नायुताय वज्रिवो न शताय शतामघ ॥

प्रगाथ इन्द्रमाह। महे। चतुर्थ्येकवचनमिद तृतीयैकवचनस्य स्थाने द्रष्टव्यम्। चशब्द अपिशब्दस्यार्थ। महतापि। नशब्द दीयसे इत्याख्यातेन सम्बन्धयितव्य । त्वा हे अद्रिव । अद्रिर्वज्र । तद्वान् अद्रिवान्। तस्य सम्बोधन हे अद्रिव । वज्रवन्नित्यर्थ । शुल्काय। इयमपि चतुर्थी तृतीयार्थे द्रष्टव्या। शुल्केन। मूल्येनेत्यर्थ । न दीयसे। महतापि मूल्येन परेभ्य त्व न दीयस इति समस्तार्थ । न सहस्राय नायुताय। द्वे अप्येते तृतीयैकवचनस्य स्थाने द्रष्टव्य। न च सहस्रेण युतेन दशभि सहस्रै परेभ्य त्व दीयसे इत्यर्थ । वज्रिव वज्रवान्। न शताय नापि शतेन। बहुना धनेनेत्यर्थ । हे शतामघ। शतमिति बहुनाम। मघ इत्यपि धननाम। बहु धन यस्य स शतमघ । तस्य सम्बोधन हे शतमघ। बहुधन इत्यर्थ ॥

द्व्यृचस्य मेधातिथिमेध्यातिथी। महे महते। चनेति नेत्यर्थे। पदद्वय वा च नेति। चेत्यपीत्यर्थे। महतेऽपि। शुल्काय फलभूताय धनाय। नाह त्वा च परा दीयसे परा दद्याम्। दीयसे इति ददातेरुत्तमपुरुषस्य कर्तर्येव व्यत्ययेन रूपम्।

परा शुल्काय देयाम् (ऋ. वे. ८. १. ५)

इति बह्वृचा आमनन्ति। हे अद्रिवः वज्रिन्। उक्तमेव स्पष्टयति। न सहस्राय न सहस्रसङ्ख्याय शुल्काय त्वा परादद्या हे वज्रिन. वज्रिन्। वज्रशब्दात् मत्वर्थीय इनिः मतुप् च। नैव शताय परादद्या हे शतमख बहुधन ॥ (९)

**वस्याँ इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः।**
**माता च मे छदयथः समा वसो वसुत्वनाय राधसे ॥**

प्रगाथ इन्द्रमाह। वस्यान् पितु सकाशात्। सर्वो हि पितु सकाशे वसति। त्वं तु ततोऽपि वसीयान् हे इन्द्र असि भवसि। मे मम। उत अपिच। भ्रातुः सकाशात् त्वमेव वसीयान्। कीदृशस्य भ्रातु'। उच्यते। अभुञ्जत न्यायेन अपरिपाल्यमानादित्यर्थ। माता च। चशब्दात् त्वं च। कीदृशी माता। उच्यते। समा। केन। सामर्थ्यात् त्वया समा। त्वत्सदृशीत्यर्थ। छदयथ वसो वासयितरित्यर्थ। वसुत्वनाय अस्माकम्। धनवन्तो वयं स्याम इत्यर्थ। केन धनवन्त। राधसे। चतुर्थ्येकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम्। राधसा ॥

इति माधवाचार्यकृते छन्दसिकाभाष्ये तृतीयः प्रपाठकः

हे इन्द्र वस्यान् वसीयान् अधिकः असि मे त्वम्। पितुः जनकात्। उत अपिच भ्रातु' वस्यानसि। अभुञ्जत. अरक्षतः। माता च त्व च मे छदयथः उपछन्दयथः। समा समौ। पुमान्स्त्रिया (पा. १. २. ६७) इति पुल्लिङ्गता। मात्रा समः त्व पितृभ्रातृभ्या अधिकः च असीत्यर्थः। हे वसो वासक। वसुत्वनाय प्रशस्यभावाय। राधसे धनाय। उभयो' लाभाय मे छन्दयथः॥ (१०)

तृतीयस्य दशमी दशत्या

तृतीय. प्रपाठक.

---

## चतुर्थः प्रपाठकः

इम इन्द्राय सुन्विरे सोमासो दध्याशिर. ।
ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥

वसिष्ठस्यार्षम् । इन्द्राय इन्द्रार्थम् । सुन्विरे अभिषुता इत्यर्थ । सोमास सोमा । कीदृशा सोमा । उच्यते । दध्याशिर दधिमिश्रा इत्यर्थ । एतत् ज्ञात्वा तान् । तच्छब्द एतच्छब्दस्यार्थे द्रष्टव्य । एतान् प्रति । आ इत्ययमुपसर्गे याहीत्याख्यातेन सम्बन्धयितव्यः । मदाय मदार्थम् । वज्रहस्त पीतये पानार्थम् । हरिभ्यामश्वाभ्याम् । आयाहि । किम् । ओक यज्ञगृहम् । तस्मिन् । आकार पदपूरण ॥

वसिष्ठ । इमे सोमास' सोमा । दध्याशिरः दधि आशिः मिश्रण येषा' ते । इन्द्राय । त्वदर्थ इत्यर्थ । सुन्विरे अभिषुता आसन् । तान् सोमानभि । हरिभ्यामायाहि आगच्छ । मदाय मदार्थम् । पीतये । मदार्थं या पीति तदर्थम् । हे वज्रहस्त ओको गृह यज्ञगृह आयाहि ॥ (१)

इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः ।
मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः ॥

वामदेवस्यार्षम् । इमे सोमा । हे इन्द्र मदाय मदार्थम् । ते तव । कीदृशा सोमा । उच्यते । उक्थिन । उक्थानि स्तोत्राणि ।

तद्वन्त । स्तोत्रवन्त इत्यर्थ । मधो । षष्ठ्येकवचनमिदं द्वितीयाबहुवचनस्य स्थाने द्रष्टव्यम् । मधून् । स्वादुयुक्तानित्यर्थ । पपान पिबन् । उपेत्ययमुपसर्ग शृण्वित्याख्यातेन सम्बन्धयितव्य । न अस्माकं स्वभूता । गिर स्तुती । उपशृणु । श्रुत्वा च रास्व देहीत्यर्थ । स्तोत्राय स्तोत्रे मह्यम् । हे गिर्वण । गिर स्तुतय । ताभिर्यो वन्यते सम्भज्यते स गिर्वण । तस्य सम्बोधनं हे गिर्वण । स्तुतिभि सम्भजनीय इत्यर्थ ॥

वामदेवः । विश्वामित्र इत्येके । इमे सोमाः । उक्थिन. स्तुतिमन्तः पवमानस्तोत्रेण स्तुता. । हे इन्द्र ते तव । मदाय हर्षार्थम् । चिकित्रे ज्ञायते दृश्यते । मधोः मादयितु' सोमस्य । सोममित्यर्थः । पपान' पिपासन्नित्यर्थ. । उपशृणु गिरः स्तुती' । न' अस्मदीयाः । रास्व देहि कामान् । स्तोत्राय स्तोत्रे । मह्य इत्यर्थः । हे गिर्वणः गिरा सभक्त' इत्यर्थः ॥ (२)

आ त्वाद्य सबर्दुघां हुवे गायत्रवेपसम् ।
इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरंकृतम् ॥

मेधातिथेरार्षम् । आ इत्ययमुपसर्ग हुवे इत्याख्यातेन सम्बन्धयितव्य । तु इति पदपूरण । अद्य अस्मिन्नहनि यागाहनि । सबर्दुघाम् । सबरित्यमृतनाम । सब अमृतं या दुह्यति सा सबर्दुघा । ताम् । अमृतदोग्ध्रीमित्यर्थ । आहुवे । यद्यप्यन्यत्राह्वयति अर्चतिकर्मा तथापीह याच्यार्थो द्रष्टव्य । आभिमुख्येन याचे । प्रार्थयामीत्यर्थ । किं पुन' प्रार्थयामि । उच्यते । इन्द्रम् । कीदृशमिन्द्रम् । उच्यते । गायत्रवेपसम् । गायत्रं स्तोत्रम् । तस्य वेपसं कर्मभूतम् । स्तुत्यमित्यर्थ । त्वं काममृतदोग्ध्रीं प्रार्थयसि । उच्यते । धेनुं अचिरप्रसूता गा इत्यर्थ । कीदृशीं धेनुम् । उच्यते । सुदुघा सुदोहनाम् । न केवलममृतदोग्ध्रीं धेनुं प्रार्थयामि ।

किं तर्हि। अन्यामिषं उरुधारा बहुधारामित्यर्थ । कीदृशं पुनरिन्द्रं प्रार्थयामि । उच्यते । अरंकृतं सर्वदा विभूषितमित्यर्थः ॥

मेधातिथि. । मेधातिथिः अनया धेनुरूपेण वृष्टिरूपेण च इन्द्रं निरूपयन् स्तौति । आहुवे अभिष्टौमि । तु क्षिप्रम् । अद्य अस्मिन् अहनि । सबर्दुघाम् । सबरभृतम् । तस्य दोग्ध्रीम् । गायत्रवेपसं गायत्रं स्तुत्यं वेपः कर्म यस्य तम् । इन्द्र धेनुं सुदुघा दोग्धु सुशकाम् । अन्या व्यतिरिक्ता प्रसिद्धायाः धेनोः । इषं वृष्टिम् । उरुधारा बहुधाराम् । अरंकृतं पर्याप्तकारिणम् ॥ (३)

**न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीडवः ।**
**यच्छिक्षसि स्तुवते मावते वसु न किष्टदा मिनाति ते ॥**

नोधा इन्द्रमाह । नेत्ययं प्रतिषेधो वरन्ते इत्याख्यातेन सम्बन्धयितव्य· । त्वा त्वा हे इन्द्र । पुरस्ताच्च यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्य· । तद् बृहन्त· महान्तोऽपि अद्रय· पर्वता । वीडव· दृढा अपि त्वा न वरन्ते । शुद्धोऽप्ययं वृणोति आवरणार्थो द्रष्टव्य· । न आवृणन्ति । प्रभूतत्वात्त आवरीतुं शक्नुवन्तीत्यर्थ । किं पुनस्तत् । उच्यते । यच्छिक्षसि ददासि । स्तुवते स्तोत्रकर्म साधयते । मावते मत्सदृशाय । वसु धनम् । नकि· न कश्चित् । तद्धनं त्वया दत्तमामिनाति आभिमुख्येन हिनस्तीत्यर्थ । ते तव । प्रसादेनेति वाक्यशेष ॥

नोधाः । न त्वा त्वा प्रवान्तं वरन्ते वारयेयुः । बृहन्तः अद्रयः पर्वताः । वीडवः दृढाः हे इन्द्र । किंच यत् यदा शिक्षसि । शिक्षतिः दानकर्मा । दित्ससि । स्तुवते मावते मत्सदृशाय । वसु धनम् । तत् तदा नकिः आमिनाति न हि बाधते न वारयति कश्चन ते त्वाम् ॥ (४)

क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।
अयं यः पुरो विभिनत्योजसा मन्दानः शिप्रयन्धसः ॥

मेध्यातिथिरिन्द्रमाह । क । ईमिति एनं इत्येतस्यार्थे द्रष्टव्यम् । एनं इन्द्रं वेद जानाति । स्तोतुमिति वाक्यशेष । एतदुक्तं भवति । मत्तोऽन्यो यजमान. क. इन्द्रं स्तोतुं जानाति । न कश्चिज्जानातीत्यर्थः । सुते । सप्तम्येकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । सुतं अभिषुतं सोमम् । सचा मरुद्भि· सह पिबन्तम् । कत् । प्रथमाया अयमदादेशः । को वा अस्मै इन्द्राय मत्तोऽन्यः वय हविर्लक्षणमन्नम् । दधे ददातीत्यर्थः । यः कतम इन्द्रः । उच्यते । अयं य· पुरः असुरपुर. । असुरदुर्गाणीत्यर्थ· । विभिनत्ति विविधं भिनत्ति । ओजसा स्वेन बलेन । मन्दानः । मद तृप्तावित्यस्येदं रूपम् । तृप्यन्नित्यर्थः । शिप्री । शिप्रे हनू नासिके वा । तद्वान् शिप्री । कस्य पुनर्मन्दानः । उच्यते । अन्धसः हविर्लक्षणस्यान्नस्येत्यर्थः ॥

मेध्यातिथिः । को वेद को वेत्ति । ईं एनमिन्द्रम् । सुते सोमे सति । सचा सह ऋत्विग्भिः । सोमं पिबन्तम् । कत् किं वयः आयुः इन्द्रो दधे धारयति इति च कः वेद । नित्यमेव यौवनं अस्येति न कश्चिद्वेद इति । अयं इन्द्रः पुरः नगरीः । विभिनत्ति व्यभिनत । ओजसा बलेन । यः इन्द्रः मन्दानः हृष्यन् । अन्धसः सोमेन । शिप्री सुहनुः । तं कः वेद ॥ (५)

यदिन्द्र शासो अव्रतं च्यावया सदसस्परि ।
अस्माकमंशुं मघवन् पुरुस्पृहं वसव्ये अधि बर्हय ॥

वामदेवस्यार्षम् । यस्मादिन्द्र शास· शासयितः । अव्रतं व्रतरहितं यज्ञे अप्रवृत्तम् । च्यावय । सदसस्परि सदसः सकाशात् । अस्माकं

अशु सोम ह मघवन् । पुरुस्पृह बहुभि स्पृहणीयम् । वसव्ये यजमाने यज्ञाना वामयितरि । अधि उपरि बर्हय सपादयेत्यर्थ ॥

वामदेव । यत् य त्व हे इन्द्र । शास शासिता । अव्रत अकर्माण अस्तोतार अयज्वान च । च्यावय च्यावये । सदस स्थानात् । परीति पञ्चम्यर्थानुवादक । स त्वमिति शेष । हे मघवन अस्माक वसव्ये वास्तुनि यज्ञगृहे । अशु सामम् । अशित श सुख करातीति अशु । पुरुस्पृह बहुभि स्पृहणीयम् । बर्हय बृहय । पिब इत्यर्थ । अधीति सप्तम्यर्थानुवादक ॥ (६)

त्वष्टा नो दैव्य वच पर्जन्यो ब्रह्मणस्पति' ।
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टर त्रामण वचः ॥

तौरश्रवस आर्षम् । त्वष्टा न अस्मभ्य दैव्य दधाना भवम् । वच वाक्यम् । पर्जन्य ब्रह्मणस्पति बृहस्पति पुत्रै भ्रातृभि अदिति । नु इति पदपूरण । पातु रक्षतु । न अस्मान् । दुष्टर त्रामणम् । द्वितीयैक वचने द्वे पञ्चम्येकवचनस्य स्थान द्रष्टव्य । दुष्टरात् त्रामणात् च वचस सकाशाद्रक्षत्वित्यर्थ ॥

तौरश्रवा । त्वष्टा देव । न अस्माकम् । वच स्तुतिरूपम् । दैव्य देवेभ्यो योग्यम् । पातु रक्षतु । प्रत्येकमभिसम्बन्धात् पात्वित्येकवचनम् । पर्जन्यश्च अस्मदीय वच पातु । ब्रह्मणस्पति बृहस्पतिश्च । अदितिर्देवमाता । पुत्रै आदित्यै भ्रातृभि प्रजापतिसृष्टै देवैश्च सह । नु अद्य पातु । न वच इत्यवचभेदात् पुनरुक्ति । दुष्टरमहिंस्य रक्ष प्रभृतिभि । त्रामण रक्षासाधनम् । इति वचसा विशेषणे । रक्षण फलप्रदानम् ॥ (७)

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दान देवस्य पृच्यते ॥

वालखिल्यानामार्षम्। चनशब्द अपिशब्दस्यार्थे। कदाचिदपि। स्तरीरसि। न स्तरी पयः ददौ। अत स्तरीरिति अभागा उच्यते। यादृशी स्तरीरभागा तादृशं त्वां हे इन्द्र कदाचिदपि न अभिगवतीत्यर्थ। किं तर्हि सश्चसि। यद्यपि सश्चतिर्गतिकर्मसु पठित· तथापि दाशुषे इति संप्रदानश्रुतेर्दानार्थो द्रष्टव्य। ददासि। कस्मै। उच्यते। दाशुषे यजमानाय। किंच उपोप। पादपूरणार्थं द्विर्वचनम्। उपेत्ययं पृच्यते इत्याख्यातेन सम्बन्धयितव्यः। इत् नु इति द्वावपि पदपूरणौ। हे मघवन् धनवन्। भूयः बहुतरम्। इत् नु इति द्वावपि पादपूरणौ। ते तव दानम्। कीदृशस्य तव। उच्यते। देवस्य दानादिगुणयुक्तस्य। उपपृच्यते। उपेत्य भवति। यावत्पूर्वदानं नैव क्षीयते तावदेव ददासीत्यर्थ· ॥

वालखिल्याः। कदाच कदाचिदपि न स्तरीरसि। स्तरीरिति निवृत्तप्रसवा गौः। तन्न भवसि। धुक्षसे एव सदा कामानिति। न सश्चसि न सज्यसे। दाशुषे यजमानाय। धनानि प्रयच्छन् हे इन्द्र। उपोप इति द्विरुक्तिः पादपूरणार्थः। प्रसमुपोदः पादपूरणे (पा. ८. १. ६) इति। उपपृच्यते न वियुज्यते। इत् एव। नुः पूरणः। हे मघवन् देवस्य ते तव दानम्। भूयः इत् भूयोभूय एव उपपृच्यते ॥ (८)

युक्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः।
अर्वाचीनो मघवन् सोमपीतय उग्र ऋष्वेभिरा गहि ॥

मेधातिथिरिन्द्रमाह। युङ्क्ष्व। शुद्धोऽप्ययं युञ्जतिर्निपूर्वार्थे द्रष्टव्यः। नियुङ्क्ष्व। वृत्रहन्तम। वृत्रः शत्रुः मेघो वा। तस्य हन्ता वृत्रहा। अतिशयेन वृत्रहा वृत्रहन्तमः। तस्य सम्बोधनं हे वृत्रहन्तम। शत्रोर्मेघस्य वा अतिशयेन हन्तरित्यर्थः। केन पुनर्नियुङ्क्ष्व। उच्यते। हरी यावात्मीयौ।

च । सामर्थ्यात् स्वरथे । त्व इन्द्र नियुङ्क्ष्व परावत दूरात् स्वर्गाख्यात् स्थानादित्यर्थ । अर्वाचीन अस्मदभिमुख । हे मघवन् सोमपीतय सोम पानार्थम् । उग्र । प्रथमैकवचनान्तमेतत् । प्रत्यक्षकृतश्च मन्त्र युङ्क्ष्वेति मध्यमपुरुषयोगात् वृत्रहन्तम इति च सम्बोधनश्रुते । अतो यत्तच्छब्दा वध्याहृत्यैकवाक्यता नेया । य त्व उग्र अप्रसह्य स आगहि आगच्छ । ऋष्वेभि महद्भि । प्रयाणकैरिति वाक्यशेष । शीघ्रमागच्छेत्यर्थ ॥

मेधातिथि । युङ्क्ष्व योजय । हीति पूरण । हे वृत्रहन्तम हरी युङ्क्ष्व रथे । हे इन्द्र परावत दूरात् गन्तुम् । युक्त्वा च हरी ऋष्वेभि दर्शनीयै तै हरिभि । द्वयोरपि हर्यो विभूतिभेदात् बहुत्वमपि भवति । अर्वाचीन अस्मदभिमुख । आगहि आगच्छ । हे मघवन् सोमपीतये उग्र त्वम् ॥ (९)

त्वामिदा ह्यो नरोऽपीप्यन् वज्रिन् भूर्णयः ।
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥

नृमेधस आर्षम् । परस्तात्तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्य । य त्वा इदा अद्य । ह्यश्च । सर्वकालमित्यर्थ । नर ऋत्विग्लक्षणा मनुष्या । अपीप्यन् । ओप्यायी वृद्धौ इत्यस्येद रूपम् । वर्धयन्तीत्यर्थ । वज्रिन् । वज्र आयुधविशेष । स यस्यास्ति स वज्री । तस्य सम्बोधन हे वज्रिन् । वज्रवन्नित्यर्थ । कीदृशा पुनर्मनुष्या त्वा वर्धयन्ति । उच्यते । भूर्णय तस्मिन्नेव वेदिप्रदेशे कर्मकरणार्थं भ्रमणशीला । स त्व हे इन्द्र स्तोमवाहस । स्तोमा य वहन्ति त्वा प्रतिपादयन्ति उच्चारयन्ति ते स्तोमवाहस । स्तोतार इत्यर्थ । इह यज्ञे श्रुधि शृण्वित्यर्थ । सामर्थ्यात्तमेव स्तोमम् । श्रुत्वा च उप स्वसरम् । उप समीपे । स्वसर स्वकीय गृहम् । आगहि

आगच्छेत्यर्थः । अथवा स्वसरशब्देन पन्थाः अहर्वा उच्यते । आत्मीयं पन्थानं स्तुत्यहर्वा आगच्छ ॥

नृमेधाः । त्वा इदा इदानीं अपीप्यन् इति विपरिणतमत्र सम्बध्यते । आप्याययन्ति स्तुवन्ति । ह्यः पूर्वेद्युश्चापीप्यन् आप्यायितवन्तः । नरः स्तोतारः हे वज्रिन् । भूर्णयः बिभृतः हवींषि भृताः पूर्णाः सोमेनेति वा । स त्वं हे इन्द्र स्तोमवाहसः स्तोमं वहन्तः । स्तोतुस्तेषामनुपश्रुधि उपशृणु । इह यज्ञे हे इन्द्र । उपागहि उपागच्छ । स्वसरं गृहं एषाम् ॥ (१०)

चतुर्थे प्रथमा दशती

---

प्रत्यु अदर्श्यायत्युच्छन्ती दुहिता दिवः ।
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥

उषस्येदमृक् । वसिष्ठस्यार्षम् । प्रति अदर्शि प्रतिदृश्यते उषाः । उकारः पदपूरणः । आयती आगच्छन्ती । उच्छन्ती स्वेन ज्योतिषा विविधमाच्छादयन्तीत्यर्थः । दुहिता दिवः । द्युलोके जायमानत्वात् दिवः दुहिता । अपो । उकारः पदपूरणः । अपशब्दस्तु वृणुते इत्याख्यानेन सम्बद्ध्यते । अपवृणुते अपवारयति । अपगमयतीत्यर्थः । किं पुनरपगमयति । मही महत् तमः । महदन्धकारमित्यर्थः । अपनीय चान्धकारं चक्षुषा सर्वलोकस्य दर्शनाय ज्योतिः कृणोति प्रकाशं करोतीत्यर्थः । कीदृशी उषा एतत् करोति । उच्यते । सूनरी । शोभना नराः यस्याः स्तावकत्वेन भवन्ति सा सुनरी । सुनर्येव सूनरी । शोभनैः स्तावकैर्नरैः सम्बद्धेत्यर्थः ॥

द्यो वसिष्ठः । प्रत्यदर्शि प्रतिदृश्यते । उ इति पूरणः । आयती आगच्छन्ती उषाः । व्युच्छन्ती विवासयन्ती तमासि । दिवः अन्तरिक्षस्य दुहिता । मही । अप उ अपो । अपोवृणुते तमः । चक्षुषा तेजसा । ज्योतिः स्वप्रकाशम् । कृणोति करोति । सूनरी । शोभना नराः स्तोतारः यस्या सा सूनरी । सु सुष्ठु नयति प्राणिन इति वा सूनरी ॥ (१)

इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशं विशं हि गच्छथः ॥

अश्विदेवत्या । वसिष्ठस्यार्षम् । इमा । उ इति पदपूरण । वा युवाम् । दिविष्टय स्वर्गफला इष्टय इत्यर्थ । उस्रा । उस्रेति गोनाम । लुप्तोपमं चेदं द्रष्टव्यम् । उस्रा इव । यथा गाव स्वान् वत्सकान् हवन्ते आह्वयन्ति तद्वदाह्वयन्ति युवा हे अश्विनौ । न केवलं इष्टय एव आह्वयन्ति । किं तर्हि । मम वसिष्ठस्यान्तरात्मा वा अह्वे आह्वयति । उत्तमपुरुषैकवचनमिद प्रथमपुरुषैकवचनस्य स्थाने द्रष्टव्यम् । आह्वयति । अवसे पालनार्थ हे शचीवसू । शचीति कर्मनाम । वस्वित्यपि धननाम । यागाख्यं कर्म धन ययोस्तौ शचीवसू । तयो सम्बोधनं हे शचीवसू । कर्मधनौ । कस्मात् पुनर्मदीयोऽन्तरात्मा आह्वयति । उच्यते । विशं विशम् । हिशब्दो हेतौ । यस्मात्सर्वमनुष्यान् प्रति युवा गच्छथः तस्मादाह्वयतीत्यर्थ ॥

इमा दिविष्टय दिवमिच्छन्त्यः प्रजा । उस्रा उस्रौ वासकौ । वा युवाम् । हवन्ते हे अश्विना अश्विनौ । अयं अह च वा युवाम् । अह्वे आह्वयामि । अवसे तर्पयितुम् । हे शचीवसू प्रज्ञया व्याप्तौ । विश विश हि सर्वा हि विश प्रजा स्तोत्रीं गच्छथ ॥ (२)

कुष्ठः को वामश्विना तपानो देवा मर्त्यः ।
घ्नता वामश्नया क्षपमाणोंऽशुनेत्थमु आद्वन्यथा ॥

आश्विनीयम् । पौर आत्रेय । तस्यार्षम् । कु पृथिवी । तस्या स्थित कुस्थ । क वा युवा हे अश्विनौ । तपान तापयमान । हे देवौ मर्त्य मनुष्य । घ्नता वा अश्नया क्षुधा क्षिपमाण । अंशुना सोमेन इत्थम् । उ इति पदपूरण । आत् उ अन्यथा ॥

पौर आत्रेयः । अश्विनो स्तूयमानयोः आगमनविलम्बनात् विचिकित्सेऽयम् । कुष्टः कुत्रस्थो युवाम् । को मर्त्यः वा युवा क्षपमाणः भवति । अस्मान् प्रहापयन् भवति । अश्विना अश्विनौ । तपानः तप आचरन् । हे देवा देवौ । घ्नता घ्नतौ क्षुत्प्रभृतीनि । वामिति पुनरक्तिर्विशेषणभेदात् । अंशुना सोमेन क्षपमाणः भवति । अश्नया । अश्नशब्दाद्द्वितीयाद्विवचनस्य यादेशः । अश्नौ व्यापकौ युवाम् । अश्नोतेरश्नौ । तस्य भ्राता मध्यमोऽस्त्यश्नः इति हि निगमः । अथवा अश्नया अश्नया फलेच्छयेति । इत्थ उ इत्थमेवेदं उपपद्यते । केनचित् क्षपमाणत्वादेवानागमनं युवयोः । आदिति अथेत्यर्थे वर्तते । उ इति विकल्पे । आदु अथ अन्यथास्माकं परिचरणहान्येति विचिकित्सेति ॥ (३)

अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु ।
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥

आश्विनीयम् । प्रस्कण्वस्यार्षम् । तमश्विनेति परस्तात्तच्छब्दश्रुतेः पुरस्ताद्यच्छब्दोऽध्याहार्यः । अयं वाम् । तादर्थ्ये एषा चतुर्थी । युवयोरर्थाय । मधुमत्तमः अतिशयेन मधुस्वादुः य. अभिषुतः सोमः । क पुनर्योऽभिषुतः । उच्यते । दिविष्टिषु । दिवं यामिर्गम्यते ता दिविष्टय. स्वर्गफलाः ज्योतिष्टो

मायाः । यागसंयोगसंपत्तिरित्यर्थः । तं अश्विनौ पिबतम् । तिरोअह्न्यं तृतीयसवनिकम् । अथवा तिर इति प्राप्तनाम । अहनि भव अह्न्यः । प्राप्ते यागाहनि भव तिरोअह्न्य । तं तिरोअह्न्यम् । प्राप्तयागाहनि भवमित्यर्थः । पीत्वा च धत्तं दत्तम् । रत्नानि धनानि । दाशुषे यजमानाय ॥

प्रस्कण्वः । अयं सोमः । मधुमत्तमः रसवत्तमः । वा युवयोः अर्थे । सुतः अभिषुतः । दिविष्टिषु यज्ञेषु । तं पिबतं हे अश्विनौ । तिरोअह्न्यम् । तिरः सतः इति प्राप्तस्य नामनी । प्राप्ते सुत्याहे भवन्तम् । पीत्वा धत्तं प्रयच्छतम् । रत्नानि दाशुषे यजमानाय ॥ (४)

आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या ।
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥

प्रगाथस्यार्षम् । आ इत्ययमुपसर्गः व्यत्ययेन मा इत्येतस्य स्थाने द्रष्टव्यः चुक्रुधमित्यास्यातेन सम्बन्धयितव्यः । त्वा त्वाम् । सोमस्य गल्दया गालनेन क्षरणेन । क्षालनेनेत्यर्थः । सदा याचन् अहं ज्या गिरा स्तुत्या च । भूर्णिं मृगं न । यथा कश्चित् भूर्णिं भ्रमणशीलं मृगं सिंहं व्याघ्रं वा क्रोधयति तद्वन्मा चुक्रुधम् । सवनेषु यज्ञेषु । कः ईशानं ईश्वरमिन्द्रं न याचिषत् न याचिष्यति ॥

प्रगाथः । आयाचन् अभियाचमानः । त्वा त्वाम् । अहं सोमस्य गल्दया । गालनेन इति यास्कः (नि. ६. २४) । गालनं प्रकाशनम् । प्रकाशेन । प्रदानेन इत्यर्थः । सदा याचन्निति सम्बन्धः । यद्वा व्यवहितमपि उत्तरार्धेऽपि सम्बध्यते सदा भूर्णिमिति । ज्या स्तुत्या । अहं गिरा (ऋ. वे. ८. १, २०) इति च बह्वृचाः । गल्दया ज्या न चुक्रुधं न क्रोधयेयम् । यद्यपि ते क्रोधहेतुन् करोमि तथापि सोमप्रदानेन याचमानाय मे न क्रुध्ये-

दिति। मूर्गि भर्तारम्। मृगं न। नेत्युपमार्थे। मृगं सिंहमिव भीमं त्वाम्। सवनेषु यज्ञेषु। सोमस्य गल्दया याचन् न त्वा चुक्रुध इति सम्बध्यते। कः पुमान् ईशानं स्वामिनम्। न याचिषत् न याचेत। स्वामिन हि याचन्ते पुरुषाः। अतोऽहं त्वा याचमानः सोमेन स्तुतिभिश्चोपगतः क्रोधं न करवाणि इत्यर्थः॥ (५)

अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति।
उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा॥

देवातिथिरध्वर्युमाह। हे अध्वर्यो द्रावय आहवनीयप्रदेशायेत्यर्थः। त्वम्। कस्मात् पुनः द्रावयामि। उच्यते। सोममिन्द्रः पिपासति। सोममिन्द्रः पातुमिच्छतीत्यर्थः। उपो उप उ। उकारः पदपूरणः। उपेत्ययमुपसर्गः व्यत्ययेन नीत्येतस्य स्थाने द्रष्टव्यः युयुजे इत्याख्यानेन सम्बन्धयितव्यः। नूनं निश्चयेन युयुजे। नियुङ्क्ते इत्यर्थः। वृषणौ रेतसः सेक्तारौ। बलवन्तावित्यर्थः। तौ हरी अश्वौ। युक्त्वा च आजगाम। चकारः पदपूरणः। आगच्छति। वृत्रहा मेघस्य हन्ता॥

देवातिथिः। हे अध्वर्यो द्रावय त्वरय त्वं सर्वानृत्विजः। यद्वा द्रावय क्षारय सोमं अंशुभ्यः। सोमं इन्द्रः पिपासति। उप उ उपो युयुजे रथे। नूनं संप्रति। वृषणा वृषणौ युवानौ वर्षितारौ वा हरी। आजगाम च वृत्रहा॥ (६)

अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः।
पुरूवसुर्हि मघवन् बभूविथ भरेभरे च हव्यः॥

वसिष्ठस्यार्षम्। अभीत्ययमुपसर्गः आभरेत्याख्यातेन सम्बन्धयितव्यः। ततः इत्येतदपि कनीयस इत्यनेन सम्बन्धयितव्यः। कनीयसः

सत ल्घुतरस्य सतो मम वसिष्ठस्य तत् आ आभिमुख्येन भर आनय। देहीत्यर्थ । हे इन्द्र । तदाभरेति पुरस्तात् तच्छब्दश्रुतर्यच्छब्दोऽध्याहर्तव्य । ज्याय अतिशयेन प्रशस्ततर तदाभरेत्यर्थ । कस्मात् पुनराभरामि । उच्यते । पुरूवसुर्हि । हिशब्दो यस्मादर्थे । यस्मात् त्व पुरूवसुर्बहुधन । बभूविथ भवसि तस्मादित्यर्थ । हे मघवन् धनवन् । यस्माच्च भरे भरे सङ्ग्रामे सङ्ग्राम । क्षेमार्थं हव्य आह्वातव्य । एतदुक्त भवति । यस्मात् ईश्वर प्रभुश्च तस्मादाभरेत्यर्थ ॥

द्वयोर्वसिष्ठ । अस्याभर तत् त्वया देयम्। ज्याय. प्रशस्यतरं धनम्। कनीयस सत मम हे इन्द्र। सम्बुध्यन्त वा हे ज्याय इति। आमन्त्रित पूर्वमविद्यमानवत् (पा. ८ १. ७२) इति इन्द्रपदस्य पादादौ विद्यमानस्याविद्यमानत्वाभावात् ज्याय इत्यस्य सर्वानुदात्तत्वाभाव । नकारस्य रुत्व व्यत्ययात्। पुरूवसु॰ बहुवसु॰ बहुधन । हि बभूविथ भवसि त्व हे मघवन्। भरे भरे सर्वेषु सङ्ग्रामेषु यज्ञेषु वा। हव्य आह्वातव्यश्चासि ॥ (७)

यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दिधिषे रदावसो न पापत्वाय रंसिषम् ॥

वसिष्ठस्यार्षम्। यच्छब्द यदिशब्दस्यार्थे। यदि इन्द्र यावत यत्परिमाणस्य धनस्य त्व एतावत्। षष्ठ्या अत्र लुक। एतावत । एतत्परिमाणस्येत्यर्थ । अह वसिष्ठ । ईशीय स्वामी स्या इत्यर्थ । तत स्तोतार स्तुतीनामुच्चारयितार होतारम्। स्तोतृग्रहण च प्रदर्शनार्थम्। सर्वानृत्विज आत्मन यागनिवृत्त्यर्थम्। इच्छब्द पदपूरण । दधिषे धारयेयमित्यर्थ । हे रदावसो । वस्विति धननाम । रा दाने । दानसम्पन्नवसो इत्यर्थ । किंच न पापत्वाय पापभयाय । पापात्मने इत्यर्थ । रंसिष दधामीत्यर्थ ॥

यत् यदि । अह एतावद्धन ईशाय एतावता धनस्य स्वामी स्याम् । कियत । यावत त्व इशिषे हे इन्द्र । तत अह स्तोतार ह्यमु ननम् । दधिष धारयय धनदानेन । इत् इति एवयस्यार्थे । वाक्यान्त चास्यान्वय । हे रदावसो । रदिरत्र दानकर्मा । रदति वसूनाति रदावसु । न पापत्वाय क्षीणत्वाय । रसिषम् । रातरिद रूपम् । दद्यामिति । न पापत्वाय राशाय (ऋ व ७ ३२ १७) इति बह्वृचा ॥ (८)

त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥

नृमधस आर्षम् । त्व हे इन्द्र प्रतूर्तिषु । प्रकर्षेण तूर्यन्ते हिंस्यन्ते यासु वेलासु योद्धारस्ता प्रतूर्तयो हिंसावेला । तासु प्रतूर्तिषु । हिंसावेला स्वित्यर्थ । अभीत्ययमुपसर्ग असीत्यास्यातेन सम्बध्यते । अभ्यसि अभि भवसीत्यर्थ । विश्वा विश्वान् सर्वान् । स्पृध इति सङ्ग्रामनाम । स्पृध कुर्वन्ति स्पृधयन्ति । क्विप । स्पृधान स्पृध । सङ्ग्रामकारिणी मना इत्यर्थ । किंच अशस्तिहा अशस्तिनृणा हन्ता । जनिता वृष्टिप्रदानद्वारेण सर्वस्य जनिता । वृत्रतूरसि वृत्रस्य शत्रो तूर्विता हन्ता असि भवसीत्यर्थ । किंच त्व तूर्य हिस इत्यर्थ । किं पुनर्हिंसामि । उच्यते । तरुष्यत । तरुष्य तिर्वधकर्मा । य तरुषितुमिच्छन्ति तरुष्यन्ति तान् तरुष्यत । य त्वा हन्तुमिच्छन्ति तान् प्रहिंमेत्यर्थ ॥

तृमेवा । त्व हे इन्द्र प्रतूर्तिषु सग्रामेषु । अभ्यसि अभिभवसि । विश्व स्पृध स्पर्धमाना सेना । अशस्तिहा शत्रूणा हन्ता । न शमन्तीत्य-शस्तय । य जनिता विश्वस्य । यश्च वृत्रतू वृत्रस्य तरिता गन्ता असि । त्व तूर्य वाधस्व । तरुष्यत बाधमानान् शत्रून् ॥ (९)

प्र यो रिरिक्ष ओजसा दिव सदोभ्यस्परि ।
न त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ ॥

नोधस आर्षम् । प्रेत्ययमुपसर्ग रिरक्ष इत्याख्यातेन सम्बन्धयितव्य । हीति पदपूरण । यस्त्वं प्रकर्षेण रिरिक्षे । रुष रिष हिंसाया इत्यस्य मध्यमपुरुषैकवचने एतद्रूपम् । यस्त्व प्रकर्षेण हिनस्तीत्यर्थ । कान् सामर्थ्याच्छत्रून् । ओजसा स्वेन बलेन । दिव सदोभ्य दिव अवयवभूतानि सदस्स्थानानि । तेभ्य । पञ्चमीनिर्देशात् आगत्येति वाक्यशेष । परीति पदपूरण । पुरस्तायच्छब्दश्रुते तच्छब्दोऽध्याहर्तव्य । न तं त्वा विव्याच न व्याप्नोति माहात्म्येन । रजो लोक इत्यर्थ । हे इन्द्र । कतम पुन रजो न व्याप्नोति । उच्यते । पार्थिवम् । यत एवमतो ब्रवीमि । अति विश्व अतीत्य सर्वं ववक्षिथ महान् भवसीत्यर्थ ॥

नोधा. । प्ररिरिक्षे प्रकर्षेण अतिरिच्यसे यस्त्वमोजसा । दिवो लोकस्य सम्बन्धिभ्य. सदोभ्य स्थानेभ्य । परीति पञ्चम्यर्थानुवादक । न विव्याच न व्याप्नोति । त्वा त्वाम् । रज लोकः । पार्थिव पृथिवीमयं हे इन्द्र । *अति अत्यर्थं ववक्षिथ वहसि विश्व जगत् ॥* (१०)

चतुर्थे द्वितीया दशती

---

असावि देवं गोऋजीकमन्धो यस्मिन्निन्द्रो जनुषेमुवोच ।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा नस्तोममन्धसो मदेषु ॥

वसिष्ठस्यार्षम् । असावि अभिषुतवानहं वसिष्ठ. । देवम् । द्वितीयैक-वचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । देवस्य इन्द्रस्यार्थाय । किं पुन· अभिषुतवान् । उच्यते । गोऋजीकम् । गोशब्देनात्र गोविकारो गृह्यते । दधिक्षीरादिकं ऋजीकं मिश्रणं यस्य तत् गोऋजीकम् । अथवा ताद्धितेन निगमा भवन्तीत्येवं गोविकार पयआदिरुच्यते । स आर्जितो येन तत् गोऋजीकम् । गोविकारै· पयआदिभिर्मिश्रितमित्यर्थ· । अन्धः अन्नं सोमाख्यम् । अभिषुत्य च अस्मिन् इन्द्रो जनुषा । तृतीयैकवचनमिदं पञ्चम्येकवचनस्य स्थाने द्रष्टव्यम् । पञ्चमीनिर्देशाच्च प्रभृतीति वाक्यशेषः । जन्मनः प्रभृति । ईं इति पदपूरणः । उवाच उक्तवान् । उच्चारितवा-नित्यर्थ· । किम् । सामर्थ्यात् स्तुती । ताभिश्च स्तुतिभिः बोधामसि । बोधिरयमन्तर्णीतण्यर्थो द्रष्टव्यः ; बोधयामस्त्वां हे हर्यश्व । हरिद्वर्णौ अश्वौ यस्य स हर्यश्वः । तस्य संबोधनं हे हर्यश्व । यज्ञैः । तृतीयाबहुवचनमिदं सप्तमीबहुवचनस्य स्थाने द्रष्टव्यम् । यज्ञेषु । बोध बुद्ध्यस्व । नः अस्माकं स्वभूतं स्तोमम् । अन्धसः सोमलक्षणस्यान्नस्य । मदेषु । सप्तमीनिर्देशात् प्राप्तेष्विति वाक्यशेष· । सोमेन अन्नभूतेन अन्नवानित्यर्थ· ॥

असावि देवमेकोनत्रिंशत्तासु प्र वो महे ।
त्रिपादोक्ता विराडन्यास्त्रिष्टुभोऽष्टौ च विंशतिः ।
ऐन्द्रीषु तासु तार्क्ष्यस्य हरीन्द्रापर्वतेत्वृचि ॥

दृयोर्वसिष्ठः । असावि अभिषुतम् । देवं दीप्तम् । गोऋजीकं गोभिः संस्कृतं गव्येन मिश्रितम् । अन्धः अन्नं सोमाख्यम् । नि उवोच नितरां सङ्गतो भवति । अस्मिन् सुते सोमे इन्द्रः । उच समवाये । ईं एनं जनुषा । संभवत एव । ईं अयं इन्द्रः । अथ प्रत्यक्षस्तुतिः । बोधामसि बोधामः । त्वां हे हर्यश्व । यज्ञैः हविर्भिः दत्तैः । बोध बोधस्व । नः अस्माकम् । स्तोमं स्तोत्रम् । अन्धसः अन्नस्य सोमस्य मदेषु सत्सु ॥ (१)

योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरूहूत प्र याहि ।
असो यथा नोऽविता वृधश्चिद्दो वसूनि ममदश्च सोमैः ॥

वसिष्ठस्यार्षम् । योनि वेद्याख्यं स्थानम् । ते तव हे इन्द्र सदने । अकारि कृतम् । केन । उच्यते । नृभि अस्मदीयै ऋत्विग्भि । तं यज्ञ पुरुहूत बहुभि यजमानै· आहूत । प्रयाहि आयाहीत्यर्थ । असो यथा । अस इत्येतदाख्यातं अविता इत्यस्मात परं द्रष्टव्यम् । यथा येन प्रकारेण न । षष्ठीबहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम् । मम वसिष्ठस्य । अविता पालयिता । असि भवसीत्यर्थ । वृधश्चित् । चिच्छब्द चशब्दस्य स्थाने । वर्धयिता च यथा भवसि । यथेति वचनात्तथेत्यध्याहार्यम् । तथा तेन प्रकारेण । दद वसूनि धनानि । दत्वा च ममद तृप्यस्व सोमै ॥

योनि स्थानम् । ते तव । सदने उपवेशनार्थम् । अकारि हे इन्द्र । त यानि आ अभिप्रयाहि । नृभि. नेतृभिः मरुद्भि सह । पुरुहूत बहुभिराहूत । असः इति पञ्चमलकारान्तम् । स्या· । यथा नः अस्माकम् । अविता रक्षिता । वृध वर्धन चित् च । दद. देहि । वसूनि अस्मभ्यम् । ममद· मादयस्व सोमै. ॥ (२)

अदर्दरुत्समसृजो वि खानि त्वमर्णवान् बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजद्धारा अव यद्दानवान् हन् ॥

गृत्समदो नाम ऋषि । तस्येदमार्षम् । अदर्द विदारयति । उत्स मेघम् । विदार्य असृजो वि । छन्दसि परेऽपि (पा. १. ४. ८१) इत्येवमिह विशब्द पर प्रयुक्त । स पूर्वो द्रष्टव्य । व्यसृज विसृजसि । उद्घाटयसीत्यर्थ । कानि पुनरुद्घाटयामि । उच्यते । खानि आकाशानि

उदकानां गमनविलानीत्यर्थः । उद्घाव्य च त्वमर्णवान् । अर्ण उदकम् । तेन तद्वान् अर्णवान् । प्रथमैकवचनमिदं द्वितीयाबहुवचनस्य स्थाने द्रष्टव्यम् । अर्णस्वतः माध्यमिकान् उदकसङ्घातान् । बद्बधानान् तेनैव मेघेन निर्गमन-द्वारनिरोधनं कुर्वता बाध्यमानान् । अरम्णा. । रम्णातिः संयमनकर्मान्यत्र । इह विसर्जनकर्मा । विसर्जयसि । पातयसीत्यर्थः । महान्तं हे इन्द्र पर्वतं मेघं यद्विवः । नपुंसकलिङ्गमिदं पुंलिङ्गस्य स्थाने द्रष्टव्यम् । यत्त्वं पूर्वेष्वपि कालेषु विव. विवृतवान् असि । पुरस्ताद्यच्छब्दश्रुतेः तच्छब्दपूर्वकोऽयं द्रष्टव्यः । स इदानीमपि महान्तं मेघं विवृतं करोषीत्यर्थः । विवृत्य च ततो मेघात् सृजत् विसृजसि उदकस्य धारा· । न केवलं महतो मेघात् उदकस्य विसृजसि धाराः । किं तर्हि । दानवान् । प्रथमैकवचनमिदं द्वितीयैक-वचनस्य स्थाने द्रष्टव्यम् । दानवन्तम् । उदकस्य दातारमित्यर्थः । अवहन् नाशितवानित्यर्थः ॥

गृत्समदः । अदर्दः दारितवान् असि । त्वं उत्सं मेघम् । उत्स उत्स-रणाद्वा उत्सदनाद्वा उत्स्यन्दनात् वा उनत्तेर्वा इति यास्कः (नि. १०. ९) । व्यसृजः व्यवृणोः । अस्य मेघस्य खानि स्रोतांसि । त्वं अर्णवान् उदकवतः मेघान् बद्बधानान् वाध्यमानान् प्रतिबाध्यमानान् वृत्रेण । अरम्णाः संयमित-वान् असि । महान्तं पर्वतं पर्ववन्तं मेघं हे इन्द्र । यत् यदा विवः विवृतवान् असि । तदा सृजत् सृष्टवान् धारा· । यत् यदा दानवान् वृत्रादीन् अवहन् अवजयन्व तदा अदर्दरुत्सम ॥ (३)

सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तुविनृम्ण वाजम् ।
आ नो भर सुवितं यस्य कोना तना त्मना सह्याम त्वोताः ॥

पृथुर्वैन्यः । तस्येदमार्षम् । सुष्वाणासः सोममभिषुण्वन्त इत्यर्थः । हे इन्द्र स्तुमसि स्तुमः । त्वा त्वाम् । न केवलमभिषुण्वन्त एव

स्तुम॰ । किं तर्हि । सनिष्यन्तश्चित् । चिच्छब्द॰ चशब्दस्यार्थे । सनिष्यन्तश्च सम्भजमानश्च । संस्कुर्वन्तश्चेत्यर्थ. । हे तुविनृम्ण । नृम्णमिति धननाम । तुवीति बहुनाम । तुवि बहु नृम्णं धनं यस्य स तुविनृम्णः । तस्य सम्बोधनं हे तुविनृम्ण । बहुधन इत्यर्थ. । किं पुनः संस्कुर्वतः स्तुम । उच्यते । वाजं पुरोडाशादिलक्षणमित्यर्थ. । यत एवमतो ब्रवीमि । आ नो भर । आ इत्ययमुपसर्ग भर इत्याख्यातेन सम्बध्यते । भर इत्येतच्च हरते रूपम् । हृग्रहोर्भश्छन्दसि (वा. ८. २. ३२) इति हकारस्य भकार । आहर । आनय देहीत्यर्थ । न अस्मभ्यम् । किं पुन॰ आहरामि । उच्यते । सुवितं आत्मन. सकाशात् प्रेरितम् । पुत्रमित्यर्थ । कीदृशं पुत्रं आहरामि । उच्यते । यस्य स्वभूतेन तना धनेनात्मन । त्मना आत्मनैव । सह्याम अभिभवेम । किं पुनरभिभवेम । उच्यते । कोना । कुत्सिताश्च ते ऊनाश्च कोना । छान्दसत्वात् कुशब्दस्य काभाव । द्वितीयाबहुवचनस्य स्थाने छान्दसत्वात् आ इत्यादेश॰ । कोनान् कुत्सितान् ऊनान् च शत्रूनित्यर्थः । त्वोताः त्वया ऊताः रक्षिताः सन्तो वयमित्यर्थ ॥

पृथुर्वैन्यः । सुष्वाणासः । सुनोतेर्लिटः कानच् । अभिषुतवन्त॰ सोमं वयं हे इन्द्र । स्तुमसि स्तुम॰ त्वाम् । सनिष्यन्तः छप्स्यन्तः लिप्सन्तः । वाज अन्नम् । अथवा दास्यन्तो वाजं हविः । हे तुविनृम्ण बहुधन । आभर आहर । नः अस्मभ्यम् । सुवितं भद्रं धनम् । यस्य सम्बन्धिनो धनस्य कोना । कनेः कान्तिकर्मण इद रूपम् । पचाद्यच् । अकारस्य व्यत्ययात् ओकारः । प्रथमैकवचनस्याकारादेशः । यस्य धनमाच्छिद्य दातुं कामयसे तस्य सुवितं अस्मभ्यं आभर । तना । तनोतेस्तनयः । तनयेन । त्मना आत्मना । शत्रून् धनवतः सह्याम अभिभवेम । त्वोताः त्वया ऊताः रक्षिताः ॥ (४)

जगृह्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्म हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः ॥

सप्तगोरार्षम् । जगृह्म गृह्णीम गृह्णामि । ते तावक दक्षिण हे इन्द्र हस्तम् । त्वामाश्रिता वयमित्यर्थ । किमर्थं पुनराश्रिता । उच्यते । वसूयव धनकामा । धनमिच्छन्त इत्यर्थ । वसुपते । वसुपतिशब्द यद्यपि वसूना पति वसुपतिरित्येव व्युत्पाद्यते तथापि यथा प्रवीणशब्द प्रकृष्टो वीणायामित्येवमपि व्युत्पाद्यमानो न वीणागतमेव प्रकर्षं प्रतिपादयति । किं तर्हि सर्वगत तद्वद्वसुपतिशब्दोऽपि न वसुगतमेव आधिपत्य प्रतिपादयति । किं तर्हि सर्वगतमाधिपत्यमित्यर्थ । कस्य । उच्यम । वसूना धनानाम् । विद्म जानीम । हीति यस्मादर्थे । यस्मात्त्वा जानीम । हे शूर विक्रान्त । गोपतिं अधिपतिभूतम् । गोना गवाम् । तस्मादाश्रिता इत्यर्थ । यश्चैतदेव अतो ब्रूम । अस्मभ्य चित्र पूज्यम् । वृषण वर्षितृ । क्षीरादीना भोगाना क्षरितृ इत्यर्थ । रयिं गोलक्षण धनम् । दा देहि । बहुदोग्ध्रीर्गावो देहीत्यर्थ ॥

सप्तगु । जगृह्म इति गृह्णाते लिटि उत्तमपुरुषस्य बहुवचनस्य रूपम् । गृहीतवन्त वयम् ते तव । दक्षिण हस्त हे इन्द्र । वसूयव वसुकामा । हे वसूना वसुपते वसूना पते इत्यर्थ । विद्म हे शूर जानीम हि त्वा । गोना गवाम् । गोपतिं पतिम् । अस्मभ्य चित्र विचित्रम् । वृषण वर्षितार सर्वफलप्रसाधकम् । रयि धनम् । दा देहि ॥ (६)

इन्द्रं नरो नेमधिता हवन्ते यत् पार्या युनजते धियस्ताः ।
शूरो नृषाता श्रवसश्चकाम आ गोमति व्रजे भजा त्वं नः ॥

वसिष्ठस्यार्षम् । इन्द्र नर मनुष्या योद्धार । नेमधिता । नेमधितिरिति सङ्ग्रामनाम । तस्मात्परस्य सप्तम्येकवचनस्य सुपा सुलुक्

(पा ७ १ ३९) इत्यव टा आदेश । नेमधितौ । सङ्ग्रामे इत्यर्थ । हवन्त आह्वयन्तीत्यर्थ । कस्मात्पुनराह्वयन्ति । उच्यते । यत् यस्मादित्यर्थ । ता इति पुरस्तात्तच्छब्दश्रुते या इत्येतदध्याहार्यम् । या पार्या पालयितव्या प्राप्तव्या । धिय प्रज्ञा वा क्रिया वा । शत्रुहननार्थं ता युनजते । वहुवचनमिदमकवचनस्य स्थाने द्रष्टव्यम् । युङ्क्ते नियुङ्क्ते । उत्पादयन्ति इत्यर्थ । पुरस्ताद्यच्छब्दश्रुतस्तस्मादित्यध्याहार्यम् । तस्मादाह्वयन्तीत्यर्थ । किंच शूर विक्रान्त इन्द्र । नृपाता । नरो मनुष्या ऋत्विग्लक्षणा । ते सन्यन्ते सज्यन्ते यत्र स नृपातिर्यज्ञ । वन षण सभक्तौ इत्यस्यद रूपम् । तस्मात्तस्य सप्तम्येकवचनस्य डा आदेश । नृपाता नृपातौ । यज्ञ इत्यर्थ । श्रवस हविर्लक्षणस्यान्नस्य । षष्ठीनिर्देशात् एकदेशमिति वाक्यशेष । किंच गोमति व्रजे गोष्ठे । सप्तमीनिर्देशात् स्थित इति वाक्यशेष । भज सवस्व त्वम् । न अस्मान् । गोमति गोष्ठेऽप्यवस्थितोऽस्मभ्य बह्वीो गा देहीत्यर्थ ॥

वसिष्ठ । इन्द्र नर नेतार यज्ञाना सग्रामाणा वा । नेमधिता नेमधितौ सग्रामे यज्ञे वा । हवन्ते ह्वयन्ति । यत् यदा । पार्या पारप्राप्तिनिमित्त भूता । धिय कर्माणि । ता युनजते प्रयुञ्जते । शूर त्वम् । नृपाता नृसातौ नृणा सातौ लाभे । श्रवस अन्नस्य च कामे । काम्यमाने श्रवसीत्यर्थ । आभज भागिन कुरु । न अस्मान् । गोमति बहुगोयुक्ते । व्रजे गोष्ठे ॥ (६)

वय सुपर्णा उप सेदुरिन्द्र प्रियमेधा ऋषयो नाधमाना ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् ॥

गौरिवीतेरार्षम् । वय । लुप्तोपममेतत् । वय इव । शीघ्रगमनेन पक्षिसदृशा इत्यर्थ । क ते । आदित्यरश्मय । सुपर्णा सुपतना ।

सुगमना इत्यर्थ.। उपसेदुः उपसङ्गच्छन्ति। इन्द्रमीश्वरम्। आदित्य-मित्यर्थ। कीदृशाः पुनः रश्मयः आदित्यमुपगच्छन्ति। उच्यते। प्रियमेधाः प्रिययज्ञाः। ऋषयः द्रष्टार सर्वस्य जगत·।· नाथमाना. याचमाना इत्यर्थः। किं पुनर्याचमाना उपसेदु·। उच्यते। अप। अपेत्ययं ऊर्णुहि इत्यास्यानेन सम्बध्यते। अपोर्णुहि आछादय स्वेन तेजसा। किं पुनराच्छादयामि। उच्यते। ध्वान्तं सर्वं तम·। उद्गम्य च यदेतत्तमसा लोकस्य दूरीकृत चक्षु. आहृत्य तत पूर्धि पूरय देहि वा। मुमुग्धि मोचय। समन्तात् विसृजस्व। अस्मान्निधया इव बद्धान्। निधा पाशसमूहः। पाशसमूहेनेव बद्धान्॥

गौरिवीतिः। वयः पक्षिणः। सुपर्णाः इत्युमा। पक्षिणो यथा वृक्षं निवासभूतम्। तथा प्रियमेधाः प्रिययज्ञाः ऋषयः। इन्द्रं उपसेदुः नाथमाना याचमानाः धनादिकम्। अथ प्रत्यक्षस्तुतिः। अपोर्णुहि अपच्छादय। ध्वान्तं वारकम्। अप ध्वान्तमूर्णुहि इति। येन तमसा प्रावृतो मन्येत तन्मनसा गच्छेत्। अप हैवास्मान्मुच्यते (ऐ. ब्रा. ३. १९) इति हि ऐतरेयकम्। पूर्धि पूरय तेजसा। चक्षुः चक्षुषी। मुमुग्धि मोचय। अस्मान् पापेभ्यः। निधया पाशेन बद्धान् पापेभ्यः। अत्र चैतरेयकम्। मुमुग्धि अस्मान् निधयेव बद्धान् इति। पाशा वै निधा। मुमुग्ध्यस्मान् पाशादिव बद्धान् इत्येव तदाह (ए. ब्रा. ३. १९)॥ (७)

नाके सुपर्णमुप यत् पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्॥

वेनस्यार्षम्। नाकशब्दः द्युलोकवचनः। तस्मादियमधिकरणसप्तमी *योनाविल्येनेन सम्बद्धयते। सुपर्णं सुपतनम्। सुगमनमित्यर्थः।* उपेत्यय-मभ्यचक्षतेत्यास्यानेन सम्बन्धयितव्यः। यच्छब्दः पदपूरणः। पतन्तं

गच्छन्तं भगवन्तमादित्यम्। हृदा हृदयेन। वेनन्त। वेनते कान्तिकर्मणः। कामयमाना। त्वया सह मोक्षावस्थाया ऐकात्म्यं गन्तुमिच्छन्त इत्यर्थः। उप अभ्यचक्षत उपगम्य आभिमुख्येन पश्यन्ति। के ते। सामर्थ्यादस्मदादयो योगिनः। किंपुनः पश्यन्ति। उच्यते। हिरण्यपक्षम्। सर्वस्य लोकस्य हितत्वाद्रमणीयत्वाच्च हिरण्यशब्देनात्र रश्मय उच्यन्ते। ते पक्षस्थानीया यस्य स हिरण्यपक्षः। तं हिरण्यपक्षम्। हितकरणीयैः रश्मिभिर्युक्तमित्यर्थः। वरुणस्य दूतम्। वरुणो मध्यमस्थानः। तस्य दूतम्। कथं पुनरस्य दूतः। उच्यते। राज्ञो यो दूतः स प्रतिसामन्तात् यत् धनमादत्ते तत्स्वराज्ञे समर्पयति। अयमप्यादित्यः पृथिवीलोकात् रश्मिभिः यदुदकमादत्ते तत् मध्यमस्थानाय वरुणाय समर्पयति। अत एव सामान्याद्वरुणस्य दूत इत्युच्यते। क्व पुनर्व्यवस्थितं पश्यन्ति। उच्यते। यमस्य योनौ। यमः आदित्यः। तस्य योनिः स्थानं मण्डलम्। द्युलोके यदादित्यमण्डलं तत्र व्यवस्थितं पश्यन्तीत्यर्थः। कीदृशं पश्यन्ति। उच्यते। शकुनं शक्तम्। योगतः आत्मसात्कर्तुं समर्थमित्यर्थः। भुरण्युं भ्रमणशीलमित्यर्थः॥

वेनो भार्गवः।

ततोऽह जज्ञे भुवनस्य गोपा हिरण्मयः शकुनिर्ब्रह्म नाम (मा.श्रौ.९.३.६)

इति कारणात्ततः शकुनिरूपेण प्रादुर्भावं केचिदभिधीयन्ते। यत् यदा। त्वा त्वाम् सुपर्णं सुपतनम्। नाके स्वर्गे पतन्तं चरन्तम्। विप्राः हृदा हृदयेन। वेनतः कामयमाना। उप अभ्यचक्षत उपगम्य अभ्यपश्यन्। हिरण्यपक्षं शकुनम्। वरुणस्य इति सर्वदेवतोपलक्षणम्। देवतानां दूतं अग्निरूपावस्थानेन। यमस्य अग्नेः मध्यमस्थानस्य। योनौ योनिस्थाने अन्तरिक्षे। भुरण्युं गमनशीलम्। भुरण्यतिः गतिकर्मा। तदा त्वा स्तुवन्ति इति शेषः।

यमो ह जातो यमो जनित्व जार कनीना पतिर्जनीनाम्
(ऋ. वे १. ६६. ८)

इत्यस्यामृचि यम इत्यग्निरुच्यते। मध्यमस्थानोऽप्यग्निर्वैद्युतो वर्तते। अस्यामृचि परस्या च इन्द्रस्याखिलात्मना स्तुति. इति बोद्धव्यम् ॥ (८)

**ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमत· सुरुचो वेन आवः।**
**स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥**

नकुलस्यार्षम्। ब्रह्मेति बृहेर्वृद्ध्यर्थस्य बिभर्तेर्भरणार्थस्य वा रूपम्। परिवृद्धत्वात् सर्वस्य वा भरणात् ब्रह्मशब्देनादित्यमण्डल उच्यते। तत् जज्ञानं जायमानम्। प्रथम अन्यस्मात्सर्वस्मात् प्रथमम्। पुरस्तात् पूर्वस्मिन् काले। सृष्टिकाले इत्यर्थ। अथवा पुरस्तादिति दिग्वचनोऽयम्। पूर्वस्या दिशि अहन्यहनि जायमानम्। उद्यदित्यर्थ। वीत्ययमुपसर्ग आवरित्यास्यातेन सम्बन्धयितव्य। किं पुनरादित्याख्य वस्तु अहन्यहनि उद्यत् करोति। उच्यते। सीमत। सीम इति सीमाशब्दपर्याय। सीमाशब्देन मर्यादोच्यते। तस्मादिय पञ्चम्यर्थे तसि। तच्छ्रुतेश्च आङित्यय अध्याहार्य। आ सीमात आ मर्यादाया। रश्मीना मर्यादा यावत् इत्यर्थ। वि आव वि वृतान् अकरोत। कीदृशान् रश्मीन् विवृतानकरोत्। उच्यते। सुरुच सुदीप्तानित्यर्थ। कीदृशं पुनरादित्याख्यं वस्तु स्वरश्मीन् विवृतान्करोत्। उच्यते। वेन। पुंलिङ्गमिदं नपुंसकलिङ्गस्य स्थाने द्रष्टव्यम्। वेन कान्तम्। उज्ज्वलमित्यर्थ। न केवल स्वरश्मीन् विवृतानकरोत्। किं तर्हि। स। पुलिङ्गमिदं नपुंसकलिङ्गस्य स्थाने द्रष्टव्यम्। तत आदित्याख्य वस्तु। बुध्न्या। बुध्नमन्तरिक्षम्। तस्मिन् भवा बुध्न्या दिश। कीदृश्यो दिश। उच्यते। उपमा तस्यैवादित्याख्यवस्तुन सन्निकृष्टा·। अथवा सर्वस्य जगत निर्माण भूता। अस्य विष्ठा अस्य जगत विष्टम्य स्थात्री। सतश्च योनिम्।

द्वितीयैकवचनमिदं बहुवचनस्य स्थाने द्रष्टव्यम् । योनीन् । सद्रूपस्य वस्तुन योनिभूता इत्यर्थ । असतश्च असद्रूपस्येत्यर्थ । ता अपि विवृता अकरोत् ॥

नकुल । ब्रह्म हिरण्यगर्भाख्यम् । प्रथम आद्यम् । पुरस्तात् दिशि आदित्यात्मनि । जज्ञान जात प्रादुर्भूतम् । तदेव वेन. । मध्यमस्थानो वेन इन्द्र । कान्तिकर्मा वेनति गतिकर्मा वा । कमनीय वा सदा गच्छन् आदित्यात्मना वायुरूपेण वेति । आव आवृणोति तिरस्करोति । सुरुच दीप्ति रूप । निमर्थ तिरस्करोति । सीमत मर्यादाया । भर्मासु ऋतुषु वर्षितव्यम् । अमतसु न इति या मर्यादा तत्र एवेत्यर्थः । स एव बुध्न्या बुध्ने प्रतिष्ठा-रूपेण अन्तरिक्षे भवा । उपमा । उपमेत्यन्तिकनाम । अस्य मध्यमस्थानस्य अन्तिकस्था । विष्ठा । वितिष्ठन्ते प्रतिष्ठन्ते इति विष्ठा आप । ता विष्ठा विव विवृणोति, सीमत एव वर्षतीत्यर्थ । ता एव अपो विशि नष्टि । सतश्च योनि कारण असतश्च । शुभाशुभे वस्तुनि सदसती आपः । विव इति वृणाते अभ्यस्तात् विना वोपसृष्टात् लुङि मन्त्रे घसह्वर (पा. २. ४. ८०) इत्यादिना च्लेर्लोपे रूपम् ॥ (९)

अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शंतमानि वचांस्यस्मै स्थविराय तक्षुः ॥

सुहोत्रस्यार्षम् । अपूर्व्या । गरछन्दसि बहुलम् (पा ६. १. ७०) इत्येवमत्र शस लुक् । स्वार्थिकश्च यप्रत्यय । अपूर्वाणि । अन्येन नानुभूत-पूर्वाणीत्यर्थ । पुरुतमानि अतिशयेन बहूनि । अस्मै प्रकृताय इन्द्राय । महे । विरप्शिने इत्यनेन पौनरुक्त्यप्रसङ्गात् न महत्त्व इन्द्रस्य विशेषणम् । किं तर्हि । वीरत्वस्य । महते वीराय । महाशूरायेत्यर्थ । तवसे । तव इति बलनाम । बलाय । अन्तर्णीतमत्वर्थ च द्रष्टव्यम् । तवसे बलवते इत्यर्थ । तुराय । तुर्वतिर्हिंसार्थ । हिंसित्रे । विरप्शिने । शरीरेण

महते। वज्रिणे वज्रवते। शंतमानि अतिशयेन सुखानि। वचांसि वचनानि। स्तुतिरूपाणीत्यर्थः। अस्मै स्थविराय तक्षु। तक्षति करोति कर्मा। कृतवन्तो वयमित्यर्थः॥

सुहोत्रो भारद्वाजः। अपूर्व्या नूतनानि अकृतपूर्वाणि अन्यैः। पुरुतमानि वचांसि स्तोत्राणि। अस्मै महे महते। वीराय तवसे बलवते। तुराय त्वरिताय। विरप्शिने विशेषेण स्तुत्याय वज्रिणे। अस्मै इति पुनरुक्तिः अर्धर्चभेदात्। स्थविराय वृद्धाय इन्द्राय। शंतमानि सुखकृत्तमानि। वचांसि तक्षुः। तक्षति करोत्यर्थः। कुर्वन्ति स्तोतारः॥ (१०)

चतुर्थे तृतीया दशती

---

अव द्रप्सो अंशुमतीमतिष्ठदीयानः कृष्णो दशभिः सहस्रैः।
आवत्तमिन्द्रः शच्या धमन्तमप स्नीहितिं नृमणा अध द्राः॥

तिरश्चे द्युतानस्य वा आर्षम्। अवेत्ययमुपसर्गः अधद्रित्याख्यातेन सम्बन्धयितव्यः। द्रप्स इति सोमरसा उच्यन्ते। लुप्तोपमं द्रष्टव्यम्। द्रप्स सोमरससदृशनीलवर्ण इत्यर्थः। आवत्तमिति परस्तात्तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः। य एवंविधो रस। अंशुमतीं नदीम्। अतिष्ठत आस्थितवान्। दुर्गम मरुन अंशुमतीं आश्रितवानित्यर्थः। ईयानः अनुगम्यमानः स्वमूर्त्यै.। कृष्ण। रोपात भयाद्वा इन्द्रस्य कृष्णीभूतः। कियद्भिः पुनः स्वमूर्तैरनुगम्यमान। उच्यते। दशभि सहस्रैः। आवत्तं इन्द्रः। अवतेर्गत्यर्थस्येदं रूपम्। तमिन्द्रमनुगम्यमान इत्यर्थः।

कीदृशं पुनरिन्द्रमनुगतवान् । उच्यते । धमन्तं कर्मणैव शत्रुं विनाशयन्तमित्यर्थ । अनुगत्य च स्नीहितीं नदीम् । हिंसन्तीं सेनाम् । अव अधत् आधत्ते । दधातेर्धारणार्थस्येदं रूपम् । अवरुद्धवानित्यर्थ । कीदृश. पुनरिन्द्रः हिंसन्तीं सेनामवरुद्धवान् । उच्यते । नृमणा । यजमानमनुष्येषु अनुग्राहकं मनो यस्य स नृमणा· । यजमानानामुपरि अनुग्राहकचित्त इत्यर्थ ॥

अस्या· परस्याश्च द्युतानः । कृष्णनामानमसुरं च इन्द्रः जघान । तत्प्रकारोऽत्र कीर्त्यते । अवातिष्ठत् अभ्यतिष्ठत् अंशुमतीम् । अंशुमती नाम नदी । ताम् । द्रप्सो द्रवणशीलः । इयानः अनुगम्यमानः कृष्णः । दशभिः सहस्रैः असुराणाम् । आवत् आगच्छत् । तं कृष्ण इन्द्रः । शच्या कर्मणा विक्रमेण । धमन्त बाधमानम् । स्निहितीम् । स्निहीति वधकर्मा । प्रती सेना कृष्णस्य । अध तदानीम् । द्राः । द्राति· कुत्सितगतिकर्मा । लुङि रूपं द्रा इति । स सिप् अन्तर्णीतण्यर्थः । अपगमयतीत्यर्थः । नृमणाः नृषु स्तोतृषु यज्वसु वा मनो यस्य स इन्द्रः ॥ (१)

वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥

द्युतानस्यार्षम् । वृत्रस्य मेघस्य श्वसथात् आमर्षणात् । गर्जितशब्दादेवेत्यर्थ । ईषमाणा पलायन्तः नश्यन्त । विश्वे देवा. सर्वे देवाः । अजहु त्यक्तवन्त । के । उच्यते । ये सखाय· ये तव सखीभूता आसन् । केवलैर्मरुद्भि हे इन्द्र सख्यं ते तव अस्तु । लोडयं लडर्थे द्रष्टव्यः । अस्ति । मरुद्भि त्वं केवलैर्न परित्यक्त इत्यर्थ । अथ तैश्च सहित त्वं इमा विश्वाः पृतना. । पृतना इति सङ्ग्रामनाम । सर्वान् सङ्ग्रामानित्यर्थ । जयसि जितवानसीत्यर्थः । अथवा वृत्रो नाम दानव । तस्य वृत्रस्य श्वसथात् गर्जितशब्दात् ईषमाणा बिभ्यमाना विश्वे देवा अजहुः ।

ओहाङ् त्यागे । त्यक्तवन्तः अन्ये वा ये सखायः त्वदीयाः । एवं स्थिते मरुद्भिः सह हे इन्द्र सख्यं ते अस्तु भवतु । अथ एवं स्थिते इमा विश्वाः सर्वाः पृतनाः जयसि ॥

गुतानः । अत्र वृत्रवधाख्यानं प्रक्रमते । ऐतरेयकम् —तं हनिष्यन्त आद्रवन् । सोऽवेन्मा वै हनिष्यन्त आद्रवन्ति । हन्त इमान् भीषया इति तानभिप्राश्वसीत् । तस्य श्वसथादीषमाणा विश्वेदेवा अद्रवन् । मरुतो हैनं नाजहुः । प्रहर भगवो जहि वीरयस्व इत्येवैनमेता वाचं वदन्त उपातिष्टन्त । तदेतदृषिः पश्यन्नभ्यनूवाच वृत्रस्य त्वा श्वसथादीषमाणा इति (ऐ. ब्रा. ३. २०) वृत्रस्य श्वसथात् श्वासात् । ईषमाणाः बिभ्यन्तः । विश्वे देवाः त्वा अजहुः अत्यजन् । ये सखायः पूर्वं आसन् । मरुद्भिः इदानीमपि त्वामत्यजद्भिः ते सख्यमस्तु हे इन्द्र । अथ एताः विश्वाः पृतनाः वृत्रस्य जयासि अजयस्त्वम् ॥ (२)

विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥

बृहदुक्थस्यार्षम् । विधुं वृष्टिप्रदानादिना उपकरणेन सर्वजगतः धारयितारमिन्द्रम् । दद्राणं दारयितारम् । समने सङ्ग्रामे बहूनां शत्रूणाम् । युवानं सन्तं तरुणं सन्तमित्यर्थः । पलितः । पलितत्वं वृद्धस्योपलक्षणार्थम् । वृद्धः अहं जगार । गॄ स्तुतावित्यस्य उत्तमपुरुषैकवचनमिदम् । स्तौमीत्यर्थः । किं च हे मदीय अन्तरात्मन् देवस्य दानादिगुणयुक्तस्येन्द्रस्य । पश्य काव्यम् । कविर्मेधावी । तस्य भावः काव्यम् । कवित्वमित्यर्थः । कीदृशं पुनः कवित्वम् । उच्यते । महित्वा महत्वेन । स्वमाहात्म्येनेत्यर्थः । अद्या ममार स इति पुरस्ताद्यच्छब्दश्रुतेः ह्यः इत्यत्र यच्छब्दोऽध्याहार्यः । यः ह्यः अतीते अहनि समान प्राणितवान् ।

अद्य ममार स इति तच्छब्द अद्यशब्दात्पूर्वे अपकृष्टव्य । प्रथमैक वचन द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । तमसुर अद्य अस्मिन्नहनि । ममार । म्रियतिरन्तर्णीतण्यर्था द्रष्टव्य । मारयतीत्यर्थ ॥

बृहदुक्थ । विधु विधातार कर्मणाम् । दद्राण द्रावक बहूना शत्रूणाम् । समने सग्रामे । युवान सन्त पलित । पलित जरा । जगार गिरति ग्रसति । अपर आह विधु चन्द्रमस दद्राण द्रावक गच्छन्त समने समूहे बहूना स्थित त युवान पूर्ण सन्त पलिता वृद्धा राहु जगार ग्रसति इति । अद्य ममार म्रियते कश्चित् । स इदानीं म्रियमाण ह्य पूर्वेद्यु समान सजि जीव । देवस्य देवेन्द्रस्य सर्वनियामकस्य । काव्य प्रज्ञान सकल्पम् । पश्य हे बृहदुक्थ इति स्वात्मानमेवेश्वरस्वातन्त्र्य बोधयति ॥ (३)

त्व ह त्यत् सप्तभ्या जायमानो ऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
गूळ्हे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रण धा ॥

तिरश्चेर्द्युतानस्य वा आर्षम् । त्वम् । ह इत्यय विनिग्रहार्थीय जायमान इत्यतस्मात्परो द्रष्टव्य । त्यत् । त्यच्छब्द तच्छब्दपर्याय । सप्तम्याश्चात्र लुक् । तदा । सप्तभ्य असुरेभ्य जायमान जायमान एव । कीदृशभ्य असुरभ्य । उच्यते । अशत्रुभ्य । अभव भवसि । शत्रु शातयिता हे इन्द्र । कदा पुन प्रभृति शातयिता भवसि । उच्यते । तदेति वचनात् यदित्यध्याहार्यम् । यदा गूढे निगूढे तेभ्य असुरभ्य भयन त्वा पलायतेत्यर्थ । द्यावापृथिवी अनु अविन्द । विदॢ लाभ इत्यस्यद रूपम् । लब्धवानसीत्यर्थ । किमर्थ पुनर्लब्धवान् । उच्यते । विभुमद्भ्य भुवनेभ्य भूतलेभ्य । तेषा अर्थाय । सुख तत्र विभुमन्ति भूतलानि व्यवस्थास्यन्त इत्येवमर्थमित्यर्थ । तेषा भूतजातानां रक्षणार्थ तैरसुरै सह रण सङ्ग्रामम् । धा धारयसि । करोषीत्यर्थ ॥

धुतानः । त्वं खलु त्यत् तदानीम् । जायमानः प्रादुर्भवन् । सतम्यः अशत्रुभ्यः बाधागहिताभ्यः । षष्ठ्यर्थे चतुर्थी । तासाम् । शत्रु शातयिता अभव हे इन्द्र । सप्त यत् पुरः शर्म शारदीर्दत (ऋ. वे. १. १७४. २) इति हि निगमः । गूढे तमसा । द्यावापृथिवी दिवं च पृथिवीं च । अन्वविन्दः तमोरूपस्य वृत्रस्य हननात् । स त्वं विभुमद्भ्यः व्याप्तिमद्भ्यः । भुवनेभ्यः रणं रमणम् । धा विधेहि ॥ (४)

मेडिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभं स्थिरप्स्नुम् ।
करोष्यर्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं वृत्रहणं गृणीषे ॥

वामदेवस्यार्षम् । मेडिरिति वाङ्नाम । अन्तर्णीतमत्वर्थं द्रष्टव्यम् । मेडिमन्तम् । वाग्मिनमित्यर्थः । नशब्द उपरिष्टादुपचारत्वादुपमार्थीय । अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोग इति पादपूरण । वज्रिणं वज्रवन्तम् । भृष्टिमन्तम् । भृष्टिशब्देन शिखराण्युच्यन्ते । तानि चात्र बाहुशिखराणि परिगृह्यन्ते । तैस्तद्वन्तम् । पुरुधस्मानम् । पुर्विति धननाम । धस्मानमिति धसि सहने इत्यस्येद रूपम् । धनाना सहनशीलम् । वृषभम् । स्थिरप्स्नुम् । स्थिरः चिरन्तनः स्थविरश्चासौ प्स्नुश्च । तं स्थिरप्स्नुम् । चिरन्तनहविषां भक्षयितारमित्यर्थः । द्युक्षम् । दिवि क्षियति निवसति इति द्युक्षः । तं द्युक्षम् । द्युलोकनिवासिनमित्यर्थः । वृत्रहणं मेघस्य हन्तारं त्वा हे इन्द्र गृणीषे । मध्यमपुरुषैकवचनमिदमुत्तमपुरुषैकवचनस्य स्थाने द्रष्टव्यम् । अहं वामदेवः गृणे स्तौमीत्यर्थः । करोष्यर्यस्तरुषीरित्येतानि यत्तच्छब्दावध्याहृत्यैकवाक्यता नेयानि । यस्त्वं करोषि । अर्यः ईश्वरः । तरुषीः । तरुष्यति वधकर्मा । वधेन सङ्ग्रामो लक्ष्यते । सङ्ग्रामानित्यर्थः । तं त्वा दुवस्युः परिचरितुमिच्छन् अहं वामदेवः स्तौमीत्यर्थः ॥

वामदेव । मेदिरिति वाङ्नाम। मेडि न वाचमिव। यथा वाच सर स्वतीं स्तुवन्ति तथा त्वाम्। गृणीषे इत्यन्तर्णीतण्यर्थ । स्तावयसि। वज्रिण भृष्टिमन्तम्। भृष्टि भ्राजते दीप्तिकर्मणो रूपम्। दीप्तिमन्तम्। पुरुरस्मा नम्। दधातेरस्मा। पुरूणा बहूना विश्वेषा धारकम। वृषभ वर्षितारम्। स्थिरप्स्नुम्। प्स इति रूपनाम। तत्र नकार उपजन । स्थिरदेहम्। क्षुक्ष सुस्थानम्। वृत्रहण वृत्राणा असुराणा हन्तार त्वा गृणीषे हे इन्द्र। यथा त्वा स्तुवन्ति ऋश्य तथा कर्माणि करोषि इत्यर्थ । तान्येव कर्माणि सग्रहेण दशयति—अर्य । अरी आपकर्मसु स्थिता यज्वान । तत्सम्बन्धि नी प्रजा । अरिशब्दात् शसि वा छन्दसि (पा ६ १. १०६) इति पूवसवर्णस्य वैकल्पिकत्वात् तदभावे यणादेश । तरुपी आपदा तारिका करोषि। दुवस्यु । दुव परिचरणम। तदिच्छन् इति। अथवा गृणीषे इति उत्तमपुरुषैकवचनम्। गृणे त्वामहमिति। सिब्बहुल लेटि (पा ३ १. ३४) इत्यत्र बहुलग्रहणात् लेटि सिप्॥ (९)

प्र वो महे मह वृधे भरध्व प्रचेतसे प्र सुमतिं कृणुध्वम्।
विश. पूर्वीः प्रचर चर्षणिप्राः॥

वसिष्ठस्यार्षम्। वसिष्ठ आत्मीयानृत्विज आह । प्रेत्ययमुपसर्ग भरध्वमित्याख्यातेन सम्बन्धयितव्य । व । द्वितीयाबहुवचनमिद प्रथमा बहुवचनस्य स्थाने द्रष्टव्यम्। यूय हे मदीया ऋत्विज । महे। तादर्थ्ये एषा चतुर्थी। महत इन्द्रस्यार्थाय। महे वृधे। इयमपि तादर्थ्ये चतुर्थी। महता यजमानाना वर्धयितुरिन्द्रस्यार्थायेत्यर्थ । प्रेत्ययमुपसर्ग कृणुध्व मित्याख्यातेन सम्बन्धयितव्य । सुमतिम्। मन्यते इत्यर्चतिकर्मा। सुशब्द शोभनार्थे । शोभना स्तुतिमित्यर्थ । प्रकृणुध्वम्। त्वदर्थं सोम नयन्ति शोभना च स्तुतिं कुर्वन्ति। अतो ब्रवीमि। यद्यपि अन्यदीया अपि ऋत्विजस्त्वामाह्वयन्ति तथापि अस्मदीयानेव विश ऋत्विग्लक्षणान्

मनुष्यान् प्रति । पूर्वी । स्त्रीलिङ्गमिदं पुंलिङ्गस्य स्थाने द्रष्टव्यम् । पूर्वान् चिरन्तनान् । प्रचर प्रकर्षेण गच्छेत्यर्थः । चर्षणिप्रा । चर्षणयो मनुष्या । तेषा पूरयिता चर्षणिप्रा । इन्द्रविशेषणमेतत् सम्बुद्ध्यन्तम् । धनेन मनुष्याणा पूरयित । छान्दसत्वान्निघाताभाव । अथवा विशा विशेषणम् । धनेन मनुष्याणा पूरयित्री प्रतीत्यथ ॥

वसिष्ठः । प्रभरध्वं प्रणयत । व॰ यूयम् । महे महते इन्द्राय सोमान् इति शेषः । महे वृधे महता धनाना वर्धयित्रे । प्रचेतसे प्रकृष्टज्ञानाय । प्रकृणुध्वं सुमतिं सुष्टुमतिं हे मदीयाः पुरुषाः । अथ प्रत्यक्षस्तुतिः । विश प्रजाः । पूर्वीः पूरयित्रीः हविर्भिः । प्रचर अभिगच्छ । चर्षणिप्राः चर्षणीना जनाना पूरयिता कामैः त्वम् ॥ (६)

शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानि ॥

विश्वामित्र आह । शुनं सुखं सुखकरमिन्द्रम् । हुवेम । बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम् । आह्वयामि । कीदृशमिन्द्रमाह्वयामि । उच्यते । मघवानम् । मघं धनम् । तदस्यास्ति स मघवा । तं मघवानम् । धनवन्तमित्यर्थ । क्व पुनराह्वयामि । उच्यते । अस्मिन् भरे । भर इति सङ्ग्रामनाम । अस्मिन् वर्तमाने सङ्ग्रामे इत्यर्थः । कीदृशमिन्द्रम् । उच्यते । नृतमं अतिशयेन मनुष्यम् । वाजसातौ । इदमपि सङ्ग्रामनाम । अस्मिन् भरे इत्यनेन पौनरुक्त्यप्रसङ्गात् क्रियानिमित्तमेतत् द्रष्टव्यम् । वाजः अन्नम् । तं सम्भज्यते यत्र स वाजसाति । परकीयान् हत्वा तदीयमन्नं सम्भज्यते । तस्मिन् भरे आह्वयामीत्यर्थः । कीदृशमिन्द्रमाह्वयामि । उच्यते । शृण्वन्तं उग्रम् । किमर्थमाह्वयामि । ऊतये । आत्मनः पालनार्थम् ।

समत्सु सङ्ग्रामेषु । घ्नन्त वृत्राणि मघवृन्दानि । सजित सम्यक् जेतार धनानाम् ॥

विश्वामित्र । शुनमिति सुखनाम । सुखसाधनमिन्द्र हुवेम स्तुम वयम् । मघवान धनवन्तम् । अस्मिन् भरे सङ्ग्रामे । यज्ञे वा । नृतम नेतृतमम् । वाजसातौ अन्नलाभे निमित्ते । शृण्वन्त स्तोत्राकर्णनपरम् । उग्र ओजस्विनम् । ऊतये तर्पणाय रक्षणाय वा । समत्सु सङ्ग्रामेषु घ्नन्त वृत्राणि शत्रून् । सजित सम्यक् जयन्त धनानि शत्रूणाम् ॥ (७)

उदु ब्रह्माण्यैरत श्रवस्येन्द्र समर्ये महया वसिष्ठ ।
आ यो विश्वानि शवसा ततानोपश्रोता म ईवतो वचांसि ॥

वसिष्ठ अन्तरात्मानमाह । उद् इत्ययमुपसर्ग व्यत्ययेन प्रेत्यतस्य स्थाने द्रष्टव्य । प्रेत्यय च ऐरतेत्याख्यातेन सम्बन्धयितव्य । ब्रह्माणि अन्नानि हविर्लक्षणानि । ऐरत । मध्यमपुरुषबहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम् । ईरय । प्रेरयेत्यर्थ । कीदृशानि ब्रह्माणि प्रेरयामि । उच्यते । श्रवस्या श्रवणीयानि । उत्कृष्टानीत्यर्थ । क प्रति प्रेरयामि । उच्यते । इन्द्रम् । प्रति । न केवलमन्नान्येव प्रेरय । किं तर्हि । समर्ये सङ्ग्रामस्थानीय यज्ञे । महय पूजय । स्तुहीत्यर्थ । हे वसिष्ठ मदीय अन्तरात्मन् । कीदृशमिन्द्र । त महयामि उच्यते । य इन्द्र विश्वानि सर्वाणि ज्योतिष्टोमादीनि कृष्यादीनि च कर्माणि । शवसा स्वेन बलेन । आततान विस्तारयतीत्यर्थ । यश्च उपश्रोता मे मम स्वभूतस्य । ईवत । इवतेर्व्याप्तिकर्मण एतद्रूपम् । व्याप्तिमत । अगाधगुणप्रकाशनस्येत्यर्थ । कस्य पुन व्याप्तिमत उपश्रोता । उच्यते । वचासि । प्रथमाबहुवचनमिद षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । वचस । वचनस्येत्यर्थ । यो विश्वानीति परस्ताद्यच्छब्दश्रुते त महय इति पुरस्तात्तच्छब्दमध्याहृत्यैकवाक्यता योजयितव्या ॥

वसिष्ठः । उदीरत उदीरयन्ति । उः पूरणः । ब्रह्माणि स्तोत्राणि ब्राह्मणाः । इन्द्रार्थं इति शेषः । श्रवस्या श्रवस्यया अन्नेच्छया । हे वसिष्ठ त्व च इन्द्र समर्ये यज्ञे । महय पूजय । अथ प्रकारान्तरेण स्तौति । यः इन्द्रः विश्वानि भुवनानि आतनान आतनोति । श्रवसा यशसा । उपश्रोता भवत् मे मम । ईवत उपगमनवत. । वचांसि स्तोत्राणि ॥ (८)

**चक्रं यदस्याप्स्वानिषत्तमुतो तदस्मै मध्विच्चछद्यात् ।**
**पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥**

गौरिवीतेरार्षम् । चक्रमायुधविशेष । यत् इन्द्रस्य स्वभूतम् । अप्सु । निमित्तसप्तम्येषा । अप्सु निमित्तभूतासु । निमित्तसप्तमी तादर्थ्यं प्रतिपादयति । चर्मणि द्वीपिनं हन्ति इति यथा । एवमिहापि । उदकार्थमित्यर्थ । आनिषत्तं आभिमुख्येन निषण्णम् । मेघं छित्वा तस्योदरे गतमित्यर्थः । उत । उत् इत्ययं पदपूरण । तत् चक्रं अस्य लोकस्यार्थाय बहु उदकं चछद्यात् । कामितवत् कामयित्वा अच्छादयेदित्यर्थः । किंच पृथिव्याम् । पृथिवीत्यन्तरिक्षनाम । अन्तरिक्षे इत्यर्थ । अतिषितं अतिबद्धम् । व्यवस्थितमित्यर्थ । यत् ऊधः ऊधसि । पयः उदकम् । यच्च गोषु । गोशब्देनात्र आदित्यरश्मय उच्यन्ते । यच्च आदित्यरश्मिषु अतिषितं सोमरसलक्षणमुदकं । यदूधरिति पुरस्ताद्यच्छब्दश्रुते अदधा इत्यत्र तच्छब्दोऽध्याहर्तव्य । तत्सर्वमिन्द्र अदधात् ददाति । पातयतीत्यर्थ । ओषधीषु । निमित्तसप्तम्येषा । ओषधीषु व्रीह्यादिषु निमित्तभूतासु । ओषध्यर्थमित्यर्थः ॥

गौरिवीति । चक्रं आयुधम् । यत् अस्य इन्द्रस्य अप्सु अन्तरिक्षे मेघे । निषत्त निषण्णम् । आ इति पूरणः । तत् अस्मै इन्द्राय । मधु उदकम् । इत् एव । चछद्यात् छदयेत् वशं नयेत् । उतो अपि च । परार्धर्चादी सम्बध्यते ।

पृथिव्यामतिषितम्। स्वतिरपसूर्गे विमोचने। विमुक्त यत् ऊधः। पञ्चम्या. लक्। ऊधसो मेयात्। तत् यथा गोषु अदधा ओषधीषु च। इति प्रत्यक्ष-स्तुति परार्धर्चे. ॥ (९)

चतुर्थे चतुर्थी दशती

---

त्यमू षु वाजिनं देवजूतं सहोवानं तरुतारं रथानाम्।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥

तार्क्ष्य आह। त्यशब्दस्तच्छब्दपर्याय। तच्छब्दश्रुतेश्च योग्यार्थ-सम्बन्धो यच्छब्दोऽध्याहर्तव्य। यमभिमत्ताह्वयन्ति तम्। उ सु इति द्वावपि पदपूरणौ। वाजिनं सोमलक्षणेनान्नेन अन्नवन्तम्। देवजूत देवैर्मरुदादिभिरनुगतम्। सहोवानं स्वेन बलेन बलवन्तम्। तरुतारं हन्तारम्। रथाना शत्रूणा स्वभूतानाम्। अरिष्टनेमिम्। रिष्टं हिंसितम्। रिषिर्हिंसार्थत्वात्। न रिष्ट अरिष्टम्। नेमिरिति वज्रनाम। अरिष्ट अहिं-सित नेमिर्वज्रो यस्य स अरिष्टनेमि। त अरिष्टनेमिम्। अहिं-सितवज्रमित्यर्थ। पृतनाजम्। पृतनेति सङ्ग्रामनाम। तस्मादुपरस्थ-जयतेर्डप्रत्यय। पृतनाजम्। सङ्ग्रामाणा जेतारमित्यर्थ। आशु क्षिप्रम्। स्वस्तये आत्मन अविनाशाय। तार्क्ष्यम्। तृक्षपुत्रस्य गतानित्यस्येद रूपम्। अभिगमनीयमिन्द्र देवतान्तर वा तार्क्ष्यम्। इह सङ्ग्रामे हुवेम ह्वयामि। आह्वयामि इत्येतदाशास्महे ॥

तृक्षपुत्र अरिष्टनेमि। त्य उ तमेव। सु सुष्ठु हुवम। वाजिनं वेग-वन्तम। देवजूत देवै स्तोतृभि प्रेरितम्। सहोवान सहस्वन्तम्। तरुतारं-

वनिपौ च (वा. ५. २. १०९) इति मत्वर्थीयो वनिः। तरुतारं हिंसितारम्। स्थाता प्रतिस्थानाम्। अथवा स्थाता गन्तृणां तरुतारं गन्तृतमम्। तरतिर्गतिकर्मापि। अरिष्टनेमिं अहिंसितारम्। पृतनाजं पृतनानां अजितारं क्षेप्तारम्। अज गतिक्षेपणयोः। आशुं शीघ्रगामिनम्। तार्क्ष्यं सुपर्णम्। स्वस्तये स्वास्ये। इह आह्वयेम ॥ (१)

त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम्।
ह्वे नु शक्रं पुरुहूतमिन्द्रमिदं हविर्मघवा वेत्विन्द्रः ॥

गर्गस्यार्षम्। त्रातारं पालयितारम्। इन्द्रं अवितारं पालयितारमिन्द्रम्। हवे हवे सङ्ग्रामे सङ्ग्रामे। सुहवं स्वाह्वानम्। शूरमिन्द्रं अहमपि गर्गः ह्वे। नु इति पदपूरणः। आह्वयामि शक्रं शक्तम्। पुरुहूतमिन्द्रम्। आहूतश्च सन् इदं हविः अस्मदीयं मघवा धनवानिन्द्रः। वेतु। वेतिर्भक्षणार्थस्येदं रूपम्। भक्षयतु इन्द्रः ॥

भरद्वाजः। त्रातारं इन्द्रं ह्वे ह्वयामि। अवितारं इन्द्रमिति पुनरुक्तिः स्तोतृत्वमत्त्वख्यापनाय। त्राणं नाम उपस्थितेभ्यो भयेभ्यो रक्षणम्। अवनं तु ह्रेम्स्तानिरोध इति विशेषः। अथवा कामैस्तर्पणं अवनम्। हवे हवे सर्वेषु आह्वानेषु। सुहवं आह्वातुं सुशकम्। शूरमिन्द्रम्। ह्वे ह्वयामि शक्रं शक्तं सर्वत्र। पुरुहूतं इन्द्रं ह्वयामि। स च मघवा इन्द्रः इदं हविः वेतु अश्नातु कामयतां वा ॥ (२)

यजामह इन्द्रं वज्रदक्षिणं हरीणां रथ्यं विव्रतानाम्।
प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि सेनाभिर्भयमानो वि राधसा ॥

विमदस्यार्षम्। यजामहे वयमिन्द्रम्। कीदृशमिन्द्रं यजामहे। उच्यते। वज्रदक्षिणं वज्रेण गृहीतेन शत्रुवधार्थमुत्साहिनमित्यर्थः। अथवा

वज्रं दक्षिणे हस्ते यस्य स वज्रदक्षिणः। तं वज्रदक्षिणम्। वज्रहस्तमित्यर्थः। हरीणामार्सीदानामश्वानाम्। रथ्य समर्थितारम्। नेतारमित्यर्थः। कीदृशानामश्वानां नेतारम्। उच्यते। विव्रतानाम्। व्रतमिति कर्मनाम। तच्चानुगमनकर्म परिगृह्यते। विविधं कर्म येषां न विव्रता। तेषां विव्रतानाम्। विविधकर्मयुक्तानामित्यर्थः। पूर्वार्धर्चे यत्तच्छब्दावध्याहृत्य एकवाक्यता नेया। प्रत्ययमुपसर्गं दोधुवदित्याख्यातेन सम्बन्धयितव्य। श्मश्रुभिः। तृतीयाबहुवचनमिदं द्वितीयाद्बहुवचनस्य स्थाने द्रष्टव्यम्। श्मश्रूणि। श्मश्रुग्रहणं चात्र प्रदर्शनार्थम्। सर्वरोमाणि शत्रूणाम्। प्रदोधुवत्। धूञ् विधूनने इत्यस्येदं रूपम्। पुनः पुनः प्रकर्षेण धुवति। उत्कम्पितरोमकूपान् शत्रून् करोतीत्यर्थः। किं कुर्वन्। उच्यते। ऊर्ध्वथा भुवत्। ऊर्ध्वमित्यादि द्रष्टव्यं। भवत्युक्तं भवति। यदा स ऊर्ध्वस्तिष्ठति तदा सर्वे शत्रवः मा प्रदर्शयति मा प्रत्यपश्यन्त्यनेन भयेन गमात्वीत भवन्तीति। यश्च सेनाभिः हस्त्यश्वरथपदातिरूपाभिः भयमानः। अन्तर्णीतण्यर्थमिदं द्रष्टव्यम्। भाययमानः श्मश्रूणि दोधुवत्। यश्च राधसा धनेन अत्यर्थं बहुधनं दधत् श्मश्रूणि दोधुवत्। तमिन्द्रं यजामहे। एवं सर्वत्र यच्छब्दमध्याहृत्य तच्छब्देन एकवाक्यता योजयितव्या॥

वसुकृद् विमदो वा। यजामहे वयं इन्द्रं वज्रदक्षिणं वज्रं दक्षिणे हस्ते यस्य तम्। हरीणां रथ्यं नेतारम्। विव्रतानां विविधकर्मणाम्। प्रदोधुवत् प्रकम्पयन् शत्रून्। श्मश्रुभिः तेजोभिः। ऊर्ध्वथा ऊर्ध्वं इत्यर्थः। भुवत् भवति। उद्युक्तो भवतीत्यर्थः। वि विभजति। सेनाभिः भयदानः भीषयन् असुरान्। विभजति राधसा धनेन च॥ (३)

सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम्।
हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः॥

वामदेवस्यार्षम्। सत्राशब्द सदाशब्दपर्यायः। सदा हन्तारं शत्रूणाम्। अथवा सत्रेति सत्यनाम। सत्येन असत्यानामनुगुणा हन्तारम्। दाधृषिं अभिभवितारं सर्वस्य शत्रोः। तुम्रम्। तुभोपसर्गमिदं द्रष्टव्यम्। तुम्रमहान्। स्थूलमित्यर्थः। इन्द्र महा महान्तं शरीरेण। अपारमनन्तं वीर्येण। वृषभं वर्षितारम्। सुवज्रं शोभनवज्रम्। द्वितीयानिर्देशात्स्तुम यजमानो वेति वाक्यशेषः। हन्ता हन्तृतमः। वृत्रम्। षष्ठ्यर्थे द्वितीया। वृत्रस्य। यश्च सनिता सम्भक्ता वाजम्। इयमपि द्वितीया षष्ठ्यर्थे एव। वाजस्य सोमलक्षणस्यान्नस्य। यश्च दाता मघानि। इयमपि षष्ठ्यर्थे एव। मघानां धनानाम्। यश्च मघवान् धनवान्। यश्च सुराधाः शोभनधनः। तं स्तुमः यजमानो वेति वाक्यशेषोऽनुषक्तव्य ॥

वामदेवः त्रिष्टुभम्। सत्राहणं बहूनां हन्तारम्। सत्रेति बहुनाम। दाधृषिं धृष्टं धर्षकं शत्रूणाम्। तुम्र प्रेरकम्। तुमिः प्रेरणकर्मा। इन्द्र महा महान्तम्। अपारं अपरिमाणम्। वृषभं वर्षितारम्। सुवज्रम्। स्तुम इति शेषः। यो वृत्रं हन्ता। तृन्नन्तत्वात् षष्ठ्यभावः। एवमुत्तरेष्वपि। उत अपि च। सनिता दाता वाजं अन्नम्। दाता मघानि धनानि। मघवा इन्द्रः। सुराधाः सुधनः। तं स्तुम इति शेषः ॥ (४)

यो नो वनुष्यन्नभिदाति मर्त उगणा वा मन्यमानस्तुरो वा।
क्षिधी युधा शवसा वा तमिन्द्राभी ष्याम वृषमणस्त्वोताः ॥

वामदेवस्यार्षम्। यः न अस्मान् वनुष्यन्। वनुष्यतिर्हिंसतिकर्मा। अस्मान् हिंसन्। अन्येभ्यः अभिदाति आभिमुख्येन ददाति। योऽस्मा-कमदत्वान्येभ्यो ददातीत्यर्थः। मर्त्यः मनुष्यः। उगणा उरुगणाः। उरु गणयतीत्युरुगणाः। उरुगणा सन् रुशब्दलोपेन उगणा उच्यते। एतदुक्तं

भवति । योऽस्मभ्य अल्प दत्वा बहु गणयति जनेभ्य कथयति । यश्च मन्यमान वाचा पूजयन् । तुर तुर्वतेर्वधकर्मण एतद्रूपम् । वाचा पूजयन् हृदयेन हिनस्तीत्यर्थ । क्षिधी । क्षि क्षये इत्यस्यद रूपम् । उपक्षपय इत्यर्थ । वन उपक्षपयामि । उच्यते । युधा युद्धेन । यस्तावच्छरीरेण शक्यते उपक्षपयितु त तथा उपक्षपय । य युधा शक्यते उपक्षपयितु त शवसा सेनालक्षणेन बलेन हे इन्द्र । त्वया च उपक्षपयितु वयमपि अभिष्याम अभिभवेम इत्यतदाशास्महे । हे वृषभण त्वोतास्त्वया रक्षिता इत्यर्थ ॥

यो मर्त्यो न अस्मान् । वनुष्यन् हिंसिष्यन् । अभिदाति अभिदासति अभिहन्ति । उगणा वा उद्गूर्णा वा । तुर इति तुवते हिंसाकर्मणा रूपम । वृत्रतुरितिवत । हन्ति वा शत्रूणा अस्मदीया प्रजा अभिदासति । मन्यमान आत्मान बहुमन्यमान । क्षिधि क्षयस्य निधि । क्षिधिशब्दात् तृतीयैकवचन पूर्वसवर्णदीर्घ । क्षयकरणेन । युधा सप्रहारेण । शवसा बलेन वा अभिदासति । त वय अभिष्याम अभिभवेम । हे इन्द्र वृषमण वर्षवत्तम । त्वोता त्वया रक्षिता वयम् ॥ (९)

य वृत्रेषु क्षितय स्पर्धमाना य युक्तेषु तुरयन्तो हवन्ते ।
य शूरसातौ यमपामुपज्मन् य विप्रासो वाजयन्ते स इन्द्रः ॥

वामदेवस्यार्षम् । इन्द्रस्यातिभक्ततया इन्द्ररूपमास्थित असुरैर्गृहीतो हन्यमान आह । य वृत्रेषु शत्रुषु । हन्तव्येष्विति वाक्यशेष । क्षितय मनुष्या योद्धार परस्परेण स्पर्धमाना । क्षितय य च युक्तेषु रथेषु अश्वेषु वा युद्धार्थमाह्वयन्ति । तुरयन्त त्वरमाणा हिंसन्तो वा शत्रून् आत्मनो जयार्थं आह्वयन्ते । य च शूरसातौ सग्रामे जयार्थं आह्वयन्ति ।

यं च अपामुपज्मन् । उपपूर्वस्य अज गतिक्षेपणयोरित्यस्येदं रूपम् । आपः समीपे यस्मिन् काले आगच्छन्ति स अपामुपज्मा वर्षाकाल । तस्मिन् अपा उपज्मे । उदकार्थं वर्षाकाले यमाह्वयन्तीत्यभिप्राय । यं च विप्राः मेधाविन यजमाना । वाजयन्ते पूजयन्ते । स हे असुरजना इन्द्र । अह इन्द्रो न ममानीति ॥

य हवन्ते वृत्रेषु उपद्रवेषु सत्सु । क्षितय. मनुष्या· स्पर्धमाना· शत्रुभिः सह । य युक्तेषु रथेषु सत्सु हवन्ते । तुरयन्तः त्वरयन्तः । य शूरसातौ सग्रामे प्रवृत्ते हवन्ते । य हवन्ते अपा उपज्मन् उपगमने प्राप्तौ । वृष्ट्यर्थमित्यर्थः । य च विप्रासः प्राज्ञाः वाजयन्ते वाजिन बलिन कुर्वन्ति स्तोत्रेषु यज्ञेषु । स इन्द्र सर्वेषामपेक्षित इत्यर्थः ॥ (६)

इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः ।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिडया मदन्ता ॥

विश्वामित्रस्यार्षम् । हे इन्द्रापर्वतौ बृहता महता रथेन । वामी· वननीया· । सम्भजनीया इत्यर्थ । इष अन्नानि । आवहतं आनयतम् । अस्मभ्यं दत्तमित्यर्थ । कीदृशी पुन इष आनयाव । उच्यते । सुवीरा· शोभनैर्वीरै पुत्रै पौत्रैश्च युक्ता । वीत भक्षयतम् । हव्यानि हवींषि । अध्वरेषु यज्ञेषु । हे देवौ दानादिगुणयुक्तौ । भक्षयित्वा हवींषि वर्धेथा गीर्भि स्तुतिभि । स्तूयमानाविति वाक्यशेष । इडया सवनीय-लक्षणेनान्नेन । मदन्तौ तृप्यन्ताविन्यर्थ ॥

विश्वामित्रः । हे इन्द्रापर्वता इन्द्रापर्वतौ । पर्वतो नाम देवर्षिः इन्द्रस्य सखा । बृहता रथेन वामीः वननीयाः । इषः अन्नानि । आवहतं अभिवहतं

अस्मभ्यम् । सुवीरा शोभनपुत्रपौत्रसहिता । वीत अश्नीतम् । हव्यानि अध्वरेषु हे देवा देवौ । वर्धथा गीर्भि स्तुतिभि । इडया अनेन सोमेन । मदन्ता हृष्यन्तौ युवाम् ॥ (७)

**इन्द्राय गिरो अनिशितसर्गा अप' प्रैरयत्सगरस्य बुध्नात् ।**
**यो अक्षेणेव चक्रियौ शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥**

रेणोगर्षम । इन्द्राय इन्द्रार्थम् । गिर स्तुती । कीदृश्य स्तुती । उच्यत । अनिशितसर्गा । शो तनूकरण इत्यस्यद रूपम् । निष्ठाप्रत्यय निष्ठा शीडस्विद् (पा १ २. १९) इत्येतद्भवति । सर्ग ससर्ग सङ्घात । निशित सङ्घातो यासा ता निशितसर्गा तनूकृतसङ्घाता । अनिशित सर्गा अतनूकृतसङ्घाता । बह्वीरित्यर्थ । प्रैरयत् । प्रथमपुरुषैकवचनमिद मुत्तमपुरुषैकवचनस्य स्थाने द्रष्टव्यम् । प्रेरयामीत्यर्थ । अप । द्वितीया निर्देशात् प्राप्तुमिति वाक्यशेष । उदकानि प्राप्तुमित्यर्थ । कुत पुनरुदकानि प्राप्तुम् । उच्यते । सगरस्य अन्तरिक्षस्य बुध्नात् । वृष्टिलक्षणा अप प्राप्तुमित्यर्थ । य कीदृश इन्द्र यस्य स्तुती प्रेरयामि । उच्यते । य अक्षणेव चक्रियौ चक्रे । यथा कश्चिद्रथकार अक्षण चक्रे स्तम्भयति तद्वत् । शचीभि यज्ञादिभि कर्मभि प्रज्ञाभि वा । विष्वक् विष्वग्भूते नानागत । तस्तम्भ स्तम्भितवान् । अविचलीकृतवानित्यर्थ । पृथिवीं उत अपि च । द्याम् । द्यावापृथिव्यो इत्यर्थ । यो अक्षणेति पुरस्ताच्छन्दश्रुत तच्छन्दमध्याहृत्यैकवाक्यता योज्या । तस्मै इन्द्राय गिर प्रेरयामीति ॥

रेणु वैश्वामित्र । इन्द्राय इन्द्रमुद्दिश्य । गिर स्तुती । अनिशितसर्गा अतनूकृतप्रयोगा । प्रैरयत् प्रेरयति रेणु ऋषि । अप सगरस्य बुध्नादित्युपमा ।

यथा सगरस्य सलिलं बुध्नात् प्रतिष्ठाय अन्तरिक्षात् अपो पृष्ठिलक्षणाः प्रेरयसि त्वं तथेति। य इन्द्रः अक्षेणेव चक्र्यौ रथचक्रे। ऋणारक्षं न चक्र्योः (ऋ. वे. १. ३०. १४) इत्यत्र चक्रिशब्दः चक्रे दृष्टः। शचीभिः प्रज्ञाभिः सङ्कल्पैः। विष्वक् सर्वतः। तस्तम्भ स्तभ्नाति। पृथिवीं उत अपि च। द्यां दिवम्। तस्मै इन्द्राय॥ (८)

## आ त्वा सखायः सख्या ववृत्युस्तिरः पुरू चिदर्णवान् जगम्याः। पितुर्नपातमा दधीत वेधा अस्मिन् क्षये प्रतरां दीद्यानः॥

वामदेव आह। आ इत्ययमुपसर्गः ववृत्युरित्यास्यानेन सम्बन्धयितव्यः। आववृत्यु आवर्तयन्ति। आभिमुख्यं कुर्वन्तीत्यर्थः। त्वा त्वां इन्द्रम्। सखाय अस्मदीया ऋत्विजः। केन पुनरावर्तयन्ति। उच्यते। सख्या सखिकर्मणा। यागेनेत्यर्थः। अभिमुखीभूतश्च सन् तिरः प्राप्त एव। अस्मान् प्रति अदूरस्थ एव इत्यर्थः। पुरू पुरुणा बहुना उदकेन। अर्णवान् उदकवान् भूत्वा। उदकसहित इत्यर्थः। जगम्या अत्यर्थं शीघ्रमागच्छेत्यर्थः। एत्य च पितुर्न। नशब्द उपरिष्टादुपचारत्वादुपमार्थीयः। पितुरिव। पातम्। पा रक्षणे इत्यस्य नपुंसके भावे क्तः (पा. ३. ३. ११४) इति क्तप्रत्यये एतद्रूपम्। पातं रक्षणम्। यथा कश्चित् पितुः रक्षणं आधत्ते तद्वत् भवानपि अस्माकं आदधीत अदधातु। करोत्वित्यर्थः। वेधाः मेधावी भवान्। किं पुनः कुर्वन् रक्षणं करोतु। उच्यते। अस्मिन् क्षये निवासे अस्मदीयां प्रतरां प्रकृष्टतराम्। सम्पदमिति वाक्यशेषः। दीद्यानः ध्यायन्। कुर्वन् इत्यर्थः॥

वामदेवः। आववृत्युः आत्माभिमुखं वर्तयेयुः। त्वा त्वाम्। सखायः स्तोतारः। सख्या सख्येन। तिरः तिरस्कृतोऽपि। पुरु चित् बहु एव।

अणवान् अन्तरिक्षात् जिगम्या आगच्छ। अथ परोक्षस्तुति । पितुमदीयस्य नपात पौत्रम्। मम पुत्रमित्यथ । आदधीत वेधा विधाता इन्द्र । अस्मिन् क्षये निवासे प्रतरा दीद्यान अतिशयेन दीप्यमान ॥ (९)

## को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्। आसन्नेषामप्सुवाहो मयोभून् य एषा भृत्यामृणधत्स जीवात् ॥

गोतमस्यार्षम्। क पुण्यवान् आदित्यस्तुतिकरणद्वारेण युङ्क्ते नियुङ्क्ते। क पुनर्नियुङ्क्त । उच्यत । इन्द्रस्य स्वभूतस्य रथस्य धुरि धुरायामित्यर्थ । का पुनर्नियुङ्क्त । उच्यते । गा । गोशब्देनात्र समय योगात् अश्वा उच्य त । अश्वानित्यर्थ । ऋतस्य सत्यस्य सर्वगतस्य वा इन्द्रस्य स्वभूतान्। कीदृशम्येन्द्रस्य स्वभूतान्। उच्यते। शिमीवत । शिमीति कर्मनाम । तद्यस्यास्ति स शिमीवान्। तस्य शिमीवत कर्मवत इन्द्रस्य स्वभूतान्। भामिन शत्रूणामुपक्रुद्धस्य । अथवा अश्वस्य विशेषणे एते । न इन्द्रविशेषण । शमनवतोऽश्वान् शत्रूणामुपक्रुद्धान्। दुर्हृणायून् कुत्सित क्रोधानित्यर्थ । आसन् एषा अप्सुवाह । अप्सु निमित्तभूतासु य वहन्ति ते अप्सुवाह उदकस्य पातयितार । तान्। मयोभून् स्तोतॄणा यष्टॄणा सुखस्य भावयितॄन्। य एषामश्वाना भृत्या भृतिम्। का पुनरेषा भृति । मृजायन्धनाश्रित यव । ऋणधत्। ऋण वृद्धौ इत्यस्यद रूपम्। ता यो वर्धयतीत्यर्थ । स जीवात् स जीवति सुजीवितम्। स क पुण्य वानित्यर्थ ॥

गौतम । इन्द्रस्य स्तूयमानस्य दर्शनादियमुच्यते। क स्तोता अद्य स्तुतिभि ऋतस्य सत्यस्य इन्द्रस्य। गा अश्वान्। धुरि रथस्य युङ्क्त। गच्छन्तीति गावोऽश्वा । शिमीवत कर्मवत । भामिन दीप्तिमन्त । इन्द्रस्य

दृढणायून् दुरन्तकहिंसाकामान्। अप्सुवाहः। अप्सु अन्तरिक्षे वहन्तीति अप्सुवाहः। मयोभून् सुखस्य भावयितॄन्। गा इत्यस्य व्यवहिते अप्यश्व-विशेषणे। आसन् आस्येन। स्तोत्रेणेत्यर्थः। आस्यशब्दस्य पद्दन् (पा. ६. १. ६३) इत्यादिना शस्प्रभृतिषु आसन्नादेशः। तृतीयैकवचनस्य लुक्। एषा गवा स्तोत्रेण कः इमान् धुरि युङ्क्ते इति योजना। यो जनः एषामश्वानां भृत्या भरणम् ऋणवत् ऋणयात् समर्पयेत्। स जनः जीवात् जीवेत् चिरकालम्॥ (१०)

चतुर्थे पञ्चमी दशती

---

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे॥

मधुच्छन्दस आर्षम्। गायति अर्चतिकर्मा। गायन्ति स्तुवन्तीत्यर्थः। त्वा त्वाम् गायत्रिणः। गायत्रं साम। तदेषामस्ति ते गायत्रिणः। उद्गातार इत्यर्थः। न केवलमुद्गातारः। किं तर्हि। अर्चन्ति अर्कं देवम् अर्किणः। अर्को मन्त्रः। स येषामस्ति ते अर्किणः। मन्त्रवन्तो होतारोऽपीत्यर्थः। ब्रह्माणः। ब्रह्मा नाम एक ऋत्विक्। तत्पुरुषा ब्रह्माणः। सभ्यादीनामपेक्षया बहुवचनम्। ब्रह्मादयः त्वा हे शतक्रतो। शतमिति बहुनाम। क्रतुरित्यपि कर्मनाम। बहूनि कर्माणि वृत्रवधादीनि यस्य बह्वयो वा प्रज्ञा यस्य स शतक्रतुः। तस्य सम्बोधनं हे शतक्रतो। बहुकर्मन् बहुप्रज्ञ वेत्यर्थः। उद्वंशमिव येमिरे। उदित्ययमुपसर्गो येमिरे इत्याख्यातेन सम्बन्धयितव्यः। यथा कश्चिद्वंशमुद्यच्छति उत्क्षिपति। उच्छ्रयाचात्र वीर्यविवृद्धिरभिप्रेता। स्तूयमाना च देवता वीर्येण वर्धते। स्तुतिं कुर्वन्तो वीर्येण वर्धयन्तीत्यर्थः॥

सन्त्यष्टाविंशति ऋचा गायन्ति त्वेत्यनुष्टुभम् ।
यदा वहन्त्यागार इत्यनया मरुता स्तुति ॥
दधिक्राव्ण इति त्वस्या दधिक्राग्निरीडित ।
इन्द्राग्न्या कस्यपस्यति मित्रावरुणया परे ॥
आश्विना स्तुतिरित्यके सवायन्तोऽग्निस्त्विव ।
वयश्चिदित्युपन्येय वैश्वदेवी त्वमा इति ।
ऋङ्मामया स्तुतिस्च सामत्येन्द्रयाऽपरा ऋच ॥

मधुच्छन्दा । गायन्ति स्तुवन्ति त्वा त्वा गायत्रिणा गीतिमन्त उद्गातार । अर्चन्ति अर्क अचनायम् । अर्किण शस्त्रिण होतार । एव ब्रह्माण उद्गातार होतारश्च उद्यमिरे उद्गच्छन्ति । त्वा ह शतक्रना शतकमन् शतप्रज्ञति वा । वशमिव वहव पुरुषा ॥ (१)

इन्द्र विश्वा अवीवृधन् समुद्रव्यचस गिर ।
रथीतम रथीना वाजाना सत्पतिं पतिम् ॥

जता नाम ऋषि । तस्यन्मार्षम् । इन्द्र विश्वा सवा । अवावृधन् वर्धयितवन्त । वर्धयन्तु । कीदृशमिन्द्रम् । उच्यते । समुद्रव्यचसम् । समुद्रम्यव व्यच व्याप्तियस्य स समुद्रव्यचा । त समुद्रव्यचसम् । समुद्र व्याप्तिमित्यर्थ । का पुनस्ता वर्धयन्ति । उच्यते । गिर स्तुतय । कादृशमिन्द्रम् । उच्यते । रथीतम रथीनाम् । वाजानाम् । पष्ठीनिर्देशात् पतिमितिपतन सम्बन्ध । अन्नाना पतिम् । सत्पतिं सता च पालयितारम् ॥

जता माधुच्छन्दस । इन्द्रमव अवावृधन वर्धयन्ति । विश्वा गिर स्तुतय । समुद्रव्यचस समुद्रस्य अन्तरिक्षस्येव व्यचा व्याप्ति यस्य तम् । रथीतम रथितमम् । रथीना रथिनाम् । वाजाना अन्नाना बलाना वा । पतिं स्वामिन सत्पतिम् । ज्यशाना अधिपतिम् । इन्द्रो ज्यशानामधिपति इति हि निगमा भवति ॥ (२)

इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन् धारा ऋतस्य सादने ॥

गोतमस्यार्षम् । इमं इन्द्र सुत अभिषुतं सोमं पिब । कीदृशं सोमम् । उच्यते । ज्येष्ठ अतिशयेन प्रशस्यम् । अमर्त्यममरणधर्माणम् । मदं मदकरम् । शुक्रस्य शुक्रसंज्ञकस्य ग्रहस्य । धारा त्वा अभि । अभिशब्दः अभिरभागे (पा. १. ४. ९१) इत्येवं कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । त्वा प्रति । अक्षरन् क्षरितवन्त क्षरन्तु । का । धारा । ऋतस्य यज्ञस्य सम्बन्धिनि सदने वेद्याख्ये स्थाने इत्यर्थः ॥

गोतम. । इम सुतं अभिषुत सोम पिब हे इन्द्र । ज्येष्ठं प्रशस्यतरम् । अमर्त्य अमर्त्यताहेतुम् । मद मदकर इति विशेषणं वा संज्ञैव वा सोमस्य मदः इति । शुक्रस्य दीप्तस्य सोमस्य । धारा: त्वा त्वा अभि उद्दिश्य । अक्षरन् दशापवित्रे द्रोणकलशं प्रति । ऋतस्य यज्ञस्य सादने गृहे यज्ञवास्तुनि ॥ (३)

यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभया हस्त्या भर ॥

अत्रिरार्ष । हे इन्द्र चित्र विचित्र पूज्य वा । यत् मे इह गृहे नास्ति । त्वादातं त्वया दातव्यम् । त्वदेयमित्यर्थ । हे अद्रिव. । अद्रिर्वज्रः । स यस्यास्ति स अद्रिवान् । तस्य सम्बोधनं हे अद्रिव । वज्रवन्नित्यर्थ. । राधः धनं तत् । न· अस्मभ्यं हे विदद्वसो । विद्लृ लाभे इत्यस्यैदं रूपम् । वसुशब्द धनवचन । तत् लब्धं येन स विदद्वसु. । तस्य सम्बोधनं हे विदद्वसो । लब्धधन इत्यर्थ. । उभया । उभयशब्दादुत्तरस्य तृतीयाद्विवचनस्य सुपां सुलुक् (पा. ७. १. ३९) इति या

आदेश । उभाभ्यामित्यर्थ । हस्त्या । हस्तशब्दादुत्तरस्य तृतीयाद्विवचनस्य सुपा सुलुक् (पा ७ १ ३९) इति या आदेश । हस्ताभ्यामित्यर्थ । आभर आनय । देहीत्यर्थ ॥

अत्रि. । यत् राध धन हे इन्द्र । चित्र पूजनीय । इद मे मम । नास्ति इह लोक अद्रिव अद्रिवन् वज्रिन् । तत् राध न अस्मभ्य उभया हस्त्या उभाभ्या हस्ताभ्या सगृहीतम् । आभर आहर । त्वादात त्वया देयमित्य । हे विदद्वसो । वदयति लम्भयति वसूनाति विदद्वसु ॥ (४)

श्रुधी हव तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥

तिरश्चिर्ऋषि । तस्यार्षम् । श्रुधि शृणु । हवम् आह्वानम् । तिरश्च्या ऋष मम हे इन्द्र । कीदृशस्य ऋषेः शृणोति । उच्यते । यस्त्वा सपर्यति । सपर्यतीति परिचरणकर्मा । प्रथमपुरुषैकवचनमिदमुत्तमपुरुषैकवचनस्य स्थाने द्रष्टव्यम् । योऽहं त्वा परिचरामीत्यर्थ । अथवा तिरश्चि आत्मानमत्र परोक्षरूपेण प्रतिनिर्दिशति । यस्त्वा परिचरति । सुवीर्यस्य । वीर्य सामर्थ्यम् । शोभन यागकरणसामर्थ्य यस्य स सुवीर्य । तस्य सुवीर्यस्य । यागकरणसामर्थ्यस्येत्यर्थ । गोमत । गोशब्देनात्र सोम उच्यते । सोमवत इत्यर्थ । श्रुत्वा च आगच्छ । एत्य च रायो धनम् । पूर्धि पूरय देहीति वा । कस्मात्पुनर्देहीति । उच्यते । महान् असि ॥

तिरश्चिराङ्गिरस । श्रुधि शृणु । हव स्तोत्रम् । तिरश्च्या तिरश्चे मम हे इन्द्र । य तिरश्चि त्वा त्वा सपर्यति परिचरति । श्रुत्वा च हव सुवीर्यस्य शोभनवीर्यस्य । गोमत गोभिर्युक्तस्य । राय धनस्य । पूर्धि पूरय अस्मान् । पूरयते योगे करणे प्रायः षष्ठ्येव दृश्यते । महान् प्रवृद्ध असि त्व सर्वे धनादिभि ॥ (५)

असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियं रज सूर्यो न रश्मिभिः ॥

गोतमस्यार्षम् । असावि अभिषुत सोम हे इन्द्र । ते त्वदर्थम् । एतत् ज्ञात्वा हे शविष्ठ अतिशयेन बलवन् । धृष्णो शत्रूणामभिभवित । आगच्छ । आगत च सन्तं त्वा त्वा पृणक्तु । पृणि पूरणार्थ । आपूरयतु त्वामित्यर्थ । इन्द्रियम् । अन्तर्णीतमत्वर्थमिद द्रष्टव्यम् । इन्द्रियवन्तम् । अविकलेन्द्रियमित्यर्थ । कथ पुनरापूरयतु । उच्यते । रज सूर्यो न रश्मिभि । रज शब्द लोकवचन । नशब्द उपमार्थीय । सूर्य लोकमिव । एतदुक्त भवति । यथा पृथिवीलोक अन्तरिक्षलोक च सूर्य रश्मिभि आपूरयति तद्वत् आपूरयतु ॥

गौतम । असावि सुत आसीत् सोम हे इन्द्र । ते त्वदर्थम् । हे शविष्ठ शूरतम । धृष्णो धर्षक शत्रूणाम् । अत आगहि आगच्छ । आपृणक्तु त्वा पूरयतु त्वाम् । इन्द्रिय वल सोमपानार्थम् । रजः अन्तरिक्षम् । सूर्यो न सूर्य इव रश्मिभि. ॥ (६)

एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥

नीपातिथिराह । आ इत्ययमुपसर्ग याहीत्याख्यातेन सम्बन्धयितव्य । आयाहि हे इन्द्र हरिभि आत्मीयैरश्वै । उप समीपे । कथ पुनरागच्छामि । उच्यते । कण्वस्य सुष्टुतिम् । लुप्तोपमैतद्द्रष्टव्यम् । कण्वस्य स्तुतिमिव । एतदुक्त भवति । यथा कण्वस्य स्वभूता शोभना स्तुतिं प्रति आगच्छति तद्वत् आगच्छेत्यर्थ । कुत पुनरागच्छामि ।

उच्यते । दिव द्युलोकादित्यर्थ । कृते च कार्ये अमुष्य । षष्ठ्येकवचनमिदं पञ्चम्येकवचनस्य स्थाने द्रष्टव्यम् । अमुष्मात् पृथिवीलोकात् । शासत । पञ्चम्येकवचनमिदं प्रथमैकवचनस्य स्थाने द्रष्टव्यम् । शासन् । ये तव द्युलोकं प्रति गच्छत असुरा विप्रकुर्वन्ति तान् शासन् प्रशासयन्नित्यर्थ । दिव द्युलोकं यय प्रतिगच्छ । हे दिवावसो दीप्तधन ॥

काण्वो नीपातिथिः । आयाहि हरिभिः हे इन्द्र । कण्वस्य पुत्रस्य मम नीपातिथेः सुष्टुतिमुप प्रति । दिवो लोकस्य अमुष्य दूरे दृश्यमानस्य । शासतः ईशानस्य । अमु लोक शासत इत्यर्थः । अधीगर्थदयेशां कर्मणि (पा. २. ३. ५२) इति शेषे वर्तमानस्य शास्तेः योगात् कर्मणि षष्ठी । ईदृशस्य तव दिवं स्तुतिम् । ययेति याते. प्रापणकर्मणो लडर्थे लिटि उत्तमपुरुषैकवचनम् । ण्यर्थोऽप्यन्तर्णीतः । प्रापयामि । हे दिवावसो दीप्तावासक ॥(७)

आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
अभि त्वा समनूषत वत्सं न धेनवः ॥

तिरश्चिराह । आ इत्ययमुपसर्ग अस्थुरित्याख्यातेन सम्बध्यते । आ अस्थु आस्थितवत्य । आश्रिता इत्यर्थ । त्वा त्वाम् । गिरः अस्मदीया स्तुतय । कथं पुनराश्रिता । उच्यते । रथीरिव यथा कश्चिद्रथी रथं आतिष्ठति तद्वत्त्वामाश्रिता इत्यर्थ । कस्मिन् काले । उच्यते । सुतेषु अभिषुतषु सोमेषु । गिर्वण । गिर. स्तुतय· । ताभिर्यो वन्यते सम्भज्यते स गिर्वण । तस्य सम्बोधनं हे गिर्वण· । गीर्भिः सम्भजनीय इत्यर्थः । किंच अभि त्वा आभिमुख्येन त्वा समनूषत समनूषयन्ति । संशब्दयन्ति मदीया ऋत्विजः । कथं पुनः संशब्दयन्ति । उच्यते । गावो वत्सं न यथा गाव· वत्सं संशब्दयन्ति तद्वदित्यर्थः । कीदृश्यो गाव· शब्दयन्ति । उच्यते । धेनवः अचिरप्रसूता इत्यर्थ ॥

तिरश्चि अस्याः परस्याश्च । आ अस्थुः त्वा त्वाम् । गिरः स्तुतयः । सुतेषु सोमेषु । तत्र हृदय आरोहन्तु इत्यर्थः । रथीरिव रथवानिव रथम् । हे गिर्वणो गीर्भिर्वननीय । अभि समनूषत अभिसंस्तुवन्ति त्वा स्तोतारः । गावः वत्सं न धेनव ॥ (८)

एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वान् ममत्तु ॥

तिरश्चि आह आत्मीयानृत्विजः । आ इत आगच्छत । उ इति पदपूरणः । नु क्षिप्रम् । किमर्थं पुनरागच्छाम । उच्यते । इन्द्रं स्तवाम इन्द्रं स्तोतुमाशास्महे । कीदृशमिन्द्रम् । उच्यते । शुद्धं शुद्धेन शुद्धसंज्ञकेन साम्ना । न केवलेन साम्ना । किं तर्हि । शुद्धैः उक्थैः स्तोत्रैश्च । कीदृशमिन्द्रम् । उच्यते । वावृध्वांसं वृद्धम् । वर्धयन्तमित्यर्थः । शुद्धः इन्द्रः आशीर्वान् । सोममिश्रितं दधि आशिरमुच्यते । तद्यस्यास्ति सः आशीर्वानिन्द्रः । स ममत्तु अत्यर्थं तृप्यतु । कस्य । सामर्थ्यात्तस्यैव दधिमिश्रितस्य ॥

आ इत उ इति त्रयाणां समुदायः एतो इति । आगच्छ हे स्तोतारः नु क्षिप्रं इन्द्रं स्तवाम वयम् । शुद्धमिन्द्रं शुद्धेन साम्ना । शुद्धैरुक्थैः शस्त्रैः । वावृध्वांसं वृद्धं इन्द्रम् । वृधेर्लिटः क्वसोः रूपं वावृध्वानिति । शुद्धैः इत्यस्य विशेष्याश्रवणादुक्थैः इति पुरस्ताच्छ्रवणात् स्तोत्रैः इति अध्याहार्यम् । शुद्धः स्तोत्रैः आशीर्वान् आशीःसंयुक्तः ममत्तु मादयतु इन्द्रम् ॥ (९)

यो रयिं वो रयिंतमो यो द्युम्नैर्द्युम्नवत्तमः ।
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥

द्वयोरार्षम् । यः रयिवः । रयिरिति धननाम । तद्यस्यास्ति स रयिवान् धनवान् । तस्य सम्बोधनं हे रयिवः । धनवन्नित्यर्थः । रयिंतमः

धनतम । सर्वधनेभ्य प्रकृष्ट इत्यर्थ । यश्च द्युम्नै सवनीयपुरोडाशादिभि अन्नैर्यानि वा यागस्य फलभूतानि यजमानेभ्यो ददाति तै द्युम्नवत्तम । सोम सुत अभिषुत स हे इन्द्र ते तवार्थाय अस्ति विद्यते अस्मद्यज्ञे हे स्वधापते । तेन सोमेन मद तृप्यस्व ॥

शयु बार्हस्पत्य । य सोम रयि धनम् । प्रयच्छति इति शेष । व इति वचनव्यत्यय । तव ये परिचारका ते इत्यर्थ । रयितम । रयि शब्दात् व्रीह्यादित्वादिनि । यश्च द्युम्नै यशोभि तद्वत्तम । द्युम्नानि च प्रयच्छतीत्यर्थ । स सोमो मद मदकर हे इन्द्र ते त्वदर्थ सुतोऽभिषुत । अस्ति विद्यते । तिष्ठतीत्यर्थ । हे स्वधापते अन्नपते सोमपते । तमागत्य पिब इति शेष (१०)

इति चतुर्थे षष्ठी दशती

---

प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरंगमाय जग्मयेऽपश्चादध्वने नर ॥

भरद्वाजस्यार्षम् । आत्मीयमध्वर्युमाह । अस्मै इन्द्राय । पिपीषते पातुमिच्छते । विश्वानि सर्वाणि ग्रहचमसादीनि पात्राणि । विदुषे यत्किंचित् ज्ञेय तस्य सर्वस्य ज्ञात्रे । प्रतिहर । प्रतिशब्द धात्वर्थानुवादी लभ्यते प्रलभ्यते इति यथा । भर । भरतेरेतच्च हरते रूप हृग्रहोर्भश्छन्दसि (वा ८. २ ३२) इति हकारस्य भकारापत्या । हर । होमार्थमा

ह्वर्नीयदेशं नय। अथवा प्रतिशब्दो लक्षणाकर्मप्रवचनीयः। प्रतिहर अध्वर्यो। कीदृशाय इन्द्राय। उच्यते। अरंगमाय। अरं अलं पर्याप्तं शत्रून् प्रति गमनाय। जग्मये गन्त्रे गमनशीलाय। अपश्चाद्दघ्वने। दघ्नातिर्गतिकर्मा। अपश्चाद्गामिने इत्यर्थ। नर प्रथमैकवचनमिदं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्। नराय मनुष्याकाराय ॥

भरद्वाजः। प्रतिभर उपहर सोमं अध्वर्यो। अस्मै इन्द्राय। पिपीषते पातुमिच्छते। विश्वानि वेद्यानि विदुषे। अरङ्गमाय पर्याप्तगमनाय क्षिप्रगमनाय इति वा। जग्मये गमनशीलाय यज्ञान् प्रति। अपश्चाद्दघ्वने। दघिर्गतिकर्मा। पश्चादर्थे पश्चेत्यव्ययम्। पश्च पश्चा च छन्दसि (पा. ५. ३. ३३) इति। *अग्रगामिने इत्यर्थ.। नर इति नृशब्दाच्चतुर्थ्यर्थे षष्ठी। ऋतो गुणश्छान्दसः।* अपश्चाद्दघ्वने नरे (ऋ. वे. ६. ४२. १) इति बह्वृचा अधीयन्ते। नरे नायकाय विश्वस्य ॥ (१)

आ नो वयो वयःशयं महान्तं गह्वरेष्ठाम्।
महान्तं पूर्विनेष्ठामुग्रं वचो अपावधीः ॥

वामदेवस्यार्षम्। यस्त्वं महान्तं गह्वरेष्ठाम्। गह्वरे पर्वतदेशे यस्तिष्ठति स गह्वरेष्ठा· मेघ। तं गह्वरेष्ठाम्। अपावधीरित्येतत्पुरस्तादपकृष्टव्यम्। प्रथमपुरुषैकवचनमिदं मध्यमपुरुषैकवचनस्य स्थाने द्रष्टव्यम्। अपावधीरिति। यस्त्वं महान्तं गह्वरेष्ठा अपावधी। यश्च त्वं महान्तं पूर्विणेष्ठाम्। पूरणसमर्थं पूर्वं बहु उदकम्। तदस्यास्ति स पूर्विण उदकवान् मेघ। तस्मिन् हन्यमाने य· प्रत्यननिष्ठते त्वदीय. पुत्र पौत्रो वा स पूर्विणेष्ठा·। तं पूर्विणेष्ठाम्। यस्त्वमपावधी। यश्च त्वं उग्रं वच. अप्रसह्यं वचनं शत्रो. स्वमूतं अपावधी तं त्वा ब्रूम ॥

वामदेव । आ इत्युपसर्गदर्शनात् योग्यक्रियापदाध्याहार । आहर नः अस्मभ्यम् । रयिमिति शाप । वयो वय शय वयसि अन्ने यौवनादिषु वा गत प्राप्तम् । शयतें शय । सर्वान्निमावक्रमिति वा सर्वास्वप्यासु अनुगतमिति वा । महान्त अपरिमितम् । गह्वरेष्ठाम् । गह्वरे गुहाया निष्ठतीति गह्वरेष्ठाः । आतो मनिन्क्वनिप्वनिपश्च (पा. ३. २ ७४) इति चकारात् निष्ठतेर्विट्-प्रत्यय । अनपहार्यमित्यर्थ । महान्तमिति पुनर्वचन अर्थभूयस्त्वाय । अथवा महान्तमिति । पूर्विणष्ठाम् । पूर्वमिष्ट पूर्विणम् । गम्भीरेभि पथिभिः पूर्विणेभिः (ऋा. म. १. ६) इति निगम । पूर्वेषु स्थितम् । कुलक्रमागतमिति यावत । पुत्रो वा अनया प्रार्थ्यते । वया वय शयमिति पूर्वोपयुक्त मत्रनि । गह्वरेष्ठामिति रहस्येषु यज्ञेषु निष्ठितमिति । पूर्विणष्ठामिति पुरातने मार्गे वेदात्मके निष्ठितमिति । उग्र वच शत्रुभि दुर्धर्ष उग्रत वचः अभिमननाविन्नम् । अपावृणी अपजहि । छन्दसि लुङ्लङ्लिट (पा. ३. ४. ६) इति लोडर्थे लुङ् ॥ (२)

आ त्वा रथं यथोतये सुम्नाय वर्तयामसि ।
तुविकूर्मिमृतीषहमिन्द्रं शविष्ठ सत्पतिम् ॥

प्रियमेधा आह । आ इत्ययमुपसर्ग. वर्तयामसीत्याख्यातेन सम्बन्धयितव्य । आवर्तयाम स्तुतिभि हविर्भिश्च अभिमुखं कुर्म इत्यर्थ । त्वा त्वाम् । रथं यथा । यथा कश्चित् रथमावर्तयति तद्वदावर्तयाम । किमर्थम् । उच्यते । ऊतये अवनाय पालनाय । सुम्नाय सुखाय । कीदृश त्वाम् । उच्यते । तुविकूर्मिम् । तुवीति बहुनाम । कूर्मि कर्ता । बहूना वृत्रवधादीना कर्मणा कर्तारम् । ऋतीषहम् । ऋनय सेना शत्रूणाम् । ता य सहते अभिभवति स ऋतीषाट् । त ऋतीषाहम् । परकीयाना सेनाना अभिभवितारमित्यर्थ । इन्द्र शविष्ठ । सम्बुद्ध्येकवचनमिद द्वितीयैक वचनस्य स्थाने द्रष्टव्यम् । शविष्ठं अतिशयेन बलवन्तम् । सत्पतिं सता पालयितारमित्यर्थ ॥

प्रियमेधा । आवर्तयामसि आवर्तयाम. अभिवर्तयामः स्तुतिभि । ऊतये तर्पणाय रक्षणाय वा । सुम्नाय सुखाय चास्माकम् । रथ यथेति जगन्निर्वाहकत्वादुपमा । तुविकूर्मि बहुकर्माणम् । ऋतीषह ऋतीना अरीणा सोढार अभिभवितारम् । इन्द्रमीश्वरम् । सत्पतिं त्वा हे शविष्ठ शूरतम ॥　　(३)

स पूर्व्यो महोनां वेनः क्रतुभिरानजे ।
यस्य द्वारा मनुः पिता देवेषु धिय आनजे ॥

प्रगाथ आह । स मनुष्य पूर्व्य प्रथम इत्यर्थ । महोनाम् । घकारस्य हकारापत्ति छान्दसी । मघोना मघवता धनवता मध्ये । वेन कान्त. । क्रतुभि कर्मभि ज्योतिष्टोमादिभि । आनजे व्यक्तीकरोति आत्मानम् । स प्रथम याग करोतीत्यर्थ । यस्य द्वारा द्वाराणि । सामर्थ्यात् आधानादीनि । मनुर्ज्ञाता सर्वस्य इन्द्र । पिता पालयिता । देवेषु देवाना मध्ये । धिय यागविषया प्रज्ञा । बुद्धीरित्यर्थ । आनजे । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु इत्येतस्य गत्यर्थस्य अन्तर्णीतण्यर्थस्य चेदं रूपम् । आगमयति । उत्पादयतीत्यर्थ । एतदुक्त भवति । यस्य यागद्वारभूतानि आधानादीनि यागविषयाश्च बुद्धी सर्वस्य ज्ञाता इन्द्र उत्पादयति । स प्रथम याग करोतीति समस्तार्थ ॥

प्रगाथः । स इन्द्रः । पूर्व्य मुख्यः । महोना महीयमानाना पूज्यानाम् । वेन प्राज्ञ कमनीयो वा । क्रतुभि कर्मभिः सर्वे. । आनजे प्राप्यते । अज गतौ । यस्य इन्द्रस्य द्वारा द्वारभूतेन । मनुः प्रजापति. । पिता पितृसम. । तस्य देवेषु इन्द्रियेषु । धिय प्रज्ञानानि । आनजे निक्षिप्तवान् । अज क्षेपणे । इन्द्रो हि *प्राणाः । तदधिष्ठितानीन्द्रियाणि ज्ञानानि जनयन्ति । अत. इन्द्रस्य* स्वभूतानि इन्द्रियाणि इत्युच्यते　　(४)

यदी वहन्त्याशवो भ्राजमाना रथेष्वा ।
पिबन्तो मदिरं मधु तत्र श्रवांसि कृण्वते ॥

श्यावाश्व्यापम् । यदीत्यथ यत्रेत्येतस्य स्थाने । यत्र यजमानगृहे । वहन्ति । रथेषु आ इत्ययमाकार पुरस्तादपकृष्यते । आवहन्ति । कं आवहन्ति । प्रकृतत्वादिन्द्रम् । के आवहन्ति । सामर्थ्यात् अश्वा । कीदृशा अश्वा । उच्यते । आशव शीघ्रा । भ्राजमाना विविध दीप्यमाना । रथेषु नियुक्ता सन्त इति वाक्यशेष । पिबन्ति मदिर मदकर मधु । तत्र तस्मिन् यजमानगृहे । श्रवांसि विविधानि अन्नानि । कृण्वते । करोति क्रियासामान्यवचन ददात्यर्थे वर्तते । ददते । यानि चात्र इन्द्र तेगनीन अन्नानि ददाति तानि ते एव ददते इति ह्युपदिश्यते ॥

श्यावाश्व आत्रेय । यदीत्यस्य यत्प्रातिपदिकार्थे वर्तते । यदि यत्र दशे । वहन्तीत्यनेन उपरितन आकार- सम्बन्ध । आवहन्ति । वहिर्गतिकर्मा । आगच्छन्ति । आशव क्षिप्रगामिन । रथेषु भ्राजमाना मरुतः । पिबन्तो मदिर मधु सोमम् । तत्र श्रवासि कृण्वते कुरुते वृष्टिद्वारा ॥ (९)

त्यमु वो अप्रहणं गृणीषे शवसस्पतिम् ।
इन्द्रं विश्वासाहं नरं शचिष्ठं विश्ववेदसम् ॥

शयोरार्षम् । त्यमित्ययं तच्छब्दपर्याय: । तच्छब्दश्रुतेश्च योग्यार्थ सम्बन्ध यच्छब्दोऽध्याह्रियते । य उत्तगुणोऽसि तम । उ इति पदपूरण । व । बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम् । त्वाम् । अप्रहणं केनचिप्रहर्तुमशक्यम् । गृणीषे । गृ स्तुताविवस्येदं रूपम् । मध्यमपुरुषैकवचन च उत्तमपुरुषैकवचनस्य स्थाने द्रष्टव्यम् । गृणे स्तौमीत्यर्थ ।

कीदृशम्। उच्यते। शवस पतिं बलस्य स्वामिनम्। कम्। इन्द्रम्। विश्वासाहं सर्वेषां शत्रूणामभिभवितारम्। नरं नराकारम्। शचिष्ठ अतिशयेन अन्नवन्तम्। विश्ववेदसं सर्वज्ञं सर्वधनं वा॥

शंयुः। त्वं तं इन्द्रम्। उः पूरणः एवार्थे वा। वः यूयम्। अप्रहण अप्रहन्तारम्। गृणीषे इति वचनव्यत्ययः। स्तुत। व इत्यत्र वा वचनव्यत्ययः। त्वं स्तुहि स्तोतः इति। शवसो बलस्य पतिम्। इन्द्र विश्वासाहं विश्वस्य शत्रोः अभिभवितारम्। नरं नेतारम्। शचिष्ठं शूरतमम्। विश्ववेदस विश्वस्य द्रष्टारम्॥ (६)

**दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।**
**सुरभि नो मुखा करत् प्र न आयूंषि तारिषत्॥**

वामदेवस्यार्षम्। दधन् अश्वरूपं य. क्रामति स दधिक्रावा। तस्य दधिक्राव्ण। अकारिषं करोम्यहम्। किम्। सामर्थ्यात्स्तुतीं। जिष्णो· शत्रूणां जेतु। अश्वस्य वाजिन· वेगवत। अथवा जिष्णुर्नामाश्वः। तस्य वाजिनः। स परितुष्टः न अस्माकं सुरभीणि मुखानि करत् करोतु। प्र ण आयूंषि तारिषत्। तरतिर्वृध्यर्थे। आयूंषि जीवितानि समपूरयत्॥

वामदेवः। दधिक्रावा अग्निविशेषः। अग्निस्तु पुरा अश्वरूपोऽवसदिति हि निगमः। अश्वरूपं कृत्वा यद्दधत्येऽतिष्ठत् देवेभ्यो निदाय इति। धारयति क्रामयति देशान्तरं प्रापयति इति दधिक्रावा अग्नि। कर्मेवनिन्प्रत्यये विड्वनोरनुनासिकस्यात् (पा. ६. ७. ४१) इति अनुनासिकस्याकारादेशः। दधिक्राव्णो देवस्य परिचरणम्। अकारिषमिति पञ्चमलकारान्तम्। करोतेर्लिङर्थे लेट् (पा. ३. ४ ७) इति लेटि कृते लेटो मिप्। लेटोऽडाटौ (पा. ३. ४. १४) इति मिपोऽडागमः। सिब्बहुलं लेट् (पा. ३. १. ३४) इति सिपि तस्य

आर्धधातुकस्येड्वलादे (पा ७ २ ३५) इति इडागम । सिब्बहुल छन्दसि णिद्वक्तव्य (वा ३ १ ३४-७) इति सिपो णिद्वद्भावस्यानुशासनात् अचो ञ्णिति (पा ७ २ ११५) इति वृद्धि । इतश्च लोप परस्मैपदेषु (पा ३ ४ ९८) इति इकारलोप । छन्दस्यपि दृश्यते (पा ६ ४ ७३) इति अडागम । अकारिष करवाणीति प्रार्थना । जिष्णा जयशीलस्य । वाजिन अन्नवत वेगवता वा अश्वस्य । स च दधिक्रावा सुरभि । शेश्छन्दसि बहुलम् (पा ६ १ ७०) इति शेर्लुक् । सुगन्धीनि शुद्धानि । करत् करातु । न अस्माकम् । मुखा मुखानि । प्रतारिषत् वर्धयतु च न आयूंषि ॥ (७)

पुरा भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥

जेता इन्द्रमाह । पुरा भिन्दु असुरपुराणा भेत्ता । युवा तरुण । कविमधावी । अमितौजा अपरिमितबल । अजायत जात । जन्मप्रभृति ईदृश इत्यर्थ । क । उच्यते । इन्द्र । विश्वस्य सर्वस्य । कर्मण दर्शपौर्णमासादे । भर्ता धारयिता । कथम् । सर्वस्य कर्मण वृष्टचायत्त त्वात् । वृष्टेश्च इन्द्रायत्तत्वात् । वज्री वज्रवान् । पुरुष्टुत बहुभिर्यजमानै स्तुत ॥

जेता । पुरा आसुरीणा भिन्दु भेत्ता । युवा नित्यमेव । कवि कमनीय । अमितौजा अपरिमितश्च अजायत । इन्द्र विश्वस्य शुभाशुभात्मकस्य कर्मण । धर्ता धारयिता विवेक्ता वज्री पुरुष्टुत । एवभूत इन्द्र जायमान एव अमितौजा अभवत् इत्यर्थ ॥ (८)

चतुर्थे सप्तमी दशती

---

प्र प्र वस्त्रिष्टुभमिषं वन्दद्वीरायेन्दवे ।
धिया वो मेधसातये पुरन्ध्या विवासति ॥

प्रियमेधस आर्षम् । प्र प्र । एक मदाब्द प्रसमुपोद पादपूरणे (पा. ८. १. ६) इति पादपूरणार्थं । प्रेत्युपसर्गश्रुने व इति च संप्रदानश्रुने ददातिक्रिया अघ्याह्रियते । प्रददामि व प्रकर्षेण ददामि युष्मभ्यम् । किम् । उच्यते । त्रिष्टुभमिष त्रिभि स्तुतमन्नमित्यर्थं । अथवा त्रिष्टुप्छन्दोयुक्तम् । स्तुतिसंयुक्तमित्यर्थ । कीदृशाय तुभ्यम् । वन्दद्वीराय अधिकविक्रान्ताय इत्यर्थ । इन्दवे । इदि परमैश्वर्ये इत्यस्य रूपम् । सर्वदेवाना परमेश्वरायेत्यर्थ । अपिच मदीय ऋत्विक् धिया स्वया प्रज्ञया । व । बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम् । त्वाम् । मेधसातये । अपठितमपि यज्ञनामैतत् द्रष्टव्यम् । चतुर्थ्येकवचनमिद सप्तम्येकवचनस्य स्थाने द्रष्टव्यम् । मेधसातौ । यज्ञे इत्यर्थ । पुरन्ध्या बहुविधेन दर्शपूर्णमासादिकर्मणा । आविवासति परिचरतीत्यर्थः ॥

प्रियमेधा । प्र प्र इति द्विरुक्तिः पादपूरणार्था । उपसर्गदर्शनाद्याख्याताध्याहार' । प्रभरत । वः यूयम् । त्रिष्टुभ त्रिस्तोत्रम् । इप अन्नम । सोममित्यर्थः । त्रिष्वपि अभिषवेषु पवमानस्य स्तुति क्रियते । स्तोमतेः स्तुतिकर्मण. स्तुप् । मन्दद्वीराय । मादयति वीरान् स्तोतॄन् इति मन्दद्वीरः । तस्मै । इन्दवे । इन्द्रशब्दस्य यन्निर्वचन तदत्र इन्दुशब्दे कर्तव्यम् । तत्र सग्रहेण किंचित् क्रियते । इरा ददातीति वा इन्देर्वा परमैश्वर्यकर्मण इन्द्रः । स च इन्द धिया स्तुत्या हेतुना । वः युष्मान् आविवासति अभिगच्छति । मेधसातये यज्ञसभजनाय । पुरन्ध्या पुरूणा धारयित्र्या धिया ॥ (१)

कश्यपस्य स्वर्विदो यावाहुः सयुजाविति ।
ययोर्विश्वमपि व्रत यज्ञं धीरा निचाय्य ॥

कश्यपस्यार्षम् । मम कश्यपस्येषं स्वर्विदं स्वर्गस्य लोकस्य द्रष्टु । यौ आहु सयुजौ अश्वौ इति । एवं स्थिते ययोरश्वयो विश्वं सर्वं अपि व्रतम् । व्रतशब्देनात्र कर्म वा अभिधीयते । ताविन्द्रस्याश्वौ यज्ञमस्मदीयम् । धीरा । बहुवचनमिदं द्विवचनस्य स्थाने द्रष्टव्यम् । धीरौ । निचाय्य नितरां चाययन्ति चेतयन्ति ॥

वामदेव । कश्यपस्य प्रजापते । आदित्यो वा कश्यप इति उच्यते। तथाहि केचिदामनन्ति ।

आरोगोभ्राज पटर पतङ्ग
स्वर्णरा ज्योतिषीमान् विभास ॥ (तै. आ. १. ७ १)

इति सप्तादित्यान् उक्त्वा—कश्यपोऽष्टम । स महामेरु न जहाति (तै. आ १. ७ १) इति । तथा—ते अस्मै सर्वे कश्यपात् ज्योतिर्लभन्ते (ते आ. १. ७. २) इति । अस्मै । अस्मादित्यर्थ । कश्यप पश्यको भवति। यत्सर्वं परिपश्यति इति कश्यपशब्दनिर्वचनं आमनन्ति (तै. आ. १. ८. ८) तस्य यौ देवौ सयुजौ सहचरौ इत्याहु । स्वर्विदं वेदविदं । विश्वमपि व्रतं कर्म जगद्विषयं वर्षधारणादिकं ययोरेव आहु । यज्ञं च प्रीणनं च ययोरेव आहु । धीरा प्राज्ञा । निचाय्य ज्ञात्वा प्रमाणयुक्तिभि । तौ मित्रावरुणौ । अहश्च मित्रो रात्रिर्वरुणः इति सर्वस्य कालस्य तयोरेव अन्तर्भावात् । इन्द्राग्नी वा तयोरेव सर्वनिर्वाहकत्वात् । अश्विनौ वा तयोरादित्यपुत्रत्वप्रसिद्धे ॥ (२)

अर्चत प्रार्चत नरः प्रियमेधासो अर्चत ।
अर्चन्तु पुत्रका उत पुरमिद्धृष्ण्वर्चत ॥

प्रियमेधा आत्मीयान् ऋत्विज आह । अर्चत पूजयत । इन्द्रस्तुन इत्यर्थ । प्रार्चत च प्रकर्षेण अर्चत । नर मनुष्या । यूयमपि हे प्रियमेधास प्रियमेधस पुत्रा अर्चन्तु । पुत्रका पौत्रा इत्यर्थ । एतेऽपि

अर्चन्तु । उतशब्दः पदपूरणः । कथम् । उच्यते । पुरमित् धृष्णु । इच्छब्द इवशब्दस्यार्थे । पुरमिव धृष्णु. । यथा कश्चित्पुमान् धृष्णुं दृढं अभिभवनं परकीयानां सेनानां अर्चति तद्वदर्चत इत्यर्थः ॥

प्रियमेधाः । अर्चत स्तुत । ऋच स्तुतौ । प्र प्रकर्षेण अर्चत हे नरः प्रियमेधासः । आत्मानमेव बहुवचनेन निर्दिश्य आह ऋषिः । अर्चत इति पुनरुक्तय आदरार्थाः । इन्द्रं अर्चन्तु पुत्रकाः मदीयाः । उत अपि च । पुरमित् पुरमिव । धृष्णु धर्षकं शत्रूणां इन्द्रं अर्चत ॥ (३)

उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिष्षिधे ।
शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥

मधुच्छन्दा आह । उक्थं इन्द्राय इन्द्रस्यार्थाय । शंस्यं शंसनीयम् । कीदृशम् । उच्यते । वर्धनं वर्धयितृ । कस्य । सामर्थ्यादिन्द्रस्य । कीदृशाय इन्द्राय । उच्यते । पुरुनिष्षिधे । पुरु इति बहुनाम । बहूनां शत्रूणां निषेधयित्रे इत्यर्थः । कथं पुनः शंस्यम् । उच्यते । शक्रः यथा सुतेषु अभिषुतेषु सोमेषु । न. अस्माकं स्वभूतेषु । रारणत् । रमेरेतद्रूपम् । छान्दसेन मकारस्य णत्वम् । अत्यर्थं रमते । न केवलं सोमेषु । किं तर्हि । सख्येषु च अस्माभिः सह सुतैः गुणप्रतिपादनमनेन प्रकारेण क्रियते । अधिगुणशंसिनो हि देवाः । यथा उक्थेषु सख्येषु च रमते तथा शंस्यम् ॥

मधुच्छन्दाः । उक्थं शस्त्रम् । इन्द्राय इन्द्रमुद्दिश्य । शंस्यं शंसनीयं युष्माभिः । वर्धनं इन्द्रस्य । पुरुनिष्षिधे बहूनां असुराणां निष्षिधे निषेधकाय इन्द्राय । शक्रः शक्तः इन्द्रः । सुतेषु सोमेषु । सख्येषु सखिकर्मसु स्तोत्रेषु च । नः अस्मदीयेषु । रारणत् भृशं रमते । रमेर्वर्णव्यत्ययः । रणिरेव वा रमेरर्थे वर्तते । यथा रारणत् तथा शंस्यम् ॥ (४)

विश्वानरस्य वस्पतिमनानतस्य शवसः ।
एवैश्च चर्षणीनामूती हुवे रथानाम् ॥

प्रियमेधस आर्षम् । तस्य विश्वानरस्य । व इति द्वितीयाबहुवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । त्वाम् । पतिं स्वामिनम् । न केवलस्य । अनानतस्य च शवस सर्वस्य बलस्य स्वामिनम् । एवैश्च । एवा कामा । तैश्च । निमित्तभूतैर्यान् यान् कामान् प्रार्थयन्ते तांस्तान् संपादयत्यनेन प्रकारेण कर्मनिमित्तभूतैः । चर्षणीनां मनुष्याणां स्वामिनम् । एवंगुणविशिष्टं भवन्तं ऊती । चतुर्थ्येकवचनस्य स्थानेऽयमीकारः । अवनाय पालनार्थम् । हुवे आह्वयामि । कस्य पालनार्थं आह्वयामि । उच्यते । रथानामात्मीयानाम् ॥

प्रियमेधाः । विश्वानरस्य विश्वान् प्रत्यृतस्य । विश्वनेतुः इति वा । अनानतस्य उच्छ्रितस्य । शवसो बलस्य पतिम । वः त्वाम् । विश्वानरस्य आदित्यस्य यत् शवः तत्पतिमिति यास्कः (नि. १२. २१) एवैः कामैश्च । चर्षणीना मनुष्याणाम् । तत् सपादयितुमित्यर्थः । रथाना ऊती ऊत्या पथा । रथ्येन मार्गेण अन्तरिक्षेण । अथवा रथानामेव पथा भूमावित्यर्थः । हुवे ह्वयामि ॥ (९)

स घा यस्ते दिवो नरो धिया मर्तस्य शमतः ।
ऊती स बृहतो दिवो द्विषो अंहो न तरति ॥

भरद्वाज आह । स इति ऊती स इति सशब्देन सम्बन्धयितव्यः । वीप्साश्रुतेः य इत्यत्रापि वीप्सा द्रष्टव्या । यो यः । घ इति पदपूरणः । ते । षष्ठ्येकवचनं द्वितीयैकवचनार्थे ज्ञेयम् । दिवः । इदमपि द्वितीयैकवचनान्तं द्रष्टव्यम् । दिवं दीप्तम् । नरः । इदमपि प्रथमैकवचनं द्वितीयार्थे ज्ञेयम् । नरं नराकारम् । धिया स्तुत्याख्येन कर्मणा । स्तौति इति वाक्य-

शेष । मर्त्यस्य । षष्ठ्येकवचनमिदं प्रथमैकवचनस्य स्थाने द्रष्टव्यम् । मर्त्य मनुष्य । शमतः । शमेस्तपआर्थस्य अन्तर्णीतण्यर्थस्य च शतरि एतद्रूपम् । शत्रूणामुपशमयितुः तव स्वभूतया । ऊती ऊत्या पालनेन । तया पाल्यमान इत्यर्थः । द्विष । द्वेष्टुः । अहो न पापमिव । तरति निस्तरति । अतिक्रामतीत्यर्थः ॥

भरद्वाजः । यः नरः । दिवः द्योतमानस्य । ते सखा स्तोता भवति । मर्तस्य मनुष्यस्य । धिया स्तुत्या । शमतः स्तूयमानस्य । शमिः स्तुतिकर्मा । शशमान इति हि स्तुतिकर्मसु पठितम् । परस्मैपदव्यत्ययभावो छान्दसौ । मनुष्याणां स्तोत्रैः अर्कैः स्तूयमानस्य तव यः सखा भवति स नरः । ऊती ऊत्या रक्षया । वृहन्तः महतः । दिवः द्योतनादियुक्तस्य तव ऊती इति सम्बन्धः । द्विषः द्वेष्टुर्जनस्य । अंहः अनर्थं कर्म । न तरति न प्राप्नोति ॥ (६)

विभोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो ।
अथा नो विश्वचर्षणे द्युम्नं सुदत्र मंहय ॥

अत्रिराह । दानहोमयागादिक्रियासु विभवतीति विभु प्रभूत । तस्य विभो । प्रभूतस्येत्यर्थः । ते तव स्वभूतस्य । हे इन्द्र राधस धनस्य । विभ्वी रातिः प्रभूतं दानमित्यर्थः । हे शतक्रतो बहुप्रज्ञ बहुकर्मन् वा । य एवं अथ एतस्मात्कारणात् । नः अस्मभ्यम् । हे विश्वचर्षणे विश्वस्य जगतः द्रष्टः । द्युम्नं धनम् । हे सुदत्र । शोभनं दत्तं दानं यस्य स सुदत्रः । तस्य सम्बोधनं हे सुदत्र । हे शोभनदान इत्यर्थः । मंहय । मंहतिर्दानकर्मा । देहीत्यर्थः ॥

अत्रिः । विभोः महतः । ते तव । राधसो धनस्य । रातिः दानम् । विभ्वी महती भवति । हे इन्द्र शतक्रतो शतकर्मन् । अथ अतः कारणात् ।

नः अस्मभ्यम् । शुभ्रं धनम् । महय प्रयच्छ । हे विश्वचर्षणे विश्वद्रष्टः । सुदत्र सुधन सुदानेति वा ॥ (७)

वयश्चित्ते पतत्रिणो द्विपाच्चतुष्पादर्जुनि ।
उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ॥

उपोदेवत्येयमृक् । प्रस्कण्वस्यार्षम् । वयश्चित् । चिच्छब्द इव-शब्दस्यार्थे । वय इव पक्षिण इव । ते नव स्वभूताः । पतत्रिणः पतनशीला गमनशीलाश्च । द्विपात् चतुष्पाच्च प्रति यावत्किंचिद्द्विपाच्चतुष्पाच्च तत्सर्वं प्रति । हे अर्जुनि । अर्जुन शुक्लो वर्णः । शुक्लवर्णे उषः । प्रारन् अर्तेर्गत्यर्थस्येदं रूपम् । प्रकर्षेण गच्छन्ति । कस्मिन् काले । उच्यते । ऋतून् अनु । ऋतुशब्द कालवचनः । अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थ । कालं प्रति । यो गमनकालस्तस्मिन् गच्छन्तीत्यर्थः । कुत गच्छन्ति । उच्यते । दिवः द्युलोकस्य अन्तेभ्यः परि । परीति अधिपरी अनर्थकौ (पा. १. ४. ९३) इत्येवं कर्मप्रवचनीयः पदपूरणः ॥

प्रस्कण्व. । वयः पक्षिणः । चिदित्युपमार्थे । पक्षिण इव । ते त्वदीयाः । पतत्रिणः वाहाः । द्विपाच्चतुष्पात् भूतजातम् । प्रारन् प्रगच्छन्ति हे अर्जुनि । अर्जुनीत्युषसो नाम । शुभ्रे उषः । ऋतून् कालान् अनु । त्वदागमनकालेष्वित्यर्थः । दिवः अन्तरिक्षस्य । अन्तेभ्यः पर्यन्तेभ्यः । परीति पञ्चम्यर्थानुवादकः ॥ (८)

अमी ये देवा स्थन मध्य आ रोचने दिवः ।
कद्व ऋतं कदमृतं का प्रत्ना व आहुतिः ॥

तृतस्यार्षम् । वैश्वदेवीयमृक् । अत्रेतिहासमाचक्षते । आप्तस्य ऋषेः त्रयः पुत्राः बभूवुः एकतः द्वितः त्रित इति । ते यष्टुकामाः याज्यान्

यजमानान् गा ययाचिरे लेभिरे च। ता आदाय गृह जग्मु। तद्गच्छत पथा सरस्वत्यास्तीरेण परस्मिन् कूले निषण्णो गवादक ददर्श। दृष्ट्वा चोत्थाय अभिमुख सारस्वतीरप अवतीर्य रात्रौ त्रासयामास। तेषा त्रासात् त्रस्यता तृत कूपे निर्जले तृणैर्वल्लीभिश्चावकीर्णे पपात। तस्य तत्र-स्थस्यैव मन प्रादुरभूत्। कृतयागसङ्कल्पस्य अकृतयागस्य मम मृत्युर्न श्रेयसे। तत्कथमिहस्थ एवाह सोम पिबेय इति। अन्ये तु पुन एतदेवेति-हासमन्यथा व्याचक्षते। एकतद्वितौभ्या स्वल्पा गावो लब्धा त्रितेन च बह्वय। तत ईर्ष्यया ताभ्या कूपे प्रक्षिप्त। स एव चिन्तयान एता गावो भ्रातृभि गृहीता न पूर्व मम कल्पिता। एव चिन्तयन् यदृच्छया तस्मिन् कूपे वीरुधमुत्तीर्णो ददर्श। स तामादाय सोमोऽयमिति मनसा निश्चित्य यागैश्वर्यमन्यानि अपि यागसाधनानि मनसा सङ्कल्प्य शर्करा अभिषवग्राव्ण कृत्वा ता वीरुधमभिषुषाव। अभिषुत्य च देवानाजुहाव। ते देवा आहूता सन्त आह्वानकारणमनवबुद्ध्यमाना आविग्ना बभूवु। तद्बृहस्पति शुश्राव। श्रुत्वा च देवानुवाच तृतस्य यज्ञो वर्तते। तत्र गच्छाम इति। ततस्ते देवा आजग्मु। स तानागतान् कूपादुत्तर-णार्थी तुष्टाव उपालब्धवाश्च। अमी य देवास्थन भवथ। तिष्ठथेत्यर्थ। व। उच्यते। मध्ये आरोचने दिव आदीप्ते दिव सम्बन्धिन्यादित्य मण्डले। यच्छन्दशुनेर्योग्यार्थसम्बन्धोऽत्र तच्छब्दोऽध्याहर्तव्य। तानह पृच्छामि। कदित्यव्यय क्वशब्दपर्याय। क ऋत सत्यम्। क्वामृतम्। चकारस्य स्थाने वकार। का। केत्यय क्वेत्येतस्य स्थाने। क प्रत्ना पुराणा। चिरतनेत्यर्थ। व युष्माक सम्बन्धिनी। प्रत्ना आहुति। एतदुक्त भवति। नष्टसत्यामत्यविवेका अकृतज्ञाश्च यूय येन मामस्मात्कूपात् नोत्तार यत इत्युपालम्भ। अथ द्वितीय पक्ष। अमी य देवा स्थन। देवा स्थ भवथ। मध्ये आदित्यमण्डले। आरोचने दिव द्युलोकादपि दीप्तत्र

स्थाने भाग गृहीतुमागता । कत् व ऋतम् । एतदुक्त भवति । ऋत मन्नम् । तदत्र नास्ति कृपे निर्जले । तत्कत् अमृत सोमाख्यम् । हविर्धाना *करम्भ पुरोडाश परीवाप पय उपवसथ्य पशुरग्नीषोमीय पशु सवनीय* एवमादिक हि तत् । अमृत च कात्र विद्यते । तस्मान्मम देवा याग मुद्दिश्य भवन्तोऽत्र समागता । ततस्तै कूपादुत्तारित ॥

आमन्त्रित । हे देवा अमी यूय स्थन भवथ त्रिषु स्थानेषु । आ इति पूरण । दिव सूर्यस्य मध्ये । रोचने प्रकाशे । वर्तमाने सतीति शेष । ते यूय इद ब्रूत इति वाक्यसमाप्ति । कत् किम् । व युष्मदीयम् । ऋत सत्यम् । किंच अनृतम् । सत्यानृतविभाग क इत्यर्थ । का व युष्मदीया । *प्रत्ना पुराणी* । आहुति दानम् । हु दानादानयो ॥ (९)

ऋच साम यजामहे याभ्या कर्माणि कृण्वते ।
वि ते सदसि राजतो यज्ञ देवेषु वक्षत ॥

वामदेवस्यार्षम् । ऋच साम यजामहे । याभ्यामृक्सामभ्या कर्माणि कृण्वते ऋत्विज । वि ते ऋक्सामनी सदसि राजत । यज्ञ देवेषु वक्षत वहता इत्यर्थ ॥

वामदेव । ऋच साम च तदभिमानिन्यौ देवते । *यजामहे प्रीणयाम* हविषा । याभ्यामृक्सामभ्या कर्माणि कृण्वते याज्ञिका । ते ऋक्सामे सदसि यज्ञसदसि राजत प्रकाशत स्तोत्रशस्त्ररूपाभ्याम् । ते च देवेषु देवानुद्दिश्य । यज्ञ हवि । विवक्षत इति पञ्चमलकारान्तम् । वहताम् ॥ (१०)

इति चतुर्थेऽष्टमी दशती

**विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे ।**
**क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥**

रेफस्यार्षम् । विश्वा पृतना· सर्वा सेना । अभिभूतरम् । नरः नराकार. । अथवा नर सैनिका । सजू सहित । . . . . उत अपिच उग्रं उद्गूर्णन् । ओजिष्टं बलवन्तम् । तरसं तरणमसर्थन् । तरस्विनं वेगवन्तमित्यर्थः ॥

सन्त्येकादश या विश्वाः पृतना अभिभूतरम् ।
जगत्य ऐन्द्र्यो रोदस्योः स्तुतिर्धृतवती इति ॥
जगतीमेद एवामी महापङ्क्तिरुमे इति ।
षडत्राष्टाक्षराः पादार्द्धश्चार्धर्चानवीमहे ॥

रेफः काश्यपः । विश्वाः पृतनाः सेनाः प्रतिद्वन्द्विनीः । तासामभिभूतरं अतिशयेन अभिभावुकं इन्द्रम् । नरः नेतारः यज्ञाना स्तोत्राणा वा । सजूः ततक्षुः तीक्ष्णं चक्रुः स्तुतिभिः यज्ञैर्वा । जजनुः चक्रुः । राजसे राजनाय । क्रत्वे कर्मणे असुरवधादिलक्षणाय । वरे श्रेष्ठे । स्थेमनि स्थाने स्थितम् । आमुरीं अभिमारण शत्रूणाम् । उत अपिच । उग्र ओजस्विनम् । ओजिष्टमतिशयेनोग्रम् । तरसम् । तरो बलम् । तद्वन्तम् । मत्वर्थीयलोपः । तरस्विनं अतिशयेन बलवन्तम् । अतिशायने मत्वर्थीयप्रत्ययः ॥ (१)

**श्रत्ते दधामि प्रथमाय मन्यवे ऽहन् यद्दस्युं नर्यं विवेरपः ।**
**उभे यत्त्वा रोदसी धावतामनु भ्यसात्ते शुष्मात्पृथिवी चिदद्रिवः ॥**

सुदेवस्य आर्षम् । श्रत् सत्यम् । ते तुभ्यम् । दधामि ददामि । प्रथमाय उत्कृष्टाय अग्र्याय । मन्यवे बलाय कोपाय वा । किम् । सामर्थ्यात् हविः । अथवा दधामि धारयामि । करोमीत्यर्थ· । किम् ।

सामर्थ्यात् स्तोमम् । कीदृशाय तुभ्यम् । उच्यते । प्रथमाय उत्कृष्टाय । मन्यवे दीप्ताय । कस्मात् पुनर्हविर्ददामि स्तोमं वा करोमि । उच्यते । अहन् यत् । यदित्यत्र पञ्चम्या लुक् । यस्मात् । अहन् हतवानसि । दस्युं मेघम् । हत्वा च नर्यं नृभ्यो हितम् । विवेः विविधं गमयसि अपः । क्व पुनर्गमयति । उभे । अत्रापि पञ्चम्या लुक् द्रष्टव्यः । उभयस्मात् । यत् यस्मात् । त्वा त्वा अनु इत्ययं पुरस्तादपकृष्टव्यः प्रतिशब्देन च समानार्थो द्रष्टव्य. । त्वा प्रति । रोदसी द्यावापृथिव्यौ । धावताम् । एकवचनमिदं द्विवचनस्य स्थाने द्रष्टव्यम् । लिङ् लडर्थे द्रष्टव्यः । धावतः । यस्मात् द्यावापृथिव्यावपि त्वां प्रति गच्छत इत्यर्थ. । यस्मादनुभ्यसात् । भ्यस भयचलनयो इत्यस्येदं रूपम् । बिभेति । ते तव स्वभूतात् शुष्मात् बलात् । पृथिवीत्यन्तरिक्षनाम । अन्तरिक्षम् । अन्तरिक्षग्रहणं च प्रदर्शनार्थम् । त्रयोऽपि लोका इत्यर्थ । चिच्छब्द· पदपूरणः । हे अद्रिवः अद्रिर्वज्रः । तद्वान् अद्रिवान् इन्द्रः । तस्य सम्बोधनं हे अद्रिव. । वज्रवन्नित्यर्थ· ॥

सुदेवः शौङ्गुषिः । श्रद्धामि ते त्वदीयाय । प्रथमाय पुराणाय । मन्यवे क्रोधाय । अमोघः ते मन्युः इत्यत्र निश्चयं करोमि । संकल्पो वा मन्युः । अहन् हतवान् असि । यत् येन मन्युना । दस्युमसुरम् । नर्यं नरहितम् । नर्यमिति क्रियाविशेषणम् । एतच्च वक्ष्यमाणस्य । येन च विवेः । वेतेः गतिकर्मणः अन्तर्णीतण्यर्थस्य रूपं विवेरिति । अगमयः अपः । अवेदयः अलम्भय इति वा । नरहितार्थं वर्षसीत्यर्थः । यत् येन च । त्वा त्वाम् । अनुधावता अनुगच्छताम् । उभे रोदसी द्यावापृथिव्यौ । किंच भ्यसात् । भ्यसतेः भयार्थस्य पञ्चमलकाररूपं भ्यसादिति । बिभीयात् । ते शुष्मात् बलात् । पृथिवी चित् पृथिव्यपि । अद्रिवः वज्रिन् । यस्य शुष्माद्रोदसी अभ्यसेताम् (ऋ. वे. २. १२. १) इति च मन्त्रान्तरम् ॥ (२)

समेत विश्वा ओजसा पतिं दिवो य एक इद्भूरतिथिर्जनानाम् ।
स पूर्व्यो नूतनमाजिगीषन् तं वर्त्तनीरनुवावृत एक इत् ॥

वामदेवस्यार्षम् । हे मदीया ऋत्विज. समेत सम्भूय आगच्छत । इन्द्रं स्तोतुमिति वाक्यशेष । विश्वा विश्वे । सर्वे इत्यर्थ. । कीदृशमिन्द्रम् । उच्यते । ओजसा पतिं दिव. स्वेन बलेन स्वामिनं द्युलोकस्य । द्युग्रहणं चात्र प्रदर्शनार्थम् । त्रयाणामपि लोकाना स्वामिनमित्यर्थ. । कीदृशमिन्द्रम् । उच्यते । यः एक इत् । इच्छब्द एव इत्यस्यार्थे । यः एक एव । भूः । मध्यमपुरुषैकवचनमिदं प्रथमपुरुषैकवचनस्य स्थाने द्रष्टव्यम् । भूत् भवति । अतिथिरतिथिस्थानीयः पूजनीयः । जनाना यजमानमनुष्याणाम् । यः कीदृशः इन्द्रः । उच्यते । सः पूर्व्यः चिरंतनः । नूतनं नवं तं यागम् । अन्येनाकृतपूर्वमित्यर्थः । आजिगीषन् आगन्तुमिच्छन् । वर्तनीः अनु वावृते आगच्छतीत्यर्थः । एक इत् एक एवेत्यर्थः ॥

वामदेवः । समेत उपगच्छत यूयं विश्वाः । विश्वशब्दात् षष्ठ्येकवचने पूर्वसवर्णः । विश्वस्याः दिवः पतिं द्युलोकस्य पतिं इन्द्रम् । ओजसा बलेन समेत । य इन्द्रः एक इत् एक एव । जनाना सर्वेषामतिथिः पूज्यः । भूः भवति । भवतेः छन्दसि लुङ्लङ्लिटः (पा. ३. ४. ६) इति लडर्थे लुङ् । प्रथमपुरुषेण मध्यमपुरुषव्यत्ययः । बहुलं छन्दस्यमाङ्योगे (पा. ६. ४. ७५) इति अडागमाभावः । स पूर्व्यः पुरातन इन्द्रः । नूतनं अद्यतनं स्तोतारम् । वर्तनीः अभिवर्तमानाः सेनाः । आजिगीषन् अभिजेतुमिच्छन् । तमनु उद्दिश्य । एक इत् एक एव । वव्रते अभिगच्छति तस्य जयार्थम् ॥　　(३)

इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो ।
न हि त्वदन्यो गिर्वणो गिरः सघत् क्षोणीरिव प्रति तद्धर्य नो वचः ॥

सव्यस्यार्षम् । इम त तव स्वभूता हे इन्द्र । ते वय हे पुरुष्टुत बहुभिर्यजमानै स्तुत । य त्वा त्वा आरभ्य आश्रित्य । चरामसि अप्रतिहता परिभ्रमाम । हे प्रभूवसो प्रभूतधन । न हि त्वदन्य न च त्वत्तोऽन्य कश्चित् । हे गिर्वण गीर्भि सम्भननीय स्तुतिना वा सम्भक्त । गिर स्तुतय । सघत सहने । नान्य कश्चित् त्वद्वत् स्तुत्यता प्रतिपत्तु समर्थ इत्यर्थ । एतदुक्त भवति । सर्वदा त्वदासक्ता वयम् । न चान्य स्तुतियोग्य इत्यर्थ । यत एवमतो ब्रवीमि । क्षोणीरिव मनुष्या इव । प्रति मनुष्य प्रति यत् तत् हर्य प्रतिकामयस्व । न अस्माक स्वभूत वच । तदिति वचनात् यदिति योग्यार्थमन्यो यच्छब्दोऽध्याह्रियते । यद्वेतदुपकल्पितम् ॥

सव्य आङ्गिरस । ते इमे वय ते त्वदीया भवाम । हे इन्द्र पुरुष्टुत । ये वय त्वा त्वा आरभ्य आलम्ब्य आश्रयत्वेन । चरामसि चराम । हे प्रभुवसो प्रभूतधन । न हि त्वदन्य देव । गिर स्तुती । सघत् सहेत । तासा योग्य स्यादित्यर्थ । हे गिर्वण गिरा सभक्त । क्षोणीरिव इति सर्वसहत्वस्य उपमा । क्षोणी भूमिरिव । मार्लोपाभाव छान्दस । गौरीर्मिमाय (ऋ वे १ १६४ ४१) इतिवत् । प्रतिहर्य प्रतिकामयस्व । न अस्मदीयम् । वच स्तुतिरूपम् । तत् तस्माद्धेतो । यस्त्वमेव गिरा सोढासि तस्मात् ॥ (४)

चर्षणीधृत मघवानमुक्थ्यमिन्द्र गिरो बृहतीरभ्यनूषत ।
वावृधान पुरुहूत सुवृक्तिभिरमर्त्य जरमाण दिवे दिवे ॥

विश्वामित्रस्यार्षम् । चर्षणीधृतम् । चर्षणयो मनुष्या । तेषा तेन तेन प्रकारेण धारयितारम् । अथवा शत्रुमनुष्याणा भर्तार निरोद्धारम् । मघवान धनवन्तम् । उक्थ्य प्रशस्य इन्द्रम् । अस्मदीया गिर बृहती । द्वितीया बहुवचनमिद प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् । बृहत्य महत्य ।

अभ्यनूषत आभिमुख्येन स्तुतवत्यः । स्तुवन्ति वा । कीदृशमिन्द्रं स्तुवन्ति । उच्यते । वावृधानं वर्धमानं वीर्येण शरीरेण वा । पुरुहूतं बहुभिरन्यैरपि यजमानैः आहूतम् । कीदृश्यो गिरः स्तुवन्ति । उच्यते । सुवृक्तिभिः । तृतीयाबहुवचनमिदं प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् । सुवृक्तयः सुष्ठु वर्जिता दोषैः । कीदृशमिन्द्रं स्तुवन्ति । उच्यते । अमर्त्यं अमरणधर्माणं जरामरणवर्जितम् । जरमाणं अन्यैरपि यजमानैः स्तूयमानम् । दिवे दिवे अहन्यहनीत्यर्थः ॥

विश्वामित्रः । चर्षणीधृतं चर्षणीना जनाना धारकम् । मघवानं प्रभूतधनं प्रभूतदानं वा । उक्थ्यं स्तुत्यं इन्द्रम् । गिरः । गृणन्ति इति गिरः स्तोत्र्यः प्रजाः । बृहतीः बृहत्यः । परिवृद्धाः विद्याकर्मादिभिः । अभ्यनूषत अभिष्टुवन्ति । वावृधानं वृद्धं सद्गुणैः । लिटः कानच् । पुरुहूतं बहुभिराहूतं इन्द्रम् । सुवृक्तिभिः सुष्टुतिभिः । अभ्यनूषत । सुष्ठु वृङ्क्ते इति सुवृक्तयः । अमर्त्यं नित्यम् । जरमाणम् । जरिः स्तुतिकर्मा । स्तूयमानः सर्वैः । दिवे दिवे प्रतिदिनम् ॥　　　　(५)

**अच्छा व इन्द्रं मतयः स्वर्युवः सध्रीचीर्विश्वा उशतीरनूषत ।**
**परिष्वजन्त जनयो यथा पतिं मर्यं न शुंध्युं मघवानमूतये ॥**

कृष्णः आत्मीयान् ऋत्विज आह । अच्छ आप्तुम् । इन्द्रं वः युष्माकं स्वभूताः मतयः । कीदृश्यो मतयः । उच्यते । स्वर्युवः । स्वर्गं याः गन्तुमिच्छन्ति ताः स्वर्युवः । स्वर्गगमनशीला इत्यर्थः । सध्रीचीः । द्वितीयाबहुवचनमिदं प्रथमाबहुवचनस्य स्थाने द्रष्टव्यम् । सध्रीच्यः । सह गन्त्र्य इत्यर्थः । विश्वाः सर्वाः । उशतीः उशत्यः तमेव इन्द्रं कामयमानाः । अनूषत स्तुतवत्यः स्तुवन्ति च । परिष्वजन्त तमेव इन्द्रं परिष्वजन्ते । आश्रयन्ते इत्यर्थः । कथमाश्रयन्ते । उच्यते । जनयो यथा पतिं भार्या इव

भर्तारमित्यर्थ । मर्यं न । द्वितीयाबहुवचनमिदं प्रथमैकवचनस्य स्थाने द्रष्टव्यम् । नशब्द उपरिष्टादुपचारत्वादुपमार्थीय । मर्त्य इव मनुष्य इव । शुन्ध्य आदित्यम् । मघवानं धनवन्तम् । ऊतये आत्मन· पालनार्थमित्यर्थ ॥

कृष्णा ऋषि: । अच्छ अभि अनूषत अभिष्टुवन्ति । व: त्वाम् । इन्द्र ईश्वरम् । मतय: स्तुतय. । मने. कर्तरि वा क्तिचि रूपं मतय इति । स्तोत्र्य: प्रजा: । स्वर्युव: सर्वज्ञा: । स्तुतिपक्षे सर्वकाल वहन्त इति । सध्रीची: सङ्गता: सत्य: । विश्वा: सर्वा. । निविष्टा यज्ञसदसि इति वा । उशती: कामयमाना: । परिष्वजन्त परिष्वजन्ते । जनय: जाया: । यथा पतिम् । मर्यं न मर्त्यमिव । शुन्ध्युं शोधयितारं शुद्धिकामा जना: । मघवानं इन्द्रम् । ऊतये रक्षायै .. (६)

**अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम् ।**
**यस्य द्यावो न विचरन्ति मानुषं भुजे मंहिष्ठमभि विप्रमर्चत ॥**

अङ्गिरा नाम ऋषि: । स इन्द्रं पुत्रं याचमान· स्वात्मन्यभिध्यानमकरोत् । तस्य योगैश्वर्यवलात् तत एवाभिध्यानात् सव्यनामा इन्द्र: पुत्रोऽजायतेति । तदेतच्छौनकेनोक्तम्—सं मेष मेधातिथिकाण्वायनमाजहारेन्द्रो मेषरूपी कस्मिंश्चित्कारणान्तरे । तद्ब्राह्मणेनोक्तम् । मेधातिथिं ह काण्वायनं मेषो भूत्वाजहारेति । तदभिवादिन्येषा भवति । तमिन्द्रं मेषं मेषरूपम् । पुरुहूतं बहुभिर्यजमानैराहूतम् । ऋग्मियम् । ऋच: स्तुतय· । ताभिर्य· स्तूयते स ऋग्मिय: । तं ऋग्मियं स्तुतिमन्तम् । स्तुत्यमित्यर्थ. । इन्द्रं गीर्भि: स्तुतिलक्षणाभिर्वाग्भि: । अभिमदत । मदतीत्यर्चतिकर्मा । यागे अभ्यर्चत हे मदीया ऋत्विज: । कीदृशमिन्द्रं स्तुम. । उच्यते । वसो· अर्णवं धनस्य समुद्रम् । यस्य द्याव: द्युलोका: । न विचरन्ति न

विगच्छन्तीत्यर्थः । किं नातिक्रामन्ति । उच्यते । मानुषमनन्तं ज्ञानम् । यस्य द्युलोकोऽपि वशे वर्तते इत्यर्थः । किमर्थं पुनरभिष्टुमः । उच्यते । भुजे आत्मनः पालनार्थम् । इन्द्रं मंहिष्ठं दातृतमं दातृस्वभाविनम् । अभ्यर्चत अभिष्टुत ॥

अस्याः परस्याश्च सव्यः । अभिनन्दता अभिष्टुवन्ति । मतिः स्तुतिकर्मा । त्वं तं मेषम् । मेधातिथिमृषिमिन्द्रो मेषो भूत्वा उपजगाम इति हि श्रूयते । मेधातिथेर्मेषः इति च सुब्रह्मण्यानिगदे श्रूयते । पुरुहूतं ऋग्मियं ऋग्म्यं स्तुत्यर्हम् । इन्द्रं गीर्भिः स्तुतिभिः । वस्वः धनस्य । अर्णवं उदधिनिवाकरभूतम् । यस्य इन्द्रस्य द्यावः स्तोतारः । दीव्यतेः स्तुतिकर्मणो द्यौः । न विचरन्ति न विचलन्ति स्वस्थानात् । मानुषं मनुष्येभ्यः हितम् । मंहिष्ठं दातृतमम् । विप्रं प्राज्ञं तं इन्द्रम् । अर्चत स्तुत हे स्तोतारः । भुजे भोगार्थं वा रक्षणार्थं वा ॥ (७)

त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभ्वः साकमीरते ।
अत्यं न वाजं हवनस्यदं रथमेन्द्रं ववृत्यामवसे सुवृक्तिभिः ॥

सव्यस्यार्षम् । अन्तरात्मन एवायं प्रैषः । त्यं तं इन्द्रम् । मेषं मेषरूपम् । सुमहय सुष्ठु पूजय स्तुतिभिः हे मदीया ऋत्विजः । कीदृशमिन्द्रम् । उच्यते । शतं यस्य । शतमिति बहुनाम । सुभ्वः । अपठितमपि महत्त्वमेतद्द्रष्टव्यम् । बहवो यस्य महान्तः । कम् । सामर्थ्यात् स्तोतारम् । साकं सहभूताः । ईरते प्रेरयन्ति । किम् । सामर्थ्यात् स्तुतिः सहभूता यं स्तुवन्तीत्यर्थः । अहमपि अत्यं न अश्वमिव । वाजं हविर्लक्षणं अन्नं प्रति । हवनस्यदम् । स्यन्दतिर्गतिकर्मा । आह्वानं प्रति गन्तारम् । केन । उच्यते । रथम् । द्वितीयैकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम् । रथेन । इन्द्रं आववृत्यां आवर्तयेयमित्येतदाशास्महे । किमर्थम् ।

उच्यते । अवसे तर्पणाय सोमेन । सुवृक्तिभि सुष्ठु वर्जितदोषाभि स्तुतिभि ॥

त्य त सुष्ठु मेष महय पूजय हे स्तोत । स्वर्विद सर्वकामलम्भन सर्वज्ञ वा । शत बहव जना । सुसुव सुष्ठु भवा स्तोत्राणि । यस्य इन्द्रस्य । यमुद्दिश्य इत्यर्थ । साक युगपदेव ईरते प्रेरयन्ति स्तोत्राणि । अत्य न अश्वमिव । वाज वेगवन्तम् । हवनस्यद हवन स्तोत्र प्रति स्यन्दमानम् । रथ गच्छन्तम् । इन्द्र आवृत्त्या आवर्तयानि । सुवृक्तिभि सुष्ठुतिभि । अवसे रक्षणाय तर्पणाय वा ॥ (८)

**घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।**
**द्यावापृथिवी वरुणस्य धर्मणा विष्कुभिते अजरे भूरिरेतसा ॥**

भरद्वाजस्यार्षम् । घृतवती । घृतमित्युदकनाम । तेन तद्वत्यौ । भुव नाना भूतजातानाम् । अभिश्रिया आश्रयणीये । उर्वी । उर्विति बहुनाम । अवयवबहुत्वाच्च बहुव्यपदेश । बह्वयवे । पृथ्वी । विस्तीर्णे । मधुदुघे । मध्वित्युदकनाम । दुहि क्षरणार्थे । उदकस्य क्षरत्यौ । द्यौ तावत्साक्षादेव उदक क्षरति । पृथिव्यपि उदकस्य हेतुभूता या आहुति तत्प्रदानद्वारेण । सुपेशसा । पेश इति रूपनाम । सुरूपे । द्यावापृथिवी वरुणस्य । वरुणो मध्यमस्थान । स त्विन्द्र एव । तस्य स्वभूतेन । धर्मणा वृष्ट्याख्येन । विष्कुभिते प्रतिषिद्धे । स्वावस्थात अप्रच्युते इत्यर्थ । अजरे जरावर्जिते । भूरिरेतसा बहूदके ॥

भरद्वाज । घृतवती दीप्तिमत्यौ । प्रथमाद्विवचनस्य वा छन्दसि (पा. ६. १. १०६) इति पूर्वसवर्णे । भुवनाना भूतानाम् । अभिश्रिया अभिश्रयणीये । उर्वी विस्तीर्णे । पृथ्वी प्रथिते । मधुदुघे कामदुघे । सुपेशसा । पेशो बलम् ।

सुबले । द्यावापृथिवी द्यावापृथिव्यौ । वरुणस्य सर्वनियामकस्य धर्मणा वृष्टि-रूपेण धर्मेण । विष्कुभिते विष्टब्धे आश्रयीभूते । अजरे नित्ये । भूरिरेतसा बहुकार्ये । इत्थ इत्थ च भवतो द्यावापृथिव्यौ ॥ (९)

उभे यदिन्द्र रोदसी आपप्राथोषा इव ।
महान्तं त्वा महीनां सम्राजं चर्षणीनाम् ।
देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् ॥

मान्धातुरार्षम् । उभे इत्येतत् रोदसी इत्येतेन समानाधिकरणम् । रोदसी इत्येतेन च द्यावापृथिव्यौ उच्येते । उभे द्यावापृथिव्यौ । यत् । नपुंसकमिदं पुंलिङ्गस्य स्थाने द्रष्टव्यम् । य त्वं हे इन्द्र । आपप्राथ । मध्यमपुरुषबहुवचनमिदं एकवचनस्य स्थाने द्रष्टव्यम् । आपप्रासि अत्यर्थं पूरयसि । पुन पुनर्वा पूरयसीत्यर्थ. । सम्यक् वृष्ट्युदकेन आपूरयसि । किमिव । उच्यते । उषा इव । यथा उषाः स्वेन तेजसा द्यावापृथिव्यावा-पूरयति तद्वदित्यर्थ । पुरस्ताद्यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तं महान्तं त्वा त्वाम् । महीना महतीना मरुदादिसेनानाम् । सम्राजं सम्यगीशानम् । चर्षणीनां मनुष्याणा च ईशितारमित्यर्थ । देवी दानादिगुणयुक्ता । जनित्री अदितिर्देवमाता । अजीजनत् जनितवती । भद्रा शोभना । जनित्री अजीजनत् ॥

मान्धाता यौवनाश्वः । यत् यस्त्वं हे इन्द्र । उभे रोदसी आपप्राथ आपूरयसि तेजसा । प्रा पूरणे इत्यस्मात् लडर्थे लिटि रूपं आपप्राथ इति । उषा इव । तं त्वा महान्तं महीना महताम् । सम्राजं सम्यगीशानम् । चर्षणीना जनानाम् । देवी दात्री सर्वकामानाम् । जनित्री जनयित्री तव माता । अजी-जनत् भद्रा कल्याणी । पुनरुक्तिरादरार्था ॥ (१०)

प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हुवेमहि ॥

कुत्स आत्मीयान् पुत्रान् पौत्रांश्चाह । प्रेत्ययमुपसर्ग अर्चत इत्याख्यातेन सम्बन्धयितव्य । मन्दतिरर्चतिकर्मा । मन्दन मन्द स्तुतिर्यस्यास्ति स मन्दी स्तुतिमान् । तादर्थ्ये चतुर्थी । स्तुतिमत इन्द्रस्यार्थाय । पितुमत । पितुरित्यन्ननाम । तदस्मिन्नस्ति तत् पितुमत । वचः वचन स्तुतिलक्षणम् । प्रार्चत । अर्चति इति यद्यप्यन्यत्र स्तुतिकर्मा तथापीह सामर्थ्यादुच्चारणार्थे द्रष्टव्य । हे मदीया पुत्रा पौत्रा वा इन्द्रस्यार्थाय हविर्लक्षणेनान्नेन सहिता स्तुतीरुच्चारयत इत्यर्थ । य किं करोति । उच्यते । स कृष्णगर्भा । कृष्णो मेघ । तस्य गर्भभूता आप । निरहन् । हन्ति गत्यर्थ अन्तर्णीतण्यर्थश्च द्रष्टव्य । निर्गमितवान् । पातितवानित्यर्थ । य इति पुरस्ताद्यच्छब्दश्रुतेस्तस्यार्थायेति वाक्यशेष । परोऽर्धर्चो भिन्न वाक्यम् । अवस्यव पालनकामा । वृषणं वर्षितारम् । वज्रदक्षिणम् । वज्र दक्षिणे हस्ते यस्य स वज्रदक्षिण । त वज्रदक्षिणम् । दक्षिणेन हस्तेन गृहीतवज्रमित्यर्थ । मरत्वन्त मरुद्भिस्तद्वन्तम् । सख्याय सखिभावाय । देवाना मनुष्याणा च स्तुत्यस्तोतृलक्षणं सख्यम् । तस्यार्थाय । स्तोतुमित्यर्थ । हुवेमहि आह्वयाम इत्यर्थः ॥

कुत्स । एषा गर्भस्राविणी उपनिषत् । प्रार्चत प्रोच्चारयत । मन्दिने स्तुत्याय इन्द्राय । पितुमत् अन्नयुक्त हविषा सहितम् । वच. स्तोत्रम् । य इन्द्र' कृष्णगर्भाः कृष्णेन असुरेण आहितगर्भा कृष्णस्य भार्याः । निरहन् निजघान गर्भच्यावनाय । ऋजिश्वना राजर्षिणा हेतुना । तदर्थमित्यर्थ. । ऋजिश्वन शत्रु कृष्ण. । त कृष्ण हत्वा तस्य सन्तानाभावाय गर्भानपि जघान इति । त इन्द्र वृषण वर्षितारम् । वज्रदक्षिण वज्र दक्षिणे हस्ते यस्य तम् । मरुत्वन्तं

मरुद्भिः सहितम्। सख्याय सखिकर्मणे सखिभावाय वा। हुवेमहि ह्वयामः। अवस्यवः रक्षणमिच्छन्तः वयम्॥ (११)

इति चतुर्थे नवमी दशती

---

इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम्।
विदे वृधस्य दक्षस्य महाँ हि षः॥

नारद आह। इन्द्र सुतेष्वभिषुतेषु सोमेषु। क्रतुं प्रति पुनीषे। पुनातिरत्र गत्यर्थो द्रष्टव्यः। गच्छतीत्यर्थः। कीदृशं क्रतुं प्रति गच्छति। उच्यते। उक्थ्यं प्रशस्यम्। अधिगुणमित्यर्थः। अथवा उक्थमन्त्रन्विः उक्थ्यः। सोमयाग इत्यर्थः। कथं पुनर्गच्छति। उच्यते। विदे यथा वेत्ति यथा जानाति। कस्य पुनः स्वमूर्तं सोमयागं गच्छति। उच्यते। वृधस्य दक्षस्य स्तुतिभिर्हविर्भिश्च वर्धयन् मम दक्षस्य स्वमूर्तं सोमयागं आगच्छन्। महान् हि सः॥

अष्टाविंशतिरिन्द्रेति मुख्याः सप्तदशोष्णिहः।
दशान्त्याः ककुभो मध्ये पिबेत्येषा त्रिपाद्विराट्॥
तुचे वेन्या ह्यपानीवामादित्याना तु संस्तवः।
आगन्ता गावो मारुत्यावैन्द्रय एवापरा ऋचः॥

नारदः। हे इन्द्र सुतेषु सत्सु सोमेषु। तान् पीत्वा क्रतुं प्रज्ञानं वीर्यं वा स्वीयम्। पुनीषे शोधयसि। उक्थ्यं प्रशस्यम्। सोमपानेन ते क्रतुः तीक्ष्णो भवति इति यावत्। अथ परोक्षस्तुतिः। विदे विन्दते। वृधस्य

प्रवृद्धस्य। दक्षस्य बलस्य। द्वितीयार्थे षष्ठी। दक्ष विन्दते। महान् हि भवति स इन्द्र सोमपानेन ॥ (१)

तमु अभि प्रगायत पुरुहूत पुरुष्टुतम्।
इन्द्र गीर्भिस्तविषमा विवासत ॥

गोषूक्ती वाश्वसूक्ती वा आत्मीयान् ऋत्विज आह। य उक्तगुण इन्द्र तम्। उ इति पदपूरण। अभिप्रगायत। अभिप्रगायतीत्यर्चतिकर्मा। अभिष्टुत। कीदृशमिन्द्रम्। उच्यते। पुरहूतम्। अन्यैरपि बहुभिर्यजमानै राहूतम्। पुरुष्टुत बहुभिर्यजमानै स्तुतम्। इन्द्र गीर्भि स्तुतिभि। तविष महान्तम्। आविवासति परिचरतीत्यर्थ ॥

द्वयो गौषूक्त्यश्वसूक्तिनौ। तमु तमेव। अभिप्रगायत हे ऋत्विज। पुरहूत पुरुष्टुत इन्द्र गीर्भि स्तुतिभि अभिप्रगायत। तविषम्। तविषी बलम्। तद्वन्तम्। आविवासत परिचरत च कर्मभि ॥ (२)

तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम्।
उ लोककृत्नुमद्रिवो हरिश्रियम् ॥

गोषूक्ती वाश्वसूक्ती वा इन्द्रमाह। त ते तव स्वभूतम्। मद गर्वम्। उत्सेकमित्यर्थ। गृणीमसि। गृणातिरर्चतिकर्मा। स्तुम इत्यर्थ। कीदृशम्। उच्यते। वृषण वर्षितारम्। पृक्षु सङ्ग्रामेषु। सासहिं अत्यर्थ मभिभवितार शत्रूणाम्। उ लोककृत्नुम्। उकार पदपूरण। लोककृत्नु लोकाना च कर्तारम्। हे अद्रिव। अद्रिर्वज्र। तद्वान् अद्रिवान्। तस्य सम्बोधन हे अद्रिव। वज्रवन्नित्यर्थ ॥

त प्रसिद्ध सर्वकामप्रदम्। ते तव। मद सोमपानार्थं गृणीमसि स्तुमः वयम्। वृषण वर्षितारम्। पृक्षु सग्रामेषु। सासहि अभिभवितारम्। उलोककृन्तुम्। लोक एव उलोकः। लोककृत यजमानानाम्। हे अद्रिवः वज्रिन्। हरिश्रियं हरिभ्या श्रित हरी वा श्रयन्तम्॥ (३)

यत्सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये।
यद्वा मरुत्सु मन्दसे समिन्दुभिः॥

पर्वतस्यार्षम्। यत्। पञ्चम्या अत्र लुक्। यस्मात् सोमं हे इन्द्र विष्णवि। सप्तम्येकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम्। सहयोगे च तृतीया। विष्णुना सह। यत् यस्मात्। वाशब्द. चशब्दार्थे। घ इति पदपूरण·। त्रिते। इदमपि सप्तम्येकवचनं तृतीयैकवचनस्य स्थाने द्रष्टव्यम्। सहयोगे च तृतीया। त्रितेन च ऋषिणा सह। आप्त्ये। इदमपि सप्तम्येकवचनं सहयोगतृतीयैकवचनस्यैव स्थाने द्रष्टव्यम्। आप्त्येन च ऋषिणा सह। यस्माद्वा मरुत्सु मरुद्भि· मह मन्दसे। मद तृप्तावित्यस्येदं रूपम्। तृप्यसि। पिबसीत्यर्थ। कीदृशैर्मरुद्भि। उच्यते। इन्दुभि। इदि परमैश्वर्ये इत्यस्येदं रूपम्। अत्यन्तैश्वर्यै· इत्यर्थ·। यस्मादिति वचनात् तस्मात् त्वा यजामीति वाक्यशेष॥

पर्वत.। हे इन्द्र यत् यदि सोम लभेथाः। विष्णवि विष्णौ तव सहायभूते। यद्वा यदि वा घ। घेति पूरण.। त्रिते आप्त्ये आप्तस्य पुत्रे लभेथाः। यद्वा यदि वा मरुत्सु मन्दसे सोमेन। तत आगत्य संरमस्व इन्दुभिः मदैः॥ (४)

एदु मधोर्मदिन्तरं सिञ्चाध्वर्यो अन्धसः।
एवा हि वीरः स्तवते सदावृधः॥

विश्वमनस आर्षम्। आ इत्ययमुपसर्गे। सिञ्चेत्याख्यातेन सम्बन्धयितव्य। इत् उ इति द्वावपि पदपूरणौ। मघो मधुन सका शात्। मदिन्तरम्। मद कर्तव्यत्वेन यस्यास्ति स मदी। अतिशयेन मदी मदिन्तर। अतिशयनमदकरमित्यर्थ। किं तत्। सामर्थ्यात् सोमम्। आसिञ्च ग्रहे। चमसे क्षारयत्यर्थ। हे अध्वर्यो अन्धस। षष्ठ्येकवचनमिद द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्। अन्ध सोमाख्यमन्नम्। कस्मात् पुन आसिञ्चामि। उच्यते। एव हि। हिशब्दो यस्मादर्थे। यस्मादेव क्षारित सन्त वीर इन्द्र स्तवते। स्तवतिर्वृध्यर्थ। वर्धते शरीरेण वीर्येण च। कीदृश इन्द्र। उच्यत। सदावृध। षष्ठ्येकवचनमिद प्रथमैकवचनस्य स्थाने द्रष्टव्यम्। सदावृत्। सदावर्धयिता स्तोतृणा यष्टृणा च॥

तिसृणा विश्वमना वैयश्व। आ इत् उ एदु। इत् उ इतीमौ पादपूरणौ। आसिञ्च मघा मधुरस्य। अन्धस सोमस्य। मदिन्तर अतिशयेन मादयितार रस हे अध्वर्यो। एव एव हि। वार सदावृध सर्वदा प्रवृद्ध इन्द्र। स्तवते स्तूयते अस्माभि। अत आसिञ्च पात्रेषु सोमम्॥ (९)

एन्दुमिन्द्राय सिञ्चत पिबाति सोम्य मधु।
प्र राधासि चोदयते महित्वना॥

विश्वमना आत्मीयान् ऋत्विज आह। आ इत्ययमुपसर्ग सिञ्चत इत्याख्यातेन सम्बन्धयितव्य। इन्दु सोम इन्द्राय। तादर्थ्ये एषा चतुर्थी। इन्द्रार्थमासिञ्चत ग्रहै चमसैश्च क्षारयित्वा गृह्णीतेत्यर्थ। कस्मात् पुनरा सिञ्चाम। उच्यत। यस्मात् पिबाति पिबति पातुमिच्छति। सोम्य सोममयम्। मधु मधुसदृशम्। इष्टमित्यर्थ। पीत्वा च मधुसदृशेन सोमेन मत्त राधासि धनानि। प्रचोदयते स्तोतृभ्य यष्टृभ्यश्च ददातीत्यर्थ। महित्वना महित्वेन। स्वेन माहात्म्येनेत्यर्थ॥

आसिञ्चत इन्द्रमिन्द्राय पात्रेषु हे अध्वर्यव.। पिबाति पिबतु। सोम्य सोमात्मक मधु। पात्वा च प्रचोदयते प्रेरयति। राधांसि धनानि अस्मदर्थम्। महित्वना महित्वेन युक्त इन्द्र॰॥ (६)

एतो न्विन्द्रं स्तवाम सखायः स्तोम्यं नरम्।
कृष्टीर्यो विश्वा अभ्यस्त्येक इत्॥

विश्वमना आत्मीयानृत्विज आह। आ इत आगच्छत। उकारः पदपूरण। नु क्षिप्रम्। किमर्थमागच्छाम। उच्यते। इन्द्र स्तवाम अहं च यूयं च। कथं नाम इन्द्र स्तवामेत्येवमर्थम्। ते सखाय मदीया ऋत्विज। कीदृशमिन्द्रं स्तवाम। उच्यते। स्तोम्यं स्तोमार्हम्। स्तुत्यमित्यर्थ। नर नराकारम्। य इन्द्र किं करोति स्तुत। उच्यते। कृष्टी॰ शत्रुमनुष्यजातीया। विश्वा सर्वा। अभ्यस्ते अभिभवति। एक इत्। इच्छब्द एवशब्दस्यार्थे। एक एवेत्यर्थ॥

आ इत उ नु एता नु। एत आगच्छत हे सखाय। उ पूरण। नु अद्य। त इन्द्र स्तवाम स्तोम्य स्तोमार्हम्। नर नेतार इन्द्रम्। कृष्टीः प्रजा॰। विश्वाः सर्वा। य इन्द्र एक इत् एक एव। अभ्यस्ति अभिभवति। त इन्द्र स्तवाम॥ (७)

इन्द्राय साम गायत विप्राय बृहते बृहत्।
ब्रह्मकृते विपश्चिते पनस्यवे॥

नृमेधा आत्मीयानुद्गातॄनाह। इन्द्राय इन्द्रार्थं साम गायत। कीदृशायेन्द्राय। उच्यते। विप्रस्य। विप्र इति चैतन्मेधाविनाम। विपश्चित इत्यनेन पौनरुक्त्यप्रसङ्गात् क्रियानिमित्त द्रष्टव्यम्। अत प्रा पूरणे इत्यस्येदं

रूपम् । विविधमुदकेन पूरयिता विप्रः । तस्मै विप्राय । बृहते शरीरेण च वीर्येण च महते । कीदृशं साम गायाम । उच्यते । बृहत् महत् बृहतीसंज्ञकं वा । पुन कीदृशाय इन्द्राय । उच्यते । ब्रह्मकृते । ब्रह्म अन्नम् । तच करोति स ब्रह्मकृत् । तस्मै ब्रह्मकृते । अन्नस्य कर्त्रे इत्यर्थ. । कथं च पुनरिन्द्र अन्नस्य कर्ता । उच्यते । अन्नस्य ओदनादेः प्रकृतिभूतं व्रीह्यादि । तच्चासौ वृष्टिद्वारेण करोति । अतः अन्नस्य कर्तेति व्यपदिश्यते । विपश्चिते मेधाविने । पनस्यवे । पनस्यतीत्यर्चतिकर्मा । सर्वे स्तुत्यर्थाः । तान् य इच्छति स पनस्युः । तस्मै पनस्यवे । स्तुतिकर्मायेत्यर्थः ॥

नृमेधाः । इन्द्राय इन्द्रमुद्दिश्य । साम गायत विप्राय प्राज्ञाय । बृहते महते । बृहत् साम । ब्रह्मकृते अन्नकृते । ब्रह्म अन्नम् । तत्कर्त्रे । विपश्चिते सर्वज्ञाय । पनस्यवे स्तुतिकामाय ॥ (८)

य एक इद्विदयते वसु मर्ताय दाशुषे ।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ।

गौतमस्यार्षम् । य एकः । इच्छब्द एवशब्दार्थः । एक एव इत्यर्थ । विदयते विविधं ददाति । वसु धनम् । मर्ताय मनुष्याय । दाशुषे यजमानाय । ईशान ईश्वरः । अप्रतिष्कुतः । ष्कु आप्रवणे । आप्रवणमागमनं । प्रवर्तेर्गत्यर्थत्वात् । अन्येन अप्रतिगतः अप्रतिष्कुतः । युद्धेऽभियुञ्जानः अन्येन अप्रत्यभियुक्तः । पूर्वाभियोद्धा इत्यर्थः । कोऽसौ । उच्यते । इन्द्रः । अङ्गेति निपातः पदपूरणः । अथवा क्षिप्रवचनः विदयत इत्यनेन सम्बध्यते । क्षिप्रं ददातीत्यर्थः । य इति पुरस्ताद्यच्छब्दश्रुतेः तं स्तुम इति वाक्यशेषः ॥

गोतमः। यः एक इत एक एव। विदयते प्रयच्छति। वसु वसूनि। मर्ताय मनुष्याय। दाशुषे यजमानाय इन्द्रः। ईशानः विश्वस्य। अप्रतिष्कुतः अप्रत्यागतः केनापि। अङ्ग सत्यम्॥ (९)

सखाय आशिषामहे ब्रह्मेन्द्राय वज्रिणे।
स्तुष ऊ षु वो नृतमाय धृष्णवे॥

विश्वमना आत्मीयान्नृत्विज आह। हे सखायः यूयं वयं च आशिषामहे आशास्महे। प्रार्थयाम इत्यर्थः। किं प्रार्थयामः। उच्यते। ब्रह्म अन्नम्। अन्नग्रहणं प्रदर्शनार्थम्। गोधनहिरण्यादि सर्वं प्रार्थयामः। कं पुनः प्रार्थयामः। उच्यते। इन्द्राय वज्रिणे। द्वे अप्येते चतुर्थ्येकवचने द्वितीयैकवचनस्य स्थाने द्रष्टव्ये। इन्द्रं वज्रिणम्। स्तुषे यस्मात् यूयं वयं च स्तुमः तस्मादित्यर्थ। ऊ सु इति द्वावपि पदपूरणौ। कीदृशमिन्द्रम्। उच्यते। वः नृतमाय युष्माकं मध्ये अतिशयेन मनुष्याय। धृष्णवे। इदमपि चतुर्थ्येकवचनं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्। धृष्णुम्। शत्रूणामभिभवितारमित्यर्थः॥

इति माधवाचार्यकृते छन्दसिकाभाष्ये चतुर्थः प्रपाठकः

विश्वमनाः। सखायः वयं आशिषामहे आशास्महे। ब्रह्म अन्नं हविः स्तोत्रं वा। इन्द्राय वज्रिणे। अथ प्रत्यक्षस्तुतिः। स्तुषे स्तौमि स्तुतिमुच्चारयामि। उ सु इतीमौ पादपूरणौ। वः तुभ्यम्। नृतमाय नेतृतमाय। धृष्णवे शत्रूणाम्॥ (१०)

चतुर्थे दशमी दशाया

चतुर्थः प्रपाठकः

## पञ्चमः प्रपाठकः

गृणे तदिन्द्र ते शव उपमां देवतातये।
यद्धंसि वृत्रमोजसा शचीपते॥

प्रगाथ आह। गृणे स्तौमि। तत् हे इन्द्र ते शव- बलम्। कीदृशम्। उच्यते। उपमा सर्वबलानामुपमानभूतम्। अत्यन्तोत्कृष्टमित्यर्थ। क पुनः स्तौमि। उच्यते। देवतातये। चतुर्थ्येकवचनमिदं सप्तम्येकवचनस्य स्थाने द्रष्टव्यम्। देवतातौ। यज्ञे इत्यर्थः। कीदृशं पुनर्बलं स्तौमि। उच्यते। यत्। तृतीयाया अत्र लुक् द्रष्टव्यः। येन हंसि वृत्रं मेघम्। ओजसा बलेन। हे शचीपते। शचीति कर्मनाम। तस्य पति शचीपति। तस्य सम्बोधनं हे शचीपते। ज्योतिष्टोमादीनां कर्मणां अधिपतिभूत इत्यर्थ.॥

प्रगाथः। गृणे स्तौमि। तत् ते शवः बलं हे इन्द्र। उपमा अन्तिकम्। निरुक्तमित्यर्थः। देवतातये यज्ञार्थं यजमानार्थं वा। किं तच्छवः तदाह। यत् यः। हंसि महन्। वृत्रं असुरम्। ओजसा बलेन हे शचीपते॥ (१)

यस्य त्यच्छम्बरं मदे दिवोदासाय रन्धयन्।
अयं स सोम इन्द्र ते सुतः पिब॥

भरद्वाज आह। यस्य। यस्येत्यनेन सोमः प्रतिनिर्दिश्यते मदे इत्यनेन च सम्बद्ध्यते। मदे इत्यत्र यस्य च भावेन भावलक्षणम्

(पा. २. ३. ३७) इत्येवं सप्तमी । तच्छ्रुतेश्च लक्षणभूतक्रियापदाध्याहार । यस्य सोमस्य मदे प्राप्ते । त्यत् । त्यच्छब्दः तच्छब्दपर्यायः । नपुंसकलिङ्गं व्यत्ययेन पुंलिङ्गस्य स्थाने द्रष्टव्यम् । तं शम्बरं नामासुरम् । दिवोदासाय दिवोदासनाम्न राज्ञ अर्थाय । रन्धयन् । अयं सः सोमः हे इन्द्र त्वदर्थं सुत अभिषुत । एतत् ज्ञात्वा पिब ॥

भरद्वाज. । यस्य सोमस्य मदे सति । त्यत् तत् प्रसिद्धं पूर्भेदनादिकर्म अकार्षीः । शम्बर असुर दिवोदासाय ऋषये रन्धयन् ।

अह पुरो मन्दसानो व्यैरं नव साकं नवतीः शम्बरस्य ।
शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावम् ॥

(ऋ. वे. ४. २६. ३)

इति हि निगम । अयं सः सोमः हे इन्द्र । ते त्वदर्थम् । सुतः अभिषुतः । पिब त सोमम् ॥ (२)

एन्द्र नो गधि प्रिय सत्राजिदगोह्य ।
गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥

नृमेधा आह । आ इत्ययमुपसर्ग गधीत्याख्यातेन सम्बन्धयितव्यः । आगधि आगहि आगच्छेत्यर्थः । क । सामर्थ्यादस्मद्यज्ञे । हे इन्द्र नः अस्माकम् । प्रिय हे सत्राजित् सर्वदा शत्रूणां जेता । अगोह्य अगोहनीय । श्लाघ्य इत्यर्थ । गिरिर्न गिरिरिव । विश्वतः सर्वत पृथु । पति स्वामी । दिव द्युलोकस्य । यत्तच्छब्दावध्याहृत्यैक्यावयता योज्या । यस्त्वं गिरिरिव विश्वत पृथु पतिश्च द्युलोकस्य स त्वं हे इन्द्र आगहि ॥

नृमेधाः । आगधि आगच्छ हे इन्द्र । नः अस्मान् । हे प्रिय सखे । सत्राजित् सर्वेषा जेतः । अगोह्य गूहयितुं तिरस्कर्तुं अशक्य । सदाप्रकाश ।

गिरिः न शिलोच्चय इव। विश्वत पृथु॰ विस्तीर्ण॰। पतिर्दिवः शुलोकस्य स्वामी त्व आगधि ॥ (३)

य इन्द्र सोमपातमो मदः शविष्ठ चेतति।
येना हंसि न्यत्रिणं तमीमहे ॥

पर्वतम्यार्षम्। यस्तव स्वभूत हे इन्द्र। सोमपातम अतिशयेन सोमस्य पाता मद। यन मदेन मत्त पुन पुन सोम पिबतीत्यर्थ। शविष्ठ। शव इति बलनाम। तदतिशयेन यस्यास्ति स शविष्ठ। तस्य सम्बोधन हे शविष्ठ। अतिशयेन बलवन्नित्यर्थ। चेतति चेत्यते। ज्ञायते इत्यर्थ। जानाति वा सर्वन्। येन च मदेन निहसि अत्रिणं रक्ष पिशाचादि। तं मदं ईमहे प्रार्थयामि। स तव मद अस्मदीये यज्ञे अस्तु। तेन मदेन माद्यस्वेत्यर्थ ॥

पर्वत॰। य॰ मदः त्वदीयः हे इन्द्र। सोमपातमः अतिशयेन सोमपा॰। चेतति विज्ञायते सर्व। सोमपानजनिते मद सति पुनश्च इन्द्र सोम पिबतीति सोमपातम इत्युच्यते। हे शविष्ठ शूरतम। येन मदेन निहसि अत्रिण अदनशील राक्षसम्। त ईमहे उपगच्छाम। गोदा इदेवतो मद॰ (ऋ. वे. १-४-२) इति हि मदस्य गवादिकामप्रदातृत्व श्रुतम् ॥ (४)

तुचे तुनाय तत्सु नो द्राघीय आयुर्जीवसे।
आदित्यासः समहसः कृणोतन ॥

इरिम्बिठिर्नाम ऋषि। तस्येदमार्षम्। तुगित्यपत्यनाम। तस्मादिन तादर्थ्ये चतुर्थी। अपत्यस्यार्थायेत्यर्थ। तुनायेति तु धननाम। तस्मादिन तादर्थ्ये चतुर्थी। धनस्य चार्थायेत्यर्थ। तच्छब्द आयु-शब्दात् परो द्रष्टव्य। सुशब्द पदपूरण। न अस्माक देवस्येन्द्र-

स्यार्थाय । आयुरतच्छब्दस्य प्रतिनिर्देशः । कस्मात् । श्रुतत्वात् । द्राघीय इत्यत्र उद्देशार्थीयस्य यच्छब्दोऽध्याहर्तव्य । यद्राघीय आयुः यदतिशयेन दीर्घमायु । तत्र जीवसे चिरं जीवनाय । हे आदित्यास· समहसः सपूजाः । कृणोतन कुरु इत्यर्थ । अपत्यानि धनं जीवितं चेति त्रितयमप्यनेन प्रकारेण प्रार्थ्यते । आदित्येयं ऋक् ॥

इरिम्बिठिः । तुचे तोकाय पुत्राय । तुनाय । तनोतेस्तुनः पौत्रः । तुनाय पौत्राय । तत यत् युष्माभिः देय तत् । सु सुष्ठु । नः अस्मदीयाय तुचे तुनाय च । द्राघीय. दीर्घतरम् । आयुः कृणोतन कुरुत । जीवसे जीवनाय । हे आदित्यासः अदिते. पुत्राः । समहसः सतेजस. ॥ (५)

**वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजम् ।**
**अहरहः शुन्ध्युः परिपदामिव ॥**

विश्वमनस आर्षम् । हे इन्द्र वेत्थ जानीहि । वुविंत्यर्थ· । निर्ऋतीनाम् । निर्ऋतिर्मृत्युदेवता । तस्या स्वभूतानां प्रवृत्तीना मारणात्मिकानाम् । परिवृजं परिवर्जनम् । येनाहं तमावर्जये तथा वुविंत्यर्थ· । हे वज्रहस्त । कथं पुनर्जानीहि । उच्यते । अहरह अहन्यहनि । शुन्ध्युः आदित्य परिपदामिव । परीति सर्वतोभावे । पदिर्गत्यर्थ । सर्वतो गच्छन्तीति परिपद । तेषां परिपदाम् । सर्वतो गन्तॄणा प्राणिनामित्यर्थः । एतदुक्तं भवति । यथा सर्वप्राणिनां आदित्य· लोकपालत्वात् शुभाशुभप्रवृत्ती वेत्ति तद्वन्निर्ऋतिप्रवृत्तीना वर्जनं वेत्थ ॥

विश्वमनाः । वेत्थ जानासि हि त्वम् । निर्ऋतीना निरयाणा अर्थानाम् । परिवृजं परिवर्जन रिपुबाधन वा । हे वज्रहस्त अहरहः शुन्ध्युः आदित्यः । परिपदामिव परितः पद्यमानाना रक्षसा मंदेहानामिव वर्जनम् ॥ (६)

अपामीवामप स्रिधमप सेधत दुर्मतिम् ।
आदित्यासो युयोतना नो अंहसः ॥

इरिम्बिठिर्नाम ऋषि । तस्येदमार्षम् । आदित्या देवता । अपेत्ययमुपसर्ग सेधतेत्याख्यानेन सम्बन्धयितव्य । सेधतिर्गत्यर्थ अन्तर्णीतण्यर्थश्च द्रष्टव्य । अपसेधत अपगमयतेत्यर्थ । किम् । उच्यते । अमीवा रोगमित्यर्थः । अपगमयत स्रिधं शोषयितारं उद्वेगकरं सत्वादि । अपगमयत दुर्मतिं पापबुद्धिं रक्ष पिशाचादि । अपगमयतेत्यनुपङ्ग । हे आदित्यासः न केवलममीवादीन् अपगमयत । किं तर्हि । युयोतन पृथक्कुरत । नः अस्मान् । कुतः । उच्यते । अंहस पापात् । येन पापेन संबध्यामहे तत् पृथक्कुरुतेत्यर्थ । हे आदित्याः पापान्मोक्षयत ॥

इरिम्बिठिरेव । अपसेधत अपबाधध्वम् । अमीवा रोगम् । अपसेधत स्रिध हिंसा शत्रुभिः क्रियमाणाम् । क्षयो वा स्रिक् । अपसेधत दुर्मतिं दुर्मनसम् । हे आदित्यासः आदित्याः । युयोतन पृथक्कुरत । नः अस्मान् । अंहसः पापात् ॥ (७)

पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।
सोतुर्बाहुभ्यां सुयतो नार्वा ॥

वसिष्ठ इन्द्रमाह । हे इन्द्र पिब सोमम् । स च पीतः सन् मन्दतु । मन्दतिस्तृप्त्यर्थः अन्तर्णीतण्यर्थश्च द्रष्टव्यः । तर्पयतु त्वा त्वाम् । यः कतम सोमः । उच्यते । यं ते त्वदर्थम् । सुषाव अभिषुतवान् अहं हर्यश्व । हरितवर्णावश्वौ यस्य स हर्यश्वः । तस्य सम्बोधनं हे हर्यश्व । हरितवर्णाश्व इत्यर्थ । अद्रिः । प्रथमैकवचनमिदं तृतीयाबहुवचनस्य स्थाने द्रष्टव्यम् ।

अद्रिभि अभिषवणग्रावभिरित्यर्थ । सोतु अभिसोतु· अध्वर्यो· बाहुभ्याम् । कथं वा पिबामि । उच्यते । सुयत सुबद्ध· । नशब्द उपमार्थीय अर्वशब्दाच्च परो द्रष्टव्य । अर्वशब्द अश्ववचन । अश्व इवेत्यर्थ. ॥

वसिष्ठ । पिबा पिब सोम हे इन्द्र । पीतश्च सोमः मन्दतु त्वा त्वाम् । य सोम ते त्वदर्थम् । सुषाव अभिषुतवान् । अद्रिः ग्रावा हे हर्यश्व । सोतुः अभिषवकर्तुः अध्वर्योः । बाहुभ्या हस्ताभ्याम् । सुयतः सुपरिगृहीत· । नेति पुरस्तादुपचारोऽपि उपमार्थीय. । अर्वा न अश्व इव सादिना सुयतः ॥ (८)

पञ्चमे प्रथमा दशती

---

अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि ।
युधेदापित्वमिच्छसे ॥

सोभरेरार्षम् । भ्रातृव्य शत्रु· । अविद्यमानो भ्रातृव्यो यस्य सः अभ्रातृव्य । असम्भजितवान् शत्रुभिरित्यर्थ । अना । अनः प्राणः । तस्मात्तृतीयैकवचनस्य सुपा सुलुक् (पा. ७. १. ३९) इति पूर्वसवर्ण । अना अनेन प्राणेन हेतुना । सर्वशत्रूणा जितत्वात् अशत्रु· त्वम् । तथा अनापि त्व हे इन्द्र जनुषा जन्मना । सनादसि ज्ञातिर्भवसि । कथं तर्हि ज्ञातिर्भवति । उच्यते । युधा युद्धेन । विनिर्जित्येति वाक्यशेष· । इच्छब्द पदपूरण· । आपित्वं ज्ञातित्वं इच्छसे । एतदुक्तं भवति । यस्त्वां सम्भजने यत्नात् यागं करोति यश्च त्वां यजेत तस्य त्वं ज्ञातित्वमिच्छसि नान्यस्य ॥

षण्णा सौभरिः। अभ्रातृव्यः अशत्रुकः। अना। नेता यस्य नास्ति सोऽना। स्वय सर्वस्य नेता। अनापिः। आपिः बन्धुः। तद्रहितश्चासि त्वम्। जनुषा जन्मना स्वतः। सनात् चिरादारभ्य हे इन्द्र। युधा इत् युद्धेनैव। आपित्व बन्धुभावम्। इच्छसे इच्छसि। येषा स्तोतृणा अर्थे युध्यसे तेषा बन्धुत्वं इच्छसि ॥ (१)

**यो न इदमिदं पुरा प्र वस्य आनिनाय तमु वः स्तुषे।**
**सखाय इन्द्रमूतये ॥**

सौभरेरार्षम्। यः इन्द्रः। न· अस्मभ्यम्। इदमिदं वः युष्मभ्यं प्रदत्तवान्। प्र वस्य. प्रकर्षेण वस्य. वसीयः। आनिनाय आभिमुख्येन गच्छति। हे सखाय: मदीया ऋत्विजः। तमिन्द्रम्। उ इति पदपूरणः। वः स्तुषे स्तौमि। किमर्थम्। उच्यते। ऊतये आत्मनः पालनार्थमित्यर्थः ॥

यः नः अस्मभ्यम्। इदमिदं इदं दृश्यमानं सर्वं गृहधनादिकम्। वस्यो वसीयः प्रशस्यतरम्। प्र प्रकर्षेण आनिनाय। पूर्वं सामान्येन वचनात् आनिनायेति प्रथमपुरुषः। तमु तमेव। वः त्वाम्। स्तुषे स्तुमहे वयम्। सखायः पूर्वं च स्तोतारः वयम्। इन्द्रमीश्वरं त्वाम्। ऊतये रक्षार्थम् ॥ (२)

**आगन्ता मा रिषण्यत प्रस्थावानो माप स्थात समन्यवः।**
**दृढा चिद्यमयिष्णवः ॥**

सौभरेरार्षम्। मरुत उच्यन्ते। हे मरुत· आगन्त आगच्छत अस्मदीयं यज्ञम्। मा रिषण्यत मा हिंसिष्ट किंचित्। मा केनचित् सह युद्धं कार्षं इत्यर्थः। हे प्रस्थावानः शत्रूणामुपरि युद्धार्थं गन्तार इत्यर्थः। दृढाः स्थिराः चित्। चिच्छब्दः अपिशब्दस्यार्थे। दृढानामपि शत्रुकुलानां यमयिष्णवः यमनशीलाः। निरोद्धार इत्यर्थः ॥

*आगन्ता आगच्छत । मा रिषण्यत मा हिंस्त । हे प्रस्थावान' प्रस्थान-शीला सदागतयो मरुत । मापस्थात मा अपगच्छत अस्मत्त । समन्यव समानचित्ता । दृढा चिद् दृढान्यपि पर्वतादीनि । यमयिष्णव यन्तु शक्ता ॥* (३)

**आ याह्ययमिन्दवेऽश्वपते गोपत उर्वरापते ।**
**सोम सोमपते पिब ॥**

सौभरेरार्षम् । आयाहि आगच्छ । अय इन्दवे । द्वे अपि द्विती यैकवचनस्य स्थाने द्रष्टव्ये । इममिन्दु प्रति । हे अश्वपते गोपते उर्व रापते । उर्वरा जातसस्या पृथिवी । तस्या स्वामी उर्वरापति । तस्य सम्बोधन क्रियते हे उर्वरापते । जातसस्याया पृथिव्या स्वामिन्नित्यर्थ । एत्य च सोम हे सोमपते पिब ॥

*आयाहि आगच्छ । इन्दवे इन्दु सोममुद्दिश्य । अय सोम । त्वदर्थं तिष्ठतीति शेष । हे अश्वपते गापते उवरापते । उर्वरा सर्वसस्याढ्या भूमि । आगत्य च सोम पिब हे सोमपते इन्द्र ॥* (४)

**त्वया ह स्विद्युजा वय प्रति श्वसन्तं वृषभ ब्रुवीमहि ।**
**संस्थे जनस्य गोमतः ॥**

सौभरि नाम ऋषि । स इन्द्रमाह । त्वया । ह इति विनि ग्रहार्थीय । त्वयैव । स्विदिति पदपूरण । युजा । युज्यत इति युक् सहाय । तेन युजा । सहायेनेत्यर्थ । वयम् । प्रतीत्यय ब्रुवीमहीत्यनेन सम्बन्धयितव्य । प्रतिब्रुवीमहि प्रतिवदामेत्येतदाशास्महे । क्व पुनर्वदाम । उच्यते । सस्थे । सतिष्ठन्ते यत्र योद्धार स सस्थ सङ्ग्राम । तस्मिन्

संस्थे। कस्य सम्बन्धिनि। उच्यते। जनस्य गोमत गोषु ह्रियमाणासु चोरैः सह यः सङ्ग्राम तस्मिन् कृते हन्याम इत्यर्थ ॥

त्वया युजा सहायेन। वयं प्रतिब्रुवीमहि प्रतिबोधेमहि इत्यर्थः। श्वसन्तं बाधमानमिति यावत्। स्विदिति पूरणः। हे वृषभ वर्षितः कामानाम्। संस्थे संस्थाने। जनस्य शत्रुजनस्य गोमतः। युद्धे इत्यर्थः॥ (९)

**गावश्चिद्धा समन्यवः सजात्येन मरुतः सबन्धवः।**
**रिहते ककुभो मिथः॥**

मारुतीयमृक्। सौभरेरार्षम्। गोशब्देनात्र आदित्यरश्मय उच्यन्ते। चिच्छब्दः उपमायाम्। आदित्यरश्मय इव। ह इति पदपूरणः। समन्यवः। मन्युर्मन्यतेर्दीप्तिकर्मण.। समानदीप्तयः। आदित्यरश्मय इव सर्वे सदीप्ता इत्यर्थः। सजात्येन समानजातित्वेन सर्वेषाम्। कथं समानजातित्वम्। एकस्मात् पृश्नेः सकाशाज्जायमानत्वात्। मरुतः सबन्धवः। स एव पृश्निः समानो बन्धुर्येषाम्। एकपितृका इत्यर्थः। रिहते आस्वादयन्ति। ककुभः प्रधानभूताः आदित्यरश्मयः। मिथः परस्परम्। अथवा ककुभो दिशः। दिक्शब्देनात्र दिग्वासिनो यजमाना लक्ष्यन्ते। तानास्वादयन्ति उपजीवन्तीत्यर्थः। कथमुपजीवन्ति। उच्यते। मिथः सहभूता इत्यर्थः। अथवा गाव एव समन्यवो दीप्ताः। सजात्यः सपक्षाः पुत्रपौत्रभ्रात्रादि। तेन। हे मरुतः अनड्वाहः। सम्बन्धवः रिहते आस्वादयन्ति। ककुभः ककुत्प्रदेशे तज्जिह्वया विलिहन्ति। मिथ. पृथक्॥

गावश्चित् गाव इव वत्सान्। रिहते इति सम्बन्धः। घेति पूरणः। हे समन्यवः सजात्येन सजातिभावेन। एकस्माद्रुद्रात् जाता इति सजात्येन समन्यव

इति । हे मरुतः सबन्धवः समानः एको बन्धुः द्रष्टा सौभरिः यासा ककुभा ताः सबन्धवः । ककुभः ककुप्छन्दस्का ऋचः । मिथः सबन्धव इति संबन्धः । रिहते लिहते युष्मान् । रेफश्छान्दसः । आगन्ता मा रिषण्यत इत्यस्मिन् सूक्ते (ऋ. वे. ८. २०) काकुभा हि प्रगाथाः । अतः ककुभो रिहते इति कीर्त्यते ॥ (६)

त्वं न इन्द्राभर ओजो नृम्णं शतक्रतो विचर्षणे ।
आ वीरं पृतनासहम् ॥

नृमेधस आर्षम् । त्वं न अस्मभ्यम् । हे इन्द्र आभर आनय । देहीत्यर्थ । किमाभरामि । उच्यते । ओजो बलम् । नृम्णं धनं चेत्यर्थः । हे शतक्रतो । शतमिति बहुनाम । क्रतुरित्यपि कर्मनाम प्रज्ञानाम वा । बहूनि कर्माणि प्रज्ञा वा यस्य स शतक्रतु । तस्य सम्बोधनं हे शतक्रतो बहुकर्मन् बहुप्रज्ञ वेत्यर्थ । हे विश्वचर्षणे विश्वस्य द्रष्टः । आ इत्युपसर्गश्रुते भरेत्याख्यातं अवकृप्यते । आभर । वीरं पुत्रम् । कीदृशं पुत्रम् । उच्यते । पृतनासहम् । पृतना इति सङ्ग्रामनाम । तस्मिन् शत्रूणामभिभवितारमित्यर्थ ॥

द्वयोः नृमेधाः । त्व नः अस्मभ्यम् । आभर आहर । ओजो बलम् । नृम्णं नृभिः मननीय स्तुत्यम् । हे इन्द्र शतक्रतो विचर्षणे विद्रष्टः । आहर वीर पुत्रम् । पृतनासह सेनाना अभिभवितारम् ॥ (७)

अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।
उदेव ग्मन्त उदभि ॥

नृमेधस आर्षम् । अध इत्ययं पदपूरणः । हीत्ययं हेतौ ईमहे इत्येतस्माच्च परो द्रष्टव्यः । हे इन्द्र गिर्वण । गिरः स्तुतयः । ताभिर्वन्यते

सम्भज्यते यः स गिर्वण । तस्य सम्बोधनं हे गिर्वण· । स्तुतिभि· सम्भजनीय इत्यर्थ· । उपेत्ययमुपसर्ग ईमहे इत्याख्यातेन सम्बन्धयितव्य· । त्वा त्वाम् । काम । प्रथमैकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम् । कामम् । कामशब्देनात्र काम्यमानत्वात् धनमुच्यते । कामं धनं उपेमहे । उपगम्य याचामहे इत्यर्थ । कस्मात्पुनर्याचामहे । उच्यते । ससृग्महे । हि यस्मात् विसृजाम दद्म । किम् । सामर्थ्याद्धवि । एतदुक्तं भवति । यस्मात्तव हविर्दत्तं तस्माद्याचामहे इत्यर्थ । कथं याचामहे । उच्यते । उदा इव ग्मन्तः उदभिः यथा केचिद्वणिज· नदीस्रोतोलक्षणेन उदकेन बहुभिर्वा समुद्रलक्षणैरुदकैर्वाणिज्यार्थेन नावा गच्छन्त. लाभादष्टगुणं याचन्ते तद्वद्याचामहे इत्यर्थः ॥

अवा अधुना । हीति पूरणः । हे इन्द्र गिर्वणः उप ईमहे उपगच्छामः । कामे स्वकामे निमित्ते । ससृग्महे ससृजामः । त्वा त्वाम् । स्तुतिभिः इति शेषः । उदा इव उदकेनेव । ग्मन्तः गच्छन्त· पुरुषाः । उदभिः उदकैः सयोजयन्ति उदकार्थिनः पुरुषान् । अथवा काम इत्यत्र विभक्तिव्यत्ययः । कामैः धनादिभिः ससृग्महे सयुञ्जेमहि यथा उदकेन च ग्मन्त उदकैः सयुज्यन्ते तद्वत् ॥ (८)

सीदन्तस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे ।
अभि त्वामिन्द्र नोनुमः ॥

सौभरेरार्षम् । सीदन्त । कथं सीदन्त· । उच्यते वयो यथा । वयः पक्षिणः । ते यथा सन्ध्यायामेकत्र वृक्षे समस्ताः व्यवतिष्ठन्ते तद्वदेकत्र वेद्याख्ये प्रदेशे व्यवतिष्ठन्तः इत्यर्थ· । ते तव सम्बन्धिनि सोमे । कीदृशे सोमे । उच्यते । गोश्रीते । गोशब्देनात्र गोविकारत्वात पय उच्यते । तेन सह मिश्र्यते यः स गोश्रीत । तस्मिन् गोश्रीते । पयोभि-

मिश्रिते इत्यर्थ । मधौ मधुरस्वादुयुक्ते । मदिरे मदकरे इत्यर्थ । विवक्षणे वक्तुमिच्छते । येन बह्वचो वाच प्रयुज्यन्ते स विवक्षण । तस्मिन् विवक्षणे । एतदुक्तं भवति । येन सोमेन पीतेन मत्त सन् एक ऋग्य-जुस्सामविषय प्रयुङ्क्ते यजमान ॐ श्रावय अस्तु श्रौषट् इति च तस्मै यथा धनं ददासि तस्मिन् । अभिष्टुत इति वाक्यशेष । अभीत्यय-मुपसर्ग. नोनुम इत्याख्यातेन सम्बन्धयितव्य । त्वा त्वा हे इन्द्र । अभि-नोनुम अत्यर्थं स्तुम इत्यर्थ ॥

द्वयोः सौभरिः । सीदन्त तिष्ठन्त । ते तव असाधारणे । गोश्रीते गोविकारेण आशिरा पक्वे । मधौ सोमे । मदिरे हर्षकरे । विवक्षणे विवेक्तरि । सोमयागशीले इत्यर्थ. । वयो यथा पक्षिणो यथा वृक्षे सीदन्ति तद्वत् सोमे सीदन्तः वय त्वा अभिनोनुम भृश अभिष्टुम हे इन्द्र ॥ (९)

**वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः ।**
**वज्रिन् चित्रं हवामहे ॥**

सौभरेरार्षम् । वयम् । उ इति पदपूरण । त्वा त्वाम् । अपूर्व्य । अविद्यमान पूर्वो यस्मात् स अपूर्व । अपूर्व एव अपूर्व्य । स्वार्थिको यप्रत्यय । तस्य सम्बोधन क्रियते हे अपूर्व्य । स्थूरं न । नशब्द उपरिष्टादुपचारत्वादुपमार्थीय । स्थूरशब्दोऽत्र ईश्वरवचन । ईश्वरवत् । कच्चित् किञ्चिदित्यर्थ । भरन्त । डुभृञ् धारणपोषणयोरित्येतस्य पोषणा-र्थस्य इदं रूपम् । भरन्त पुष्णन्त । किम् सामर्थ्याद्धवि । अथवा स्थूरं न । नशब्द उपमार्थीय । स्थूरमिव । यथा कश्चिद्रथं भरन्त धान्यादि हरन्त प्रापयन्तो वा । अवस्यव पालनकामा इत्यर्थ । वज्रिन् ।

वज्रोऽस्यास्तीति वज्री। तस्य सम्बोधनं हे वज्रिन्। चित्रं पूज्यं त्वाम्। हवामहे आह्वयामः॥

वयं त्वा हवामहे। उ इति पूरणः। हे अपूर्व्य यस्मात् पूर्वः नास्ति सः अपूर्व्यः प्रथमः। स्थूर न कच्चित् स्थूलमिव किंचित् कुसूलादिकं यवादिभिः। त्वां भरन्तः पूरयन्तः पूरयिष्यन्तः सोमेन। अवस्यवः रक्षणं इच्छन्त.। चित्रं पूजनीयं त्वाम्। हवामहे हे वज्रिन्॥ (१०)

पञ्चमे द्वितीया दशती

---

**स्वादोरित्था विषुवतो मधोः पिबन्ति गौर्यः।**
**या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम्॥**

गोतमस्यार्षम्। स्वादोः विषुवतः मध्वः। त्रीण्येतानि उदकविशेषणानि। स्वादोः स्वादुस्य। कस्य। सामर्थ्यात् उदकस्य। विषुवतः। विषुशब्दः विप्लृ व्याप्तौ इत्यस्य व्याप्तिवचनः। व्याप्तिमतः। मधोः मधु स्वादु उदकं पिबन्ति। काः पिबन्ति। सामर्थ्यात् गावः। क पुनः पिबन्ति। उच्यते। इत्था अमुत्र देवलोके। कीदृश्यो गावः। उच्यते। गौर्यः गौरवर्णाः। इन्द्रेण सयावरीः सहगन्त्र्यः। यत्र यत्र इन्द्रो गच्छति तत्र तत्र पश्चाद्गच्छन्ति इत्यर्थः। कीदृशेनेन्द्रेण। उच्यते। वृष्णा वर्षित्रा। मदन्ति तृप्यन्ति घासादिना। शोभथा शरीरे वृद्धिलक्षणशोभनार्थम्।

वस्वी । वस्विति धननाम द्रष्टव्यम् । वम्वीः धनवत्य । क पुन तृप्यन्ति । उच्यते । अनु स्वराज्य स्वराज्य प्रति । यत्र यत्र स्वाधिपत्यं तत्र तत्र तृप्यन्ति इत्यर्थ । या इन्द्रेण सयावरीरिति परस्ताद्यच्छब्दश्रुते पूर्वोऽर्धर्चे तच्छब्द-मध्याहृत्य एकवाक्यता नेय । या इन्द्रेण सयावरी ताः स्वादोरित्था विषुवतो मध्व पिबन्तीति । अथवा गौर्य आदित्यरश्मय· गमनात् । मधो सोमलक्षणस्य । षष्ठीनिर्देशात् पिबन्त्येकदेशम् । या इन्द्रेण आदि-त्येन सयावरी सह गच्छन्त्य । वृष्णा वर्षकर्त्रा । अप मदन्ति तृप्यन्ति । शोभथा दीप्त्या । वम्वी धनवत्य स्वराज्यमनु तृप्यन्ति ॥

स्वादोरष्टादशस्वृक्षु चरमा न तमित्यसौ ।
उपरिष्टाद्बृहत्यन्यास्ता सप्तदश पङ्क्तय· ॥
चन्द्रमा नतमित्येते वैश्वदेव्यौ प्रतीत्यसौ ।
आश्विनी तिस्र आग्नेय्य आ ते अग्न इधीमहि ॥
अग्निं नाग्निं तमित्येता महे नो उषसः स्तुतिः ।
सौमी तु भद्रमित्येषा शिष्टा एकादशेन्द्रगीः ॥
आदितो गौतमोऽष्टानामृषिं· कत्वा महेति च ।
प्रतिप्रियेत्यवस्यु स्यात् चन्द्रमा इति तु त्रितः ॥
आ ते अग्निं तमित्येते द्वे वसुश्रुत समैक्षत ।
सत्यश्रवा उषस्याया अग्निं नो भद्रमित्यृचौ ॥
विमदोऽपश्यदन्त्य तु वामदेवोऽब्रवीन्न तम् ॥

इन्द्रलोको गोलोकः इत्यस्यामृचि उच्यते । स्वादोः रसवतः । इत्था अमुत्र लोके । विषुवत व्याप्तिमत. । मधोः सोमस्य । सोममित्यर्थः । पिबन्ति गौर्यः गाव. । याः इन्द्रेण सयावरी सहगन्त्र्य. । आतो मनिन्क्वनिब्वनिपश्च (पा. ३. २. ७४) इति वनिप् । वनो र च (पा. ४. १. ७) इति ङीप्प्रत्ययो रेफश्च नकारस्य । वृष्णा वर्षित्र्यः । मदन्ति तृप्यन्ति । शोभथा । पुरुषव्यत्ययः । शोभन्ते । वस्वी· वृहत्यः ता अन्वासते स्वराज्य स्वराड्भाव इन्द्रस्य ॥ (१)

इत्था हि सोम इन्मदो ब्रह्मा चकार वर्धनम्।
शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम्॥

गोतमस्यार्षम्। हिशब्दो यस्मादर्थे। इत्था सत्यं अनेन वा वक्ष्यमाणेन प्रकारेण। सोमे इत। इच्छब्दः पदपूरणः। मदः। प्रथमैकवचनमिदं सप्तम्येकवचनस्य स्थाने द्रष्टव्यम्। मदे। सप्तमी चेयं यस्य च भावेन भावलक्षणम् (पा. २. ३. ३७) इत्येवम्। तच्छब्दश्च लक्षणभूतक्रिया-पदाध्याहारः। सोमे उपकल्पिते। ब्रह्म चकार। ब्रह्मशब्दो ब्राह्मण-शब्दपर्यायः। गोतमश्च परोक्षरूपेण प्रथमपुरुषेण आत्मानं निर्दिशति। गोतमनामा ब्राह्मणः चकार करोति। किं करोति। सामर्थ्यात् स्तोत्रम्। कीदृशं स्तोत्रम्। उच्यते। वर्धनं वीर्येण शरीरेण वा वृद्धिकरमित्यर्थः। यस्मादिति वचनात्तस्मादित्याध्याहार्यम्। तस्मात् हे शविष्ठ अतिशयेन बलवन्। ओजसा स्वेन बलेन। पृथिव्याः। पृथिवीत्यन्तरिक्षनाम। अन्तरिक्षात्। निःशशाः। शश प्लुतावित्यस्येदं रूपं अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः। निर्गमय। भूमौ पातयेत्यर्थः। अहिं मेघम्। वृष्टिमित्यर्थः। अर्चन्ननु। अनुशब्दः छन्दसि परेऽपि (पा. १. ४. ८१) इत्येवं अर्चन्-शब्दात् परः प्रयुक्तः स पूर्वो द्रष्टव्यः। अन्वर्चन् अनुपूजयन्नित्यर्थः। स्वराज्यं त्रैलोक्याधिपत्यम्॥

इत्था इत्थं वक्ष्यमाणप्रकारेण। हीति पूरणः। सोमे गृहीते सतीति शेषः। इत् पूर। मदः। मदिः स्तुतिकर्मा मदः स्तोता। ब्रह्म स्तोत्रम्। चकार करोति। वर्धनं वृद्धिहेतुं तव। हे शविष्ठ शूरतम। वज्रिन् ओजसा बलेन स्वेन। पृथिव्याः अन्तरिक्षात्। निःशशाः निर्गमय। शश प्लुतगतौ इति धातुः। अहिं मेघम्। अर्चन् पूजयन् अनु अन्वास्ते स्वराज्यं स्वराड्-भावम्॥ (२)

इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥

गोतमस्यार्षम् । तमिन्महत्स्विति परस्तात्तच्छब्दश्रुतेः यच्छब्दो ऽध्याहर्तव्यः । य इन्द्रः मदाय ववृधे वर्धते स्तुतिभिः सोमैश्च । शवसे बलाय । वृत्रहा मेघस्य हन्ता । नृभिः शत्रुमनुष्यैः । अथवा वृत्रः शत्रुः । तस्य हन्ता । तमिन्द्रम् । इदिति पदपूरणः । महत्सु आजिषु सङ्ग्रामेषु । ऊतिम् । द्वितीयैकवचनमिदं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम् । ऊतये पालनाय । अर्भे अल्पे च सङ्ग्रामे । हवामहे आह्वयामः । आहूतश्च सन् स वाजेषु सङ्ग्रामेषु । प्र नोऽविषत् । प्रेत्ययमुपसर्गः अविषदित्यनेन सम्बन्धयितव्यः । नः अस्मान् । प्राविषत् प्रकर्षेण अवतु रक्षत्वित्यर्थः ॥

इन्द्रः वृत्रहा मदाय । मदयतीति मदः सामः । तदर्थम् । तं पातुं इत्यर्थः । ववृधे वर्धयते । लडर्थे लिट् । वृद्धः नियते । प्रवृद्धेन हि सामः पातव्यो भवति । शवसे बलाय । सोमपानेन हि बलं भवति इति । कैः ववृधे । नृभिः नेतृभिः स्तोत्राणां कर्मणां वा ऋत्विग्यजमानैः वा । तं इन्द्रं इत् । महत्सु आजिषु सङ्ग्रामेषु प्राप्तेषु । हवामहे आह्वयामः । इदिति एवार्थे । ऊतिम् । अवतेः कर्तरि क्तिच् । रक्षकम् । अर्भे अल्पे च सङ्ग्रामे हवामहे । स इन्द्रः वाजेषु । सङ्ग्रामेषु भविष्यत्सु । प्राविषत् प्ररक्षतु । नः अस्मान् ॥ (३)

इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन् वीर्यम् ।
यद्ध त्यं मायिनं मृगं तव त्यन् माययावधीरर्चन्ननु स्वराज्यम् ॥

गोतमस्यार्षम् । हे इन्द्र तुभ्यम् । चतुर्थ्येकवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । तव । इदिति पदपूरणः । हे अद्रिवः । अद्रयः अभिषवणग्रावाणः । तैस्तद्वान् । अथवा अद्रिर्मेघः । तेन हन्तव्येन तद्वान् ।

अथवा अद्रिर्वज्र । तेन तद्वान् । अनुत्तम् । नुद प्रेरणे इत्येतस्येदं रूपम् । अप्रेरितम् । अनभिभूतपूर्वं केनचिदित्यर्थ । हे वज्रिन् वीर्यं सामर्थ्यमित्यर्थः । येन किं कृतम् । उच्यते । यद्ध त्यम् । ह इति पदपूरण । त्यच्छब्द तच्छब्देन समानार्थ । द्वितीया च तृतीयार्थे द्रष्टव्या । येन । मायिनं मायावन्तम् । मृगं नामासुरम् । मार्गणीयं वा मेघम् । तच्छब्दश्रुतेश्च योग्यार्थमम्बन्धो यच्छब्दोऽध्याहर्तव्य । यमन्ये हन्तुमशक्नुवन्त । त्यत् तं तव मायया स्वकीयया प्रज्ञया अवधी । अर्चन्ननु स्वराज्यमित्युक्तार्थम् ॥

हे इन्द्र तुभ्य इत् तवैव । वीर्यं अनुत्त अनुक्त केनापि । हे अद्रिवः अद्रिमन् । अद्रयः अभिषवणग्रावाण । हे वज्रिन् यत् येन वीर्येण । हेति पूरणः । मायिन मायाविनम् । त्यं तम् । मृगं मार्गितव्यं इतस्ततः । न दृश्यमित्यर्थः । मायया अवधीः मृगनामानं असुरम् । तव तवैव । त्यत् तत् कर्म भवति । अर्चन्ननु स्वराज्यं इति सिद्धः पादः ॥　　(४)

**प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते ।**
**इन्द्र नृम्णं हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥**

गोतमस्यार्षम् । प्रेहि प्रगच्छ । प्रगम्य च अभ्येहि । अभिगम्य च धृष्णुहि अभिभव च शत्रुम् । किं कारणम् । उच्यते । यस्मात् न ते वज्रो नियंमते यस्मात्तव स्वभूतो वज्र न नियम्यते । न निवार्यते केनचिदित्यर्थ. । किंच हे इन्द्र नृम्णं हि ते शव यस्मात शत्रुभूतानामपि मनुष्याणामवनामकं तव शव बलं तस्मात् हन वृत्रं मेघम् । हत्वा च जया अप साधय पातय वा । अर्चन्ननु स्वराज्यम् ॥

प्रेहि प्रगच्छ । अभीहि अभिगच्छ शत्रून् । धृष्णुहि आक्रमस्व । न नियंसते न नियम्यते केनचित् । ते वज्रः हे इन्द्र । नृम्णं नृणा

नामकम्। हि ते शवो बलम्। हनः जहि वृत्रम्। जया वशीकुरु अपः। सिद्धः शेषः॥ (९)

**यदुदीरत आजयो धृष्णवे धीयते धनम्।**
**युङ्क्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्मा इन्द्र वसौ दधः॥**

गोतमस्यार्षम्। यत् यस्मात्। उदीरत उच्चारयन्ति तव स्तुतीरित्यर्थ। आजयः। आजि· सङ्ग्राम। तस्माच्चात्र तात्स्थ्यं लक्ष्यते। मञ्चा क्रोशन्तीति यथा। सङ्ग्रामस्था मनुष्या·। यदा च धृष्णवे परकीयानामभिभवित्रे। योद्धे इत्यर्थ। धीयते परितुष्टै· स्वामिभिर्दीयते धनम्। अथवा यदा उदीरते उदीर्यन्ते प्रेर्यन्ते। कास्ता.। उच्यते। आजयः। अज गतिक्षेपणयोरित्येतस्येदं रूपम्। त्वा प्रति गन्त्र्यः स्तुतय इत्यर्थ·। किं च धृष्णवे शत्रूणामभिभवित्रे तव। धीयते दीयते धनम्। धिनोते प्रीणनार्थस्य धनम्। प्रीणयति सोमाहुतिरित्यर्थ·। यदेति वचनात्तदेत्यध्याहार्यम्। तदा युङ्क्ष्व स्वरथे अस्मत्समीपागमनार्थम्। मदच्युता मदच्युतौ हरी मदकर सोमं प्रति गन्तुमुन्मुखौ अश्वौ। एतय च कं हन· कं वसौ दध. कंचित् जहि। कंचिद्वसौ दध धृतवान्। केषाचिद्धनं देहीत्यर्थः। तत्रास्मान् हे इन्द्र वसौ दध अस्मान् धने धारय। अस्मभ्यं धनं देहीत्यर्थ॥

अत्रेदमाख्यानम्। रहूगणपुत्रो गोतमः कुरसृञ्जयाना पुरोहित आसीत् इति। यद्यदा आजयः सङ्ग्रामाः। उदीरते उद्गच्छति उत्पद्यते। तदानीं धनं धृष्णवे यो धृष्णु· धर्षयिता शत्रूणा जेता भवति तस्मै। धीयते दीयते। धनं भवतीत्यर्थः। हे इन्द्र त्वं तादृशेषु प्रवृत्तेषु मदच्युता शत्रूणा मदस्य च्यावयितारौ। हरी त्वदीयावश्वौ। युङ्क्ष्व त्वदीये रथे योजय। योजयित्वा च कंचिद्राजानं तव परिचरणमकुर्वन्त हन. हसि। कचन त्वा परिचरन्तं वसौ

धने दधः स्थापयसि । हे इन्द्र अस्मान् अस्मदीयान् त्वत्परिचारकान् वर्मो धने दधः स्थापयेति ॥ (६)

**अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।**
**अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥**

गोतमस्यार्षम् । अक्षन् । अदेर्भक्षणार्थस्येदं रूपम् । अक्षन्ताम् । अमीमदन्तेति तृप्त्यर्थं । हिशब्दश्चार्थे । तृप्तवन्तश्च । के । सामर्थ्यात् पितरः । अवेत्ययं अधूषतेत्यनेन सम्बध्यते । कीदृशा· पितर । प्रिया· मम गोतमस्य भवतो वा इन्द्रस्य । अवाधूषत । धून् कम्पने इत्यस्येदं रूपम् । कम्पितवन्तः । अस्तोषत । स्तुताश्च अस्माभि· स्वभानव· स्वदीप्तयः । अनन्यविभूतय. अपराश्रयविभूतय इत्यर्थ । विप्रा. मेधाविनः । नविष्ठया नवतरया । मती । मन्यति इत्यर्चतिकर्मा । मति· स्तुति· । तस्मात् तृतीयैकवचनम् । तस्मात् अयमीकर आदेशः । मती मत्या । अन्येनानुक्तपूर्वया स्तुत्येत्यर्थ· । कृतबुद्धिश्रद्धा यानयोग्या वयम् । एतत ज्ञात्वा अस्मद्यज्ञमागन्तुं योज नियुङ्क्ष्व । नु क्षिप्रम् । हे इन्द्र ते तव स्वभूतौ हरी अश्वावित्यर्थः ॥

श्राद्धे क्लृप्ताना विप्राणा श्रावणे विहिता एषा । अक्षन् अक्षितवन्तः । घस्लृ अदने इत्यस्माददेर्वा घस्लादेशे लुङि रूपम् अक्षन्निति । मन्त्रे घसह्वर् (पा. २. ४. ८०) इत्यादिना च्लेर्लोपः । अमीमदन्त मादयन्ति स्म । तृप्ता आसन् । हीति चेत्यस्यार्थे । अवाधूषत अवाधून्वन्त क्षुधम् । प्रियाः अस्माकं पितरः विप्ररूपमधिष्ठाय स्थिताः । अस्तोषत अस्तुवन्त । स्वभानवः । स्वीयतया परिगृहीतः भानुः दीप्तिः येषा ते स्वभानवः । विप्राः प्राज्ञाः । नविष्ठया नवतमया । मती मत्या । तैः सह गृहान् गन्तुं योज युङ्क्ष्व रथे । नु सद्यः हे इन्द्र । ते तव हरी अश्वौ ॥ (७)

**उपो षु शृणुही गिरो मघवन् मा तथा इव ।**
**कदा नः सूनृतावतः कर इदर्थयास इद्योजा न्विन्द्र ते हरी ॥**

गोतमस्यार्षम् । उपेत्ययमुपसर्गश्रुते क्रियापदमध्याहार्यम् । उपगम्य सुशृणुहि सुष्ठु शृणुहि । गिर अस्मदीया स्तुती । हे मघवन् धनवन् । मा तथा । तनु विस्तारे इत्यस्येद रूपम् । मा विस्तार कार्षी । मा विलम्बिष्ठा । शीघ्रमागच्छेत्यर्थ । इवेत्ययमुपमार्थे अस्त्युपमार्थस्य सप्रत्यये प्रयोग इति पदपूरण । कदा न अस्मान् । सूनृतावत कर अन्नवन्त करिष्यसि । इत् इति पदपूरण । कदाचिदर्थयासे प्रार्थयसे प्रार्थयिष्यसि । किम् । सामर्थ्याद्धि च । एतदुक्त भवति । कदा अस्मान् धनवत करिष्यसि । कदा च हवि प्रार्थयिष्यसीति एतदाशास्महे । एतत् ज्ञात्वा योजा न्विन्द्र ते हरी ॥

उप उ उपो । उपशृणुहि सु सुष्ठु । न अस्मदीया । गिर स्तुती हे मघवन् । मा मा श्रौषी । अतथा इव अयथाथा इव परेषा स्तुती । कदा न अस्मान् । सूनृतावत सत्यस्तुतियुक्तान । कर कुर्या । इत् इत् इतीमौ पादपूरणौ । अथयासे प्रार्थयेथा कदा अस्माभि । कदा वय त्वा स्तुवा महि । कदा च कामान् प्रार्थयेमहि इति । युङक्ष्व अद्य ते हरी इन्द्र अस्मान् आगन्तुम् ॥ (८)

**चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि ।**
**न वो हिरण्यनेमयः पद विन्दन्ति विद्युतो वित्त मे अस्य रोदसी ॥**

त्रितस्यार्षम् । अत्रेतिहासमाचक्षते । आप्तस्य त्रय पुत्रा आसन एकतो द्वित त्रित इति । ते यज्ञकामा स्वान् याज्यान् गा यया चिर लेभिर च । ता आदाय सरस्वत्यास्तारेण पथा गच्छत तान् परस्मिन्

कूले निषण्ण एको वृक्षो ददर्श । दृष्ट्वा चोत्थाय अभ्यपद्यत ग्रहीतुं चोपचक्रमे । ततस्ते ऋषयः गवादकाङ्क्षीता गाश्च पलायाचक्रिरे । नेषा त्रस्यता तृतो निर्जले पांसुभि वीरुद्भि तृणैश्चाच्छादिते अन्धकूपे पपात । एकतद्वितौ गा आदाय पालयाचक्राते । तदा त्रितस्य चिन्ता बभूव । कृतसंकल्पस्य अकृतसोमस्य मृत्युर्न श्रेयसे । तत् कोऽभ्युपाय स्यात् येनाहं सोम पिबेयं इति । स एवं चिन्तयान ततो लम्बमाना वीरुधं ददर्श । तां सोम इति संकल्प्य योगैश्वर्यादुदकं तत्र चकार अभ्याधानादीनि यागसाधनानि च । शर्करा ग्राव्ण स्थाने परिकल्प्य ताभि ता वीरुधमभिषुषाव । वीरुधमभिषुत्य यागार्थं देवानाजुहाव । ते आह्वानकारणमनवबुध्य देवा आविग्ना बभूवुः । तदाह्वानं बृहस्पति शुश्राव । स देवानुवाच । अस्मिन् कूपे त्रितस्य वर्तते यज्ञ । तत्र गच्छाम । अथ तत्र सर्वे देवा आजग्मुः । तानागतान् कूपादुत्तारणार्थी त्रित क्रमेण अनुतुष्टाव । चन्द्रमा अप्स्वन्त. अपा मध्ये । साकाङ्क्षत्वात् व्यवस्थित इति वाक्यशेषः । अम्मये मण्डले व्यवस्थित इत्यर्थ । कीदृश चन्द्रमा । उच्यते । सुपर्णः । पृ प्रीणने इत्यस्येदं रूपम् । सुष्ठु प्रीणयिता मम त्रितस्य । अथवा सुवर्ण इति रश्मिनाम । अन्तर्णीतमत्वर्थे चेह द्रष्टव्यम । रश्मिमान् । किं करोति । उच्यते । आधावते मर्यादया सर्वकालं गच्छति । क । दिवि द्युलोके । न वः युष्माकम् । हिरण्यनेमयः । हिरण्यमया नेमयः यासां रथेषु ता हिरण्यनेमय । तासा सम्बोधनं हे हिरण्यनेमयः । पदम् । पादनिधानात् तदाकारं यत् कर्दमादावुत्पद्यते तत् पदमित्युच्यते । तत् विन्दन्ति लभन्ते । पश्यन्तीत्यर्थः । हे विद्युतः । चन्द्रमा उदकमये स्वमण्डले व्यवस्थितः सर्वदा दिवि गच्छन् उपलभ्यते । युष्माकं हे विद्युतः वर्षाभ्योऽन्यत्र पदमिदं नोपलभ्यते इत्यर्थः । वित्तं मे अस्य । विद ज्ञाने । श्रवणेन च

यत् ज्ञानं तदिहाभिप्रेतम्। अस्येत्यपि सन्निहितत्वात् स्तोत्रस्य प्रतिनिर्देशः। द्वितीयार्थे षष्ठी। शृणुत ममेदं स्तोत्रमित्यर्थः। अथवा अस्येति दुःखस्य प्रतिनिर्देशः। विजानीतं ममेदं कूपपातनिमित्तं दुःखम्। विज्ञापनं चेदमुत्तारणार्थं क्रियते। आर्तानुग्रहस्वभावकतया मामितः कूपादुत्तारयतं इत्यर्थः। हे रोदसी द्यावापृथिव्यौ। अथवा अन्येन प्रकारेणोच्यते मन्त्रः। चन्द्रमाः। अनेन साम्नाभिषुत्य सोम उच्यते। अप्स्वन्तः प्रविष्टः ग्रावभिरभिषुतः उदकेन च प्रावितः। सुपर्णः शोभनपर्णः। चन्द्रमसः क्षयवृद्ध्यादिनिष्पन्नः पर्णः। स आधावते गच्छति दिवि। कथं च गच्छति दिवि। अग्नौ प्रास्ता आहुतिः सम्यगादित्यमुपतिष्ठते इत्यनेन प्रकारेण आधावते। हिरण्यमयो नेमिर्येषां रथेषु ते हिरण्यनेमयः। तेषां सम्बोधनं हे हिरण्यनेमयः। वः युष्मदीयं पदं स्थानं वा। न विन्दन्त्यत्र विद्युतः आहुतयः विविधं द्योतयन्त्यः। किं तर्हि। वित्तं मे मम अस्य यज्ञस्य मनोमयस्य। रोदसी द्यावापृथिव्यौ। एतदुक्तं भवति। श्रद्धाकृतस्य समाहुतयः सम्प्रगृह्यन्ता मनोमात्रसम्पादिता स्तुतयश्च। एतद्बुध्वा आगम्य देवाः कूपादुत्तारितवन्तः यज्ञे च भागमास्वोदकं दत्तवन्तः परितोषात्॥

एकतश्च द्वितश्चैव त्रितश्चासस्य सूनवः।
ते याजयित्वा सर्वा गा निवृत्ता मरुधन्वसु॥
पिपासयार्तास्तैरेकं कूपं लब्ध्वा हि तत्स्थिताः।
अवरोढुं तमिच्छन्तस्त्रितस्तत्रावरूढवान्॥
इतरौ तु बहिर्लब्ध्वा पीत्वोदकमतृप्यताम्।
कूपं पिधाय चक्रेण तं गा आदाय जग्मतुः॥
त्रितस्तु कूपे पिहितो देवान् स्तौतीति नः श्रुतम्।
स कूपो निर्जलो नूनं यत्रासौ पतितस्तृषा।
तस्य चन्द्रमसं रात्रौ पश्यतः परिदेवना॥

चन्द्रमा अप्स्वन्तः अम्मये मण्डले स्थितः आधावते दिवि अन्तरिक्षे। सुपर्णः सुरश्मिः। हे हिरण्यनेमयः विद्युतः। हिरण्यनेमय इत्युपमा। हिरण्यनेमयो रथा इव दृश्यमानाः। यद्वा अभिमतरमणीयमार्गाः। न विन्दन्ति न लभन्ते। वः युष्माकम्। पदं गमनमार्गं मनुष्याः। अथवा विद्युदभिमानिन्यः देवताः स्तूयन्ते। चन्द्रमाः सर्वदा दिवि आधावन्ते। युष्माकं तु विरळः प्रचार.। यूयं च इदानीं दृश्यध्वे। पिपासा मे शाम्येदिति परिदेवना। हे रोदसी द्यावाभूमी। वित्तं विजानीतम्। मे मदीयस्यास्य व्यसनस्य। इदं व्यसन जानीतमित्यर्थ.। बहुदेवतत्वात् वैश्वदेवम्॥　　　　(९)

**प्रति प्रियतमं रथं वृषणं वसुवाहनम्।**
**स्तोता वामश्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुतं हवम्॥**

अवस्योरार्षम्। प्रतीत्ययं लक्षणे कर्मप्रवचनीयः रथमित्यनेन सम्बद्ध्यते। रथं प्रति। कीदृशं रथं प्रति। उच्यते। प्रियतमं अतिशयेन प्रियम्। वृषणं वर्षितारम्। वसुवाहनम्। वसु धनं उह्यते प्राप्यते नीयते येन स वसुवाहनः। तं वसुवाहनम्। धनस्य नेतारम्। नीत्वा च ऋत्विग्भ्यः दातारमित्यर्थ·। स्तोता वा युवयो· हे अश्विनौ। ऋषिम्। अवस्युर्नाम ऋषिः आत्मानमेव परोक्षरूपेण प्रथमपुरुषेण निर्दिशति। स्तोमेभि· स्तुतिभिः। भूषने। प्रतिशब्द पुरस्तादपकृष्टव्यः उपेत्येतस्य च स्थाने द्रष्टव्यः। भूषति इति भवते रूपम्। उपभवति समीपे भवतीत्यर्थः। एतत् ज्ञात्वा हे माध्वी। मधुपूर्णो दृति· माध्व·। तस्येदम् (पा. ४. ३. १२०) इत्यण्।

यो ह वां मधुनो दृतिराहितो रथचर्षणे (ऋ. वे. ८. ५. १९) इति मन्त्रान्तरदर्शनात्। स ययोरस्ति तौ माध्वी। छन्दसीवनिपौ (वा ५. २. १०९) इति ईकारो मत्वर्थीयः। तयोः सम्बोधनं हे माध्वी। मम श्रुतं हवं आह्वानम्॥

प्रतिभूषति प्रतिभूषयति। स्तोमेभिः स्तोत्रैः। अन्यतरः प्रतिरनुवादः। प्रियतमं वा युवयोः। रथ वृषण वर्षितारम्। वसुवाहन धनाना वोढारम्। स्तोता वा युवयो. ऋषिः अवस्युः हे अश्विनौ। माध्वी मधुविद्याविदौ। मम श्रुत शृणुतं हवम्।

आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम्।
स वा मधु प्र वोचदृतायन् त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वाम्॥

(ऋ. वे. १. ११७. २२)

इति निगम. ॥

इति पञ्चमे तृतीया दशती

---

**आ ते अग्न इधीमहि द्युमन्तं देवाजरम्।**
**यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर॥**

वत्सस्यार्षम्। विनियोगोऽस्य पञ्चमेऽहनि। आ इधीमहि दीप्तिमन्तं कुर्यामहे हे अग्ने। द्युमन्तं द्युतिमन्तम्। देव अजरं अजीर्णयत्। यद्ध स्या सा। ते तव। पनीयसी स्तुत्या। का सा। समित् समिन्धनम्। दीदयति दीप्यते। द्यवि दिवि। इषं द्युमन्तं देव अजरं अन्नं तत् स्तोतृभ्यः आभर आहर॥

आ इधीमहि आदीपयामः। ते त्वामित्यर्थः। हे अग्ने द्युमन्तं दीप्तिमन्तम्। हे देव अजरं त्वाम्। यत् यस्य ते। हेति पूरणः। स्या सा प्रसिद्धा। पनीयसी स्तुत्यतरा। समित् दीप्तिमत्। दीदयति दीप्यते। द्यवि अन्तरिक्षे। स त्वं इषं अन्नम्। स्तोतृभ्यः आभर आहर॥ (१)

अग्निं न स्वदृक्तिभिर्होतारं त्वा वृणीमहे ।
शीरं पावकशोचिषं वि वो मदे यज्ञेषु स्तीर्णबर्हिषं विवक्षसे ॥

अग्निं न स्ववृक्तिभि होतार आह्वातारं आवृणीमहे । शीरं घृतम् । पावकशोचिषं शान्तदीप्तिम् । वि व मदे मदार्थे । यज्ञेषु । व्यत्ययेन एकवचनस्य स्थाने बहुवचनम् । यज्ञे । स्तीर्णबर्हिषं विवक्षसे ॥

आवृणीमहे प्रार्थयाम. । त्वा त्वाम् होतारं होतृत्वेन । अग्निमग्रणीं त्वाम् । न सम्प्रति । स्ववृक्तिभिः सुवृक्तिभिः स्तुतिभिः । शीरं अनुशायिनमिति यास्कः (नि. ४. १४) अनुशयान सर्वत्र । पावकशोचिष शोधकदीप्ति त्वाम् । वीत्युपसर्गेण आख्याताध्याहारः । विभवसि । वः मदे सति सोमस्य । स त्व यज्ञेषु स्तीर्णबर्हिषं यजमानम् । विवक्षसे विवहसि ॥ (२)

महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥

आग्नेयौ मन्त्रौ । महे नः महते अस्मान् अद्य अस्मिन्नहनि । बोधय उषः । राये धनार्थम् । दिवित्मती दिव दुहिता । यथा येन प्रकारेण । चित् नः अबोधयः । सत्यश्रवसि । सत्यश्रवो नाम राजा वाय्यः । सुजाते । शोभनजाते । अश्वसूनृते ॥

महे महते । राये धनाय । बोधय धनप्राप्त्यर्थं प्रवर्तय । नः अस्मान् । अद्य हे उषः । दिवित्मती दीप्तिमती । यथा चित् यथैव । नः अस्मान् । अबोधयः त्वं पूर्वस्मिन्नपि काले । सत्यश्रवसि ऋषौ विद्यमानान् । तस्य मम वंश्यानित्यर्थः । वाय्ये वयस्यापत्ये च विद्यमानान् । यथा अबोधयः तथा अस्मान् अद्य बोधय ।

त्वं आविथ नर्यं तुर्वशं यदुं त्वं तुर्वीतिं वय्यं शतक्रतो ।
(ऋ. वे. १. ५४. ६)

इत्यादिषु वय्यश्च श्रूयते । हे सुजाते शोभनप्रादुर्भावे । अश्वसूनृते । अश्वा आशुकारिणी सूनृता वाक् यस्याः सा अश्वसूनृता ॥ (३)

**भद्रं नो अपि वातय मनो दक्षमुत क्रतुम् ।**
**अथा ते सख्ये अन्धसो वि वो मदे रणा गावो न यवसे विवक्षसे ॥**

भद्रं भजनीयम् । अपिवातय गमय । नकारः शब्दोपजनः । मन अन्तःकरणम् । दक्षं शीघ्रम् । उत अपिच । क्रतुं कर्म ज्ञानं वा । अथानन्तरम् । ते तव । सख्ये सखिभावाय । अन्धसः वि वः मदे रण रमय । गावः न गाव इव यवसे यथा रमन्ति तद्वत् रण । विवक्षसे महते ॥

भद्रं भजनीयं कल्याणम् । दक्षं बलम् । नः अस्मान् । अपिवातय प्रगमय । मनः मनसा हे सोम । उत अपिच । क्रतुं प्रज्ञानं अपिवातय । अथ अपिच । ते तव सख्ये । अन्धसः अन्नभूतस्य देवानाम् । रणा रमन्ता स्तोतारः । गावो न गाव इव । यवसे घासे । अत्र तु वि वो मदे विवक्षसे इति भिन्ने वाक्ये परस्परानपेक्षे । विभवति इन्द्र इति वा विभवन्ति देवा इति वा । वः तव मदे सति । त्वं च विभवसि विश्वं जगत् ॥ (४)

**क्त्वा महाँ अनुष्वधं भीम आ वावृते शवः ।**
**श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवान् दधे हस्तयोर्वज्रमायसम् ॥**

क्त्वा कर्मणा । अनुष्वधं अन्वन्नम् । भीमः । बिभेत्यस्मादिति भीमः भयानकः । शव. बलम् । आ वावृते वर्तते अत्यर्थम् । ऋष्वः महान् । उपाकयोर्हस्तयोः । नि शिप्री हरिवान् अश्ववान् . . . . . . . . . ॥

क्रत्वा कर्मणा हेतुना । कर्म कर्तुमित्यर्थः । महान् भीम इन्द्रः । अनुष्वध स्वधया अन्नस्य पश्चात् । सोमपानानन्तरमित्यर्थः । आववृते अभिवर्तयति । शवः बलम् । श्रिये पुष्ट्यर्थम् । उपाकयोः समीपवर्तिन्योः द्यावापृथिव्योः । श्रिये निदधे निधत्ते हस्तयो । वज्रं आयस अयोमयम् । ऋष्वः दर्शनीयः । ऋष गतौ । गत्यर्था बुध्यर्था. । शिप्री सुहनुः । हरिवान् हरिवाहनः ॥　(५)

**स घा तं वृषणं रथमधितिष्ठाति गोविदम् ।**
**यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥**

. . . . . . . . . . . . . . .

अधितिष्ठति किञ्चित् । गोविदं गाः येन लभ्यन्ते तम् । यः पात्रं हारियोजनं पूर्ण इन्द्रं चिकेतति प्रकाशयत्यात्मानम् । योजा योजयामः । नु इन्द्र ते तव हरी अश्वौ गमनाय ॥

स घ स एव । त प्रसिद्धम् । वृषण वर्षकरम् । रथं इन्द्रस्य अधितिष्ठति अधितिष्ठेत् । यः पात्र हारियोजनं हारियोजनाख्यम् । गोविदं सोमग्रहम् । पूर्ण सोमेन । चिकेतति ज्ञापयेत तुभ्य हे इन्द्र । यो यज्ञ समापयतीत्यर्थः । सर्वेषा हि सोमग्रहाणा अन्त्यो हारियोजनो यज्ञपुच्छे क्रियते । योजा नु क्षिप्रं इन्द्र ते हरी अस्मिन् यज्ञे आगन्तुम् ॥　(६)

**अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।**
**अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भर ॥**

विनियोगोऽस्य विधृतिषु । अग्निं तं मन्ये जानीम । यः यावत् । वसु धनं प्रभूतम् । अश्वं यं विड्भूतं ज्ञात्वा अस्तं गृहं गच्छन्तः धेनवः ।

अस्तमर्वन्त अश्वा । आशव शीघ्रा । ज्ञात्वा यन्ति तमग्निम् । निल्यासो नित्या । वाजिन वेगवन्त । इष हविरन्न वा । स्तोतृभ्य आभर आहर ॥

अग्नि त मन्ये स्तौमि । य वसु वासक । प्रशस्य इति वा । अस्तमिति गृहनाम । अस्त निवासमिव । य यन्ति उपगच्छन्ति धेनव । यत्र अग्नि परिपच्यते तत्र यन्ति । अस्तमिव अर्वन्त अश्वा । आशवः क्षिप्रगामिन । नित्यास अवियुक्ता । वाजिन वेगवन्त । अस्तमिति पादभेदात् पुनरुक्ति । विशेषणभेदाद्वा । अथ प्रत्यक्षम् । इष अन्नम् । स्तोतृभ्य आभर ॥ (७)

न तमंहो न दुरितं देवासो अष्ट मर्त्यम् ।
सजोषसो यमर्यमा मित्रो नयति वरुणो अति द्विष ॥

न त अह पापम् । न दुरित कुत्सित गमनम् । देवा अष्ट व्याप्नोति । मर्त्य मरणधर्माणम् । किंविशिष्टा । सजोषस समानजातीया । अर्यमा मित्रो नयति वरुण । अति द्विष अतीत्य द्विष वर्तन्ते इति अतिद्विष ।

न त निन मर्त्यम् । अष्ट अश्नुते व्याप्नोति । अह आदन्त्व किंचिद्वस्तु । न च दुरित पाप तमष्ट । देवास हे देवा । य मर्त्य अर्यमा मित्र वरुणश्च द्विष द्वेष्टॄन् । अतिनयन्ति अतिगमयन्ति । प्रत्येकमभिमन्वयात्रयतीत्येकवचनम् । कादृशा ते अर्यमप्रभृतय । तत्राह । सजोषस सह प्रियमाणा ॥ (८)

इति पञ्चमे चतुर्थी दशती

परि प्रधन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥

विनियोगोऽस्य दशमेऽहनि अनुष्टुप्पिपीलिकमध्या . . . . . . . . ॥

त्रिंशत्परि प्रधन्वेति प्रायशो द्विपदा इह ।
पर्यूषु प्रानु हि त्वेति त्रिपदे द्वे अनुष्टुभौ ॥
ते पिपीलिकमध्याख्ये पुरउष्णिक् पराजनि ।
पङ्क्तिरग्ने तमद्येति पदपङ्क्ति यदन्त्यमूम् ॥
त्रयः पञ्चाक्षरा आद्याश्चतुर्थश्चतुरक्षरः ।
पञ्चविंशत्यक्षरेयमन्त्यपाद षडक्षर. ॥
गायत्र्येकपदा येयमिन्द्रो विश्वस्य राजति ।
आद्याः षड्दशमी चात्र पावमान्य. क ईमिति ॥
मास्त्वैका भवत्याविरित्येषा वाजिना स्तुतिः ।
अग्ने तमद्या चेत्यग्निरग्ने त्व भग इत्यमू' ॥
ऋचश्चतस्र आग्नेय्य उषा आयाद्युषा.स्तुति' ।
सदा गाव इमानूर्जा वैश्वदेव्य इमा ऋचः ॥
ऐन्द्रयो ऽवशिष्टा इत्येवं छन्दोदैवतनिर्णयः ।
अष्टाना पावमानीना यौ पिपीलिकमध्ययोः ॥
त्र्यरुणत्रसदस्युश्च तौ द्वयोः सहितावृषी ।
शिष्टानामृषयस्त्रयोणा धिष्ण्या ऐश्वरयोऽग्नयः ॥
वसिष्ठस्तु क ई व्यक्ताः सावतः स्याद्गुषस्त्ययोः ।
ब्रह्माण इन्द्रमनव इत्यवस्युर्वैश्चत ॥
बन्धुर्गोपायनोऽग्ने त्वमिमा न्वास्यस्तु भौवनः ।
अया वाजे भरद्वाजो वामदेव्योऽपरा ऋचः ॥

परि परितः । प्रधन्व प्रक्षर दशापवित्रात् । इन्द्राय हे सोम । स्वादुः मधुरः त्वम् । मित्राय पूष्णे भगाय च देवाय प्रधन्व (१)

**पर्यू षु प्रधन्व वाजसातये परि वृत्राणि सक्षणिः ।**
**द्विषस्तरध्या ऋणया न ईरसे ॥**

. . . . . *प्रगच्छ वाजसातये अन्नसंभजनाय यजमानाय ।* परि वृत्राणि सक्षणि सर्क्षा वृत्राणा । द्विषस्तरध्यै तारयितुम् । ऋणया ऋणस्य यावयिता । न ईरसे आगच्छति अस्मान्प्रति ॥

परि प्रधन्व वाजसातये अन्नलाभाय अस्माकम् । पुनरुक्तिरादरार्था । उ सु इतीमौ पूरणौ । परिधन्व वृत्राणि शत्रून् । सक्षणिः अभिभावुकः । द्विषः शत्रून् । तर्ध्यै हिंसितुम् । ईयसे गच्छ । ऋणया. ऋणाना यावयिता । न. अस्माकम् । पुनरुक्तिरादरार्था । (२)

**पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥**

विनियोगोऽस्य अष्टमेऽहनि । पवस्व पूतो भवसि हे सोम । महान् समुद्र समुद्र इव महान् समुद्नो वा । पिता निर्माता देवाना वस्वादीनाम् । विश्वा विश्वानि । अभि धाम स्थानानि ॥

पवस्व क्षर हे सोम । विश्वा विश्वानि । धाम धामानि तेजासि । अभि देवान् उद्दिश्य । महान् पूजनीय. । समुद्रः सम्यग्द्रावणः रसाना समुन्दानां वा । पिना जनयिता देवाना त्वम् ।

त्व सोमः पवते जनिता मतीनाम् ।(ऋ. वे. १. १६. ९)
इति हि भवति ॥ (३)

**पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥**

विनियोगोऽस्य नवमेऽहनि । महे महते । दक्षाय समृद्धाय शीघ्राय वा । अश्वो न नक्तः अश्व इव शुद्धः । वाजी अन्नवान् वेगवान् वा । धनाय धनार्थम् ॥

पवस्व हे सोम महे महते । दक्षाय बलाय अस्माकम् । अश्वो न अश्व इव । निक्तः स्नातः । वाजी वेगवान् । त्वं धनाय च नः पवस्व ॥ (४)

इन्दुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥

इन्दुः सोमः । पविष्ट जातः । चारुः शोभनः । मदाय मदार्थम् । कः । अपामुपस्थे अङ्के । कविः मेधावी । भगाय भगार्थम् ॥

इन्दुः । इन्धेर्दीप्तिकर्मणः इन्देर्वा क्लेदनकर्मण इन्दुः सोमः । पविष्ट पवते इत्यर्थः । चारुः शोभनः । मदाय देवानाम् । अपामुपस्थे उपस्थाने अन्तरिक्षे । कविः शब्दायमानः । कै शब्दे । भगाय धनार्थं अस्मभ्यम् ॥ (५)

अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये ।
वाजाँ अभि पवमान प्रगाहसे ॥

विनियोगोऽस्य दशमेऽहनि । त्वा त्वाम् । सुतं अभिषुतम् । सोम मदामसि अनुमदामहे । महे महते । समर्यराज्ये विप्रराज्ये यज्ञे । वाजान् अन्नानि । हे पवमान अभिप्रगाहसे । पिपीलिकमध्या अनुष्टुप् ॥

अनुमदामसि अभिष्टुमो वयं त्वाम् । हीति पूरणः । सुतं अभिषुतं त्वाम् । महे महते । समर्यराज्ये युद्धे राजनाय । वाजान् युद्धानि । अभि प्रगाहसे स्तोतॄणामर्थाय त्वम् ॥ (६)

क ई व्यक्ता नरः सनीडा रुद्रस्य मर्या अधा स्वश्वाः ॥

क ई व्यक्ता नर· सनीडाः सह नीडेन स्थिता· । रुद्रस्य पुत्रा· । मर्या मनुष्या । अधा स्वश्वा शोभनाश्वाः । मारुती ऋक् ॥

के भवन्ति । ई इमे । व्यक्ताः प्रकाशमानाः । नरः नेतारः । सनीडाः समानस्थानाः । रुद्रस्य पुत्रा इति शेषः । मर्याः मर्येभ्यो मनुष्येभ्यो हिताः । मर्याकारा इति वा । अध अपिच । स्वश्वाः इति रूपातिशयदर्शनात् विस्मयेनाह ॥ (७)

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् ।
ऋध्यामा त ओहैः ॥

विनियोगोऽस्य ज्योतिष्टोमे । अद्य अस्मिन्नहनि । अश्वं न स्तोमैः यथा अश्वं रथसंयोज्यमश्वं स्नेहपानादिभिः शक्नुवन्ति एवं स्तोमैः ऋत्विजः ओहैः ओघै· उहनैः क्रतुं कर्म पूजास्थानम् । न इति संप्रत्यर्थे । भद्रं दीप्तम् । हृदिस्पृशं हृदयं स्पृशति हृदयेन वा स्पृश्यते इति । ऋध्याम । आग्नेयी ऋक् ॥

हे अग्ने । त ते । त्वामित्यर्थः । अद्य अस्मिन् दिवसे । अश्व न अश्वमिव वोढारम् । क्रतुं न कर्तारमुपकर्तारमिव । भद्रं भजनीयम् । हृदिस्पृशं प्रियम् । स्तोमैः ऋध्याम समृद्धयामः । ओहैः वहकैः इति स्तोमविशेषणम् ॥ (८)

आविर्मर्या आ वाजं वाजिनो अग्मन् देवस्य सवितुः सवम् ।
स्वर्गां अर्वन्तो जयत ॥

विनियोगोऽस्य वाजपेये। ब्रह्मा रथचक्रेऽभिगायति। आविः प्रकाशमान। मर्या मनुष्या। वाजं वाजपेयं अन्नं वा। वाजिन अश्वाः। आ अग्मन् आयान्ति। देवस्य सवितु॰। सविता सर्वस्य प्रसविता। तस्य। सवं प्रसवं अभ्यनुज्ञा प्रतिपाल्य। स्वर्गान् स्वर्गलोकम्। अर्वन्तः अश्वान् जयत यान्ति। पुरउष्णिक्। सोमो देवता॥

इयमृक् साम वा अस्या गीयमान वाजपेये अध्वर्युणाजिधावने क्रियमाणे ब्रह्मणा प्रयुज्यते। वाजिनो नाम देवविशेषाः। वाजिनभाजः ते मर्या. मर्येभ्यो हिताः। आविः प्रकाशमानाः। आ अग्मन् आगच्छन्तु। वाज युद्धम्। देवस्य सवितुः सवं प्रसवं अनुज्ञान प्रतिलभ्येत्यर्थः। स्वर्गान् जयत हे यजमानाः पुरुषाः। अर्वन्तः अर्वतः अश्वाश्च जयत॥ (९)

पवस्व सोम द्युम्नी सुधारो महाँ अवीनामनु पूर्व्य॰॥

पवस्व सोम द्युम्नी यशस्वी अन्नवान् वा। सुधारः शोभनधारः। महान् अवीना अवीन् अनु अविवालाननु। पूर्व्यः प्रथम॥

पवस्व हे सोम। द्युम्नी धनवान दीप्तिमान् वा। सुधारः शोभनधारायुक्तः। महान् अवीना इति पञ्चम्यर्थे षष्ठी। महद्भ्यः अविभ्यः। अविवालनिर्मिताद्दशापवित्रादित्यर्थः। अनु सन्तन पवस्वेति सबन्धः। पूर्व्यः पुरातनः त्वम्॥ (१०)

इति पञ्चमे पञ्चमी दशती

---

•

विश्वतो दावन् विश्वतो न आ भर यं त्वा शविष्ठमीमहे॥

विनियोगोऽस्य आथर्वणवस्तोभाभ्यां सद उपतिष्ठन्ति । विश्वतो दावन् सर्वतः दानवान् । विश्वतः सर्वतः । नः अस्मभ्यम् । आभर आहर । किमाभर । सामर्थ्याद्धनमानय । यं त्वां शविष्ठमतिशयेन वलवन्तम् । ईमहे प्रार्थयामः ॥

विश्वतो दावन् विश्वत आहृत्य दातः । विश्वतः यत्र धनं विद्यते तस्मात् । नः अस्मभ्यम् । आभर धनानि । य त्वा शविष्ठं शूरतमम् । वयमीमहे स्तुमः । याचामहे इति वा (१)

एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥

. . . . . . . . . . एतदुक्तं भवति । परियोगैरभीज्यते । यच्छब्दश्रवणात् तच्छब्दोऽध्याहर्तव्यः । यः परियोगैरभीज्यते तमिन्द्रं नाम देवताविशेषम् । श्रुतं विख्यातं स्तुमः । इन्द्रः श्रुत इति प्रथमैकवचने द्वितीयैकवचनस्य स्थाने द्रष्टव्ये । इन्द्रं श्रुतं गृणे । प्राजापत्या ऋक् ॥

एष इन्द्रो ब्रह्मा परिवृद्धो भवति । य ऋत्वियः ऋतुषु काले काले प्रादुर्भवन् । श्रुतः विश्रुतः सर्वत्र । इन्द्रो नाम इन्द्र इति प्रसिद्धः । गृणे स्तूयते सर्वैः । स ब्रह्मा भवति ॥ (२)

ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥

ब्रह्माणः मदीया ऋत्विजः । इन्द्रं महयन्तः पूजयन्तः । अर्कैः ऋग्यजुःसामाख्यैः । अवर्धयन् आभिमुख्येन वर्धयन्ति । किमर्थं वर्धयन्ति ?

अहये हन्तवै । उकार पदपूरण । दानवाय हननार्थम् । अहये दानवाय वर्धितवन्तः ॥

ब्रह्माणः शुनर्शालादिभिः परिवृता स्तोतारः । इन्द्रं महयन्तः पूजयन्तः । अर्कैः स्तोत्रैः । अवर्धयन् वर्धयन्ति । अहये अहिं वृत्रम् । हन्तवै हन्तुम् । तुमर्थाच्च भाववचनात् (पा २. ३. १५) इति कर्मणि चतुर्थी । उ इति पादपूरणः ॥　　　　(३)

अनवस्ते रथमश्वाय तक्षुस्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥

अनवः मनुष्याः । ते साङ्ग्रामिकं रथम् । अश्वाय अश्वार्थम् । तक्षुः कृतवन्तः । त्वष्टा देवतक्षा । हे पुरुहूत वज्रम् । किंविशिष्टम् । द्युमन्तं द्युतिमन्तं कृतवान् दधीचास्थिभि ॥

अनव इति मनुष्यनाम । अनवो मनुष्याः स्तोतारः । ते त्वदर्थम् । अश्वाय अश्ववाहनाय विघ्नन् । तक्षुः अतक्षन् समकुर्वन् रथम् । त्वष्टा देवशिल्पी । ते वज्रं अतक्षत । द्युमन्त दीप्तिमन्तम् । हे पुरुहूत इन्द्र ॥　　　　(४)

शं पदं मघं रयीषिणे न काममव्रतो हिनोति न स्पृशद्रयिम् ॥

शं सुखम् । तस्य पदम् । मघं धनम् । रयीषिणे धनैषिणे यजमानाय । न कामं अव्रतः व्रतरहित । अकस्मात् हिनोति न प्राप्नोति । कामं न स्पृशति रयिं धनम् ॥

रयीषिणे रयिं धनं हविर्लक्षणं प्रेषयन्तः तदर्थम् । शं सुखं पदं स्थानम् । मघं धनं च । लभन्ते इति शेषः । अव्रतः अकर्मा अननुष्ठितयज्ञादिकः पुरुषः । कामं काम्यं स्वर्गपुत्रपश्वादिकम् । न हिनोति । हि गतौ । न गच्छति । न प्राप्नोति । न स्पृशत् न स्पृशति । न लभते । रयिं च ॥　　　　(५)

सदा गावः शुचयो विश्वधायसः सदा देवा अरेपसः ॥

सदा सर्वदा । गाव शुचय शुद्धा पवित्रा । विश्वधायस । विश्वं सर्वं धारयन्ति । सर्वस्य धारयित्र्य क्षीरादिभिर्हविर्भि । अथवा गाव आदित्यरश्मय । अमेध्येऽपि पतमाना शुद्धा । अथवा गाव· आप भूमिगताः । अथवा गाव वाच ऋग्यजु सामलक्षणा शुचय· । विश्वधायस विश्वस्य धारयित्र्य । सदा देवा अरेपस अलेपका अपापा । रेप इति पापनाम । गोदेवता अस्य ॥

गाव गन्तार उपगन्तार । ये इन्द्र उपगच्छन्ति परिचरणादिभिः ते । शुचयः सदा विश्वधायसः बहूला भवन्ति । देवाः स्तोतार । सदा अरेपसः अपापा भवन्ति ॥ (६)

आ याहि वनसा सह गावः सचन्त वर्तनिं यदूधभि ॥

हे इन्द्र आयाहि आगच्छ । वनसा सह सङ्घेन सहेत्यर्थ । किंविशिष्टेन वनसा । गाव सचन्ते सेवन्ते । वर्तनिं गोव्रजम् । यत् ऊधभि सहोधभि ॥

आयाहि आगच्छ । वनसा वननीयेन धनेन सह हे उषः । गाव सचन्त सेवन्ते । वर्तनिं स्थान गोष्टम् । यत् यदा । ऊधभिः पूर्णैः उपलक्षिता इति प्रात काले लक्ष्यते ॥ (७)

उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे त इन्द्र ॥

विनियोगोऽस्य षष्ठेऽहनि त्रयाणामपि । प्रक्षे निवासे । किंविशिष्टे । मधुमति रसवति । क्षियन्त निवसन्त । पुष्येम रयिं धनम् । धीमहे चिन्तयाम ते इन्द्र ॥

उप उपगच्छ। प्रशे मदीये गृहे। मधुमति भोग्ययुक्ते। क्षियन्तः निवसन्तः। पुष्येन समृद्धेन पुत्रपौत्रैः। रयिं धनं च। धीमहि धारयामः। ते त्वत्त इत्यर्थः। हे इन्द्र ॥　　(८)

अर्चन्त्यर्कं मरुत स्वर्का आ स्तोभति श्रुतो युवा स इन्द्रः ॥

अर्चन्ति पूजयन्ति। अर्कं देवम्। मरुतः ऋत्विजः स्वर्काः शोभनमन्त्राः। आस्तोभति स्तूयते स्तोमैः। श्रुतः विख्यातः। युवा तरुणः। कोऽसौ। इन्द्रः ॥

अर्चन्ति स्तुवन्ति। अर्कं अर्चनीयं इन्द्रम्। मरुतः देवाः। स्वर्काः सुष्ठुतरः। आस्तोभति अभिष्टूयते सर्वैः। व्यत्ययेन परस्मैपदं शप् च। श्रुतः विश्रुतः युवा नित्यमेव स इन्द्रः ॥　　(९)

प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायता यं जुजोषते ॥

प्र व इन्द्राय। किंविशिष्टाय। वृत्रहन्तमाय विप्राय मेधाविने। हे स्तोतारः गाथं गायत। यं जुजोषते ॥

प्रगायत वः यूयम्। इन्द्राय वृत्रहन्तमाय अतिशयेन पापानां हन्त्रे। हे विप्राः प्राज्ञाः। गाथं स्तोत्रम्। यं गाथं इन्द्रः जुजोषते भृशं सेवते प्रीयते वा तं गाथं प्रगायत ॥　　(१०)

इति पञ्चमे षष्ठी दशती

अचेत्यग्निश्चिकितिर्हव्यवाण्ण सुमद्रथः ॥

अग्निः अचेति चेतति जानाति । हव्यवाट् हव्य वहति । इवार्थे न इति । सुमद्रथ सुगमनरथ सुज्ञानरथो वा ॥

अचेति चेत्यते ज्ञायते सर्वैः । अग्निः चिकितिः ज्ञाता विश्वस्य । हव्यवाट् हव्यानां वोढा । सुमद्रथः प्रशस्तरथः । नेति चार्थः ॥ (१)

अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः ॥

गौपायनस्यार्षम् । विनियोगोऽस्य षष्ठेऽहनि । अग्ने त्वं न अस्माकम् । अन्तम विप्रकृष्टा देवता । उत अपिच । त्राता परित्राता । शिव शंतम । भुव भवसि । वरूथ्य वरणीय अग्रभूतो वा ॥

हे अग्ने त्व नः अस्माकम् । अन्तमः अन्तिकतमः । भुव. अभवः । उत अपिच । त्राता रक्षिता भुव । शिवः सुखकरश्च । वरूथ्यः वरणीयः संभजनीयः । अथवा वरूथ गृहम् । गृहे भवः नित्यसन्निहित. । वरूथैः परिधिभिर्वृतेति शाट्यायनकम् ॥ (२)

भगो न चित्रो अग्निर्महोनां दधाति रत्नम् ॥

भगदेवत्या एषा ऋक् । अग्निर्मघोना मघवतां धनवताम् । दधाति रत्नं रमणीयम् । ददाति वा । पञ्चदशाक्षरा गायत्री आग्नेयी ॥

भगो न भग इव देवः । चित्रः चायनीयः पूजनीयः । अग्निः मघोना मघवता हविर्लक्षणधनवताम् । चतुर्थ्यर्थे षष्ठी । दधाति ददाति । रत्नं रमणीयं धनम् ॥ (३)

विश्वस्य प्र स्तोभ पुरो वा सन् यदि वेह नूनम् ॥

विश्वस्य प्रस्तोभ सर्वस्य प्रशस्तो भवति । पुर. अग्रत वा सन् । यदि वा इह । नूनमिति वितर्के । इह वा निवास· त्वद्भक्ताना सुखाय भवति ॥

विश्वस्य जनस्य प्रस्तोभ प्रशस्य । इन्द्रः । पुरोभागे वा दूरे वा सन् । यदि वा इह अन्तिके सन् । नूनमिति पूरण. सत्यमिति वा ॥ (४)

उषा अप स्वसुष्टमः सं वर्तयति वर्तनिं सुजातता ॥

उषस्यो मन्त्रः । उषा अप स्वसुष्टम· स्वसुः स्वस्रा भगिन्या इव । अपसंवर्तयति । वर्तनिं रात्रिं वारणीया जनस्य । सुजातता ॥

उषाः देवी । अप नीचैः । संवर्तयति नाशयति । तमः शार्वरम् । स्वसुः रात्रिमुषसः स्वसारं आह । तस्याः संबन्धि तमः । वर्तनिं गृहं यज्ञगृहं प्रति । सुजातता सुजाततया युक्ता ॥ (५)

इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥

विनियोगोऽस्य षष्ठेऽहनि । इमानि भुवनानि । सीषधेम । साध संसिद्धौ । साधयामः । इन्द्रः । इन्द्रश्च विश्वे च देवा· भवन्तः ॥

इमा भुवना इमानि भुवनानि । सीषधेम साधयेम समर्थयेम वयं यज्ञैः स्तोत्रैः वा । नु कमिति इमौ पूरणौ । इन्द्रश्च विश्वे देवाश्च साधयन्तु भुवनानि अस्माभिरिष्टाः स्तुताश्च ॥ (६)

वि स्रुतयो यथा पथ इन्द्र त्वद्यन्तु रातयः ॥

विविधा सुतय सरणमार्गा । इन्द्र त्वत् त्वत्समीपं यन्तु । रातयः दानानि हविर्लक्षणानि । अथवा विस्रुतय. पन्थान । यथा पथ मार्गं यथा निर्गच्छन्त । तथा हे इन्द्र त्वत् यन्तु निर्गच्छन्तु रातयः दानानि ॥

वियन्तु विविधं गच्छन्तु निर्गच्छन्तु हे इन्द्र । त्वत् त्वत्तः । रातयः धनानि दानानि वा । श्रुतय. क्षुद्रपथाः यथा पथो महापथाद्वियन्ति तथा ॥ (७)

अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥

अया अनया स्तुत्या वाजं अन्नम् । देवहितं देवै स्थापितम् । सनेम लभेम । मदेम मोदाम । शतहिमा शतं हेमन्तानाम् । सुवीरा कल्याणपुत्राः ॥

अया अनया स्तुत्या । वाज अन्नम् । देवहित देवेन इन्द्रेण हितं दत्तम् । सनेम लभेम । मदेम हृष्येम । शतहिमाः शत हिमाः हेमन्तान् । शत समा इत्यर्थः । सुवीराः शोभनपुत्रपौत्रा सन्त. ॥ (८)

ऊर्जा मित्रो वरुणः पिन्वतेडाः पीवरीमिषं कृणुही न इन्द्र ॥

मित्र वरुण । ऊर्जा अन्नं वृष्टिर्वा । एते देवताविशेषा । पिन्वतं ददत । इडा अन्नानि । पीवरीं स्थूलाम् । इषमन्नम् । कृणुहि कुरत । नः अस्मभ्यम् । हे इन्द्र ॥

ऊर्जा रसेन पिन्वत पिन्वन्तु आप्याययन्तु । इडा. अन्नानि । मित्रो वरुणश्च । एतदेव इन्द्रमपि याचते । इषं अन्नम् । पीवरीं रसेन पुष्टाम् । कृणुहि कुरु हे इन्द्र । नः अस्मभ्यम् ॥ (९)

इन्द्रो विश्वस्य राजति ॥

इन्द्र परमेश्वर । विश्वस्य सर्वस्य । राजति दीप्यते । एकपदा अष्टाक्षरा गायत्री ॥

इन्द्र देव विश्वस्य भुवनस्य राजति ईष्टे । राजतिरैश्वर्यकर्मा दृश्यते— राजन्तमध्वराणाम् (ऋ. वे. १. १. ८) इति ॥ (१०)

इति पञ्चमे सप्तमी दशती

---

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म-
स्तृम्पत्सोममपिबद्विष्णुना सुतं यथावशम् ।
स ईं ममाद महि कर्म कर्तवे महामुरुं
सैनं सश्चद्देवो देवं सत्य इन्दु सत्यमिन्द्रम् ॥

उत्तर अतिछन्दा महानन्ते । त्रिकद्रुकेषु । त्रिकद्रुकास्त्रोमा ज्योति गौरायव । तेषु । महिष महान् । यवाशिरं यवमिश्रम् । मन्थी नाम ग्रह । स एवाशिरो भवति । तुविशुष्म महाबल । तृम्पत् तृप्तवान् । सोममपिबत् पीतवान् । विष्णुना अध्वर्युणा । सुत अभिषुतम् । यथा वश यथेत्याहम् । यथा ऋत्विज इदमत्यवन्त. । स ईं ममाद इमं सोम-मपिबत् । महि कर्म कर्तवे महत कर्मण करणार्थम् । महा महान्तम् । उरु विस्तीर्णम् । अथवा उरुर्नाम दानव । स इन्द्रः । एन दानवम् ।

सश्चत्। सश्चतिर्हिंसार्थः। दानवं हिंसितवान्। अथवा सश्चतिः सेवार्थः। सेवने। देवः इन्द्रः देवं सोमं सः सत्यः इन्दुः सेवने सत्यमिन्द्रम्॥

त्रिकद्रुकेषु महिषो दशाहामष्टिरादिमा।
जगत्ययेन्द्र याह्यस्तु श्रौषट्श्रियया रुचा॥
चतस्रोऽयष्टयोऽभि त्वं तव त्यं नर्यमित्यृचौ।
इमे द्वे अतिशक्वर्यावष्टी इत्येके ऊचिरे॥
प्र वो महेति जगती तमिन्द्रमिति तादृशी।
अयं सौरी प्र वो मात्यग्निमाग्नेयमित्यसौ॥
अभि त्यमिति सावित्री पावमानीत्यया ऋचा।
अस्तु श्रौषड्वैश्वदेवी शिष्टा ऐन्द्र्य इतीरिताः॥

अभिप्लवत्र्यहं पूर्वं त्रिकद्रुका इत्याचक्षते। तेषु सोममपिबत् महिषः महानिन्द्रः। यवाशिरम्। यवाः सक्तवः आशीर्मिश्रणं यस्य तं सोमम्। तुविशुष्मो महाबलः। तृम्पत् तृप्यन्निति वा तृप्यतु इति वा। विष्णुना सहापिबत् सुतं अभिषुतम्। यथावश यथाकामम्। स पीतः सोमः। ईं एनम्। ममाद अमादयत्। महि महत्। कर्म कर्तवे कर्तुम्। महा महान्तम्। उरुं विस्तीर्णम्। स इन्दुः। एनं इन्द्रम्। सश्चत् व्याप्नोत्। देवः देवं सत्यं सत्य इन्दुः॥ (१)

अयं सहस्रमानवो दृशः कवीनां
मतिर्ज्योतिर्विधर्म।
ब्रध्नः समीचीरुषसः समैरयदरेपसः
सचेतसः स्वसरे मन्युमन्तश्चिता गोः॥

*विनियोगोऽस्य दशमेऽह्नि। छन्दसा आहवनीयमुपतिष्ठते। सहस्रं* आनवः मनुष्याः। दृशः द्रष्टा। कवीनां मेधाविनाम्। मतिः प्रज्ञा। ज्योतिः प्रकाशः। विधर्म विविधधर्म। ब्रध्नः महान् सविता। समीचीः

सम्यग्ज्ञाना । उषसः सन्ध्यायाः । समैरयत् प्रेरितवान् । अरेपसः अपापाः । किंविशिष्टाः । सचेतसः चेतनवन्तः । क । स्वसरे अहनि । मन्युमन्तः दीप्तिमन्तः । अथवा क्रोधो मन्यु । तद्वन्तः । चिताः सञ्चिताः । गोः पृथिव्याः दीप्तिभिर्वा उदकैर्वा ॥

अयं सदा सन्निहितः । सहस्रं मानवः अन्तस्तोत्रमनुष्याः । दशः चक्षुषः । ज्योतिः । आदित्येन देवतया अधिष्ठितं चक्षुः । अतश्चक्षुषो ज्योतिरिति प्रकाशनहेतुत्वादुच्यते । विधर्म विधारकं विवेक्तृ ज्योतिः । आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत् (ऐ. उ. २. ४) इति हि ऐतरेयोपनिषदि श्रुतम् । कवीना स्तोतृणाम् । मतिः मननीयः सन्यः । कायतेः शब्दकर्मणः कविः । ब्रध्नः आदित्य. । बृहतेः ब्रध्नः । समीचीः समञ्चन्तीः उषसः समैरयत । आदित्येन हि सह चरत्युषाः ।

सूर्यो देवीमुषसं रोचमाना मर्यो न योषामभ्येति पश्चात् ॥
(ऋ. वे. १. ११५. २)

इति हि निगमः । अरेपसः अपापाः । पापाना तमःप्रभृतीनामपहन्त्रीरुषसः । स्वसरे दिवसे । मन्युमन्तः । मन्युः प्रकाशः । मनेरवबोधकर्मणो रूपम । सचेतसः तेजस्विनः चन्द्रमाःप्रभृतयः । गोः आदित्यात् । चिताः उपचिताः भवन्ति तेजसा । आदित्योऽपि गौरुच्यते (नि. २. ६) इति निरुक्तम् । सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वः (तै. सं. ३. ४. ७. १) इति च निगमः । चन्द्रमसमादित्यस्यैव रश्मिविशेषं दर्शयति ॥　　　　(२)

एन्द्र याह्युप नः परावतो नायमच्छा
विदथानिव सत्पतिरस्ता राजेव सत्पतिः ।
हवामहे त्वा प्रयस्वन्तः सुतेष्वा पुत्रासो
न पितरं वाजसातये मंहिष्ठं वाजसातये ॥

इन्द्र आयाहि । उप समीपम् । नः अस्माकम् । परावतः दूरात् । न अद्य । अच्छ आप्तुम् । विदथानिव व्याप्नोति यज्ञकर्माणि । सत्पतिः सतां पति. । अस्ता अस्तानि गृहाणि । राजा इव सत्पति· । हवामहे त्वा आह्वयामः त्वाम् । प्रयस्वन्त. सुतेषु सोमेषु । पुत्रासः न पुत्राः पितरमिव । किमर्थम् । वाजसातये अन्नसम्भजनार्थम् । मंहिष्ठं पूज्यतमम् । वाजसातये अन्नदानार्थम् ॥

आ इन्द्र उपयाहि उपागच्छ । नः अस्मान् । परावतः दूरात् । नेति संप्रत्यर्थे । संप्रति । अद्य सत्पतिः सता ब्राह्मणाना पतिः । राजा सोमः । अच्छ अभि उद्दिश्य त्वाम् । यातीति शेषः । आहवनीयं प्रति । यद्वा त्वामच्छ अभिमुखम्स्मिन्नीति । विदथानिव गृहानिव गृही । सत्पतिरिति पुनरुक्तिरादरार्था । परुच्छेपस्य च शैल्य पुनरुक्तिः । अस्ता अस्तं गृहमित्येतदर्थः । हवामहे ह्वयामः । त्वा त्वा वयम् । प्रयस्वन्तः अन्नवन्तः हविष्मन्तः । सुतेषु अभिषुतेषु सोमेषु । आकार· पूरणः । पुत्रासो न पुत्रा इव पितरम् । वाजसातये अन्नलाभाय । मंहिष्ठं दातृतमम् । वाजसातये इति पुनरुक्तिरादरार्था ॥ (३)

तमिन्द्रं जोहवीमि मघवानमुग्रं सत्रा दधानमप्रतिष्कुतं श्रवांसि भूरि । मंहिष्ठो गीर्भिरा च यज्ञियो ववर्त राये नो विश्वा सुपथा कृणोतु वज्री ॥

तमिन्द्रं जोहवीमि अत्यर्थं आह्वयामि । मघवानं धनवन्तम् । उग्रं उद्गूर्णवज्रम् । सत्रा दधानं सदा दधानम् । अप्रतिष्कुतं अस्खलितम् । श्रवांसि यशांसि अन्नानि । भूरि बहूनि । मंहिष्ठ. पूज्यतमः । गीर्भि. स्तुतिभिः । आ च यज्ञियो ववर्त वन्दनैः आवर्तय । राये धनाय । विश्वा विश्वानि । सुपथा सुपथानि । कृणोतु करोतु । वज्री वज्रवान् ॥

त इन्द्र जोहवीमि भृशमाह्वयामि। मघवान धनवन्त दानवन्तं वा। उग्र उद्गूर्ण ओजस्विन वा। सत्रा सर्वदा। दधान धारयन्त ददत वा। श्रवासि अन्नानि यशासि वा। भूरि भूरीणि। अप्रतिष्कुत अप्रत्याकृतम्। महिष्ठः दातृतमः। गीर्भि आववते आवर्तता अस्मान्। राये धनार्थम्। न अस्मभ्यम्। विश्वा विश्वानि। सुपथा शोभनमार्गान्। कृणोतु करोतु। वज्री इन्द्रः॥　(४)

अस्तु श्रौषट् पुरो अग्निं धिया दध
　अनु त्यच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे।
यद्ध क्राणा विवस्वते नाभा संदाय नव्यसे।
अध प्र नूनमुपयन्ति धीतयो देवाँ अच्छ न धीतय॥

अस्तु श्रौषट् शृणोतु श्रवणीयम्। पुर अग्निं धिया बुध्या। पुरतो निदधे आहवनीयात्मानम्। अनु त्यत् शर्ध बलम्। दिव्यं दिवि भवम्। आवृणीमहे। इन्द्रवायू आवृणीमहे। यत् ह क्राणा चक्राणौ। विवस्वते विवासयित्रे। नाभा नाभौ। सन्दाय सन्दनार्थम्। नव्यसे नवतराय। अध प्र नूनं निश्चितम्। उपयन्ति धीतय बुद्धय कर्माणि वा। देवान् अच्छ आप्तुं न धीतय मरती॥

अस्तु भवतु। श्रौषट् श्रवण स्तोत्रस्य। शृण्वन्तु देवाः स्तोत्रमित्यर्थः। अतः परं स्तौति। पुरो दधे पुरस्करोति अग्निम्। धिया स्तुत्या। आवृणीमहे सम्भजामहे। नु क्षिप्रम्। त्यत् तत प्रसिद्धम्। शर्धो मारुतं गणम्। दिव्यमन्तरिक्षे भवम्। इन्द्रवायू इन्द्रश्च वायुश्च। यत् यौ। हेति पूरणः विनिग्रहार्थो वा। यावेव इति। क्राणा कुर्वाणौ धनादिकम्। विवस्वते। विवो धनम्। तद्वते हविष्मते। नव्यसे नवतराय। नाभा नाभौ। नयतेर्नाभिः। निहन्वने विघ्नस्य। यज्ञे। सन्दाय सम्यक् बध्वा। स्वीकृत्य इत्यर्थः। यौ सन्दाय विवस्वते कुर्वाणौ भवतः ताविन्द्रवायू आवृणीमहे। अध अपिच। प्र प्रकर्षेण।

नूनं संप्रति। उपयन्ति उपयन्तु उपगच्छतु। धीतयः स्तुतयः। नः अस्मदीयाः। देवान् विश्वान्। अच्छ अभिमुखा उपयन्तु ॥ (९)

प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरुत्।
प्र शर्द्धाय प्र यज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥

वो महे महत । मतय प्रज्ञा । प्रयन्तु विष्णवे माध्यमिकाय । मरुत्वते गिरिजा हृदयात् जाता यज्ञात् जाता वा। एवयामरुत् ऋषिराह। प्र शर्धाय बलाय। प्र यज्यवे यागशीलाय। सुखदाय सुखप्रदाय। तवसे महते। भन्ददिष्टये भन्दनीयाय। धुनिव्रताय कल्पितकर्माय। शवसे बलवते। प्रयन्तु मरुत ॥

प्रयन्तु प्रगच्छन्तु। वः युष्मदर्थे इति वचनव्यत्ययः। तुभ्यम्। महे महते। विष्णवे मरुत्वते मरुद्भिः सहिताय। मतयः स्तुतयः। गिरिजाः गिरि वाचि ऋचि जाताः। एवयामरुत् इति षष्ठ्या लुक्। एवयामरुतो मम स्तुतयः इत्यर्थः। पूर्वोऽर्धर्चो विष्णुप्रधान.। उत्तरस्तु मारुतः। प्रयन्तु मतयः शर्धाय गणाय मारुताय प्रयज्यवे प्रयजनीयाय। सुखादये। खादिराभरणविशेषः।

अंसेषु व ऋष्टय. पत्सु खादयः (ऋ. वे. ५. ५४. ११)

हस्तेषु खादिश्च कृतिश्च सदधे (ऋ. वे. १. १६८. ३)

इति। तवसे वृद्धाय बलवते वा। भन्ददिष्टये। मन्दन्ति स्तुवन्ति इष्टयः यजमानाः य तस्मै। धुनिव्रताय धुनिः कम्पनं मेघाना व्रत कर्म यस्य तस्मै। शवसे। शवति. गतिकर्मा। गन्त्रे सर्वत्र इत्यर्थः ॥ (६)

अया रुचा हरिण्या पुनानो
विश्वा द्वेषांसि तरति सयुग्वभिः सूरो न सयुग्वभिः।
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः।
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥

पावमानी ऋक्। विनियोग एकक्तृके। अया अनया। रुचा दीप्त्या। किंविशिष्टया। हरिण्या हरित्वर्णया। पुनान पवमानः। विश्वा सर्वाणि। द्वेषांसि तरति सयुग्वभि। स्वयुग्वान अश्वा। तै। सूरो न सूर इव। सयुग्वभि रश्मिभि। धारा पृष्ठस्य रोचते दीप्यते पुनान। अरुष अरुषवर्ण। हरि हरणशील हरितवर्णो वा। विश्वा विश्वानि रूपाणि। परियासि। ऋक्वभि स्तोतृभिः। सप्तास्येभि। सप्त छन्दांसि आस्यभूतानि येषां ऋत्विजा ते सप्तास्या। तै सप्तास्येभि। अथवा सप्त वषट्कारिणो होत्रा सप्तास्यानि। अथवा सप्त सोमसंस्था सप्तास्यानि। तामि। ऋक्वभि· ऋत्विग्भि·॥

अया अनया। रुचा। रोचते दीप्यते इति रुक्। दीप्यमानया। हरिण्या धारया। पुनानः पूयमानः सोमः। विश्वा विश्वानि। द्वेषांसि द्वेष्टॄन्। तरति हिनस्ति। सयुग्वभिः सह युक्तैरश्विभिः। सूरो न सूर्य इव तमांसि। सयुग्वभिः इति पुनरुक्तिः परुच्छेपस्य पितुः शैलीत्य। पारुच्छेपिः ह्यनानत.। धारा पतन्ती पृष्ठस्य। पृष्ठ इति धारक उच्यते। धारकस्य जगतः सोमस्य। रोचते दीप्यते। पुनानः पूयमानः आरोचमान इति वा गन्तेति वा। अरुषः अहिंसक·। हरिः हरितवर्णः। यत् यः सोमः। विश्वा विश्वानि रूपाणि। परियासि परिगच्छसि। ऋक्वभिः स्तुत्यैः तेजोभि.। सप्तास्येभिः सर्पणशीलमुखैः॥ (७)

अभि त्यं देवं सवितारमोण्योः कविक्रतु-
मर्चामि सत्यसवं रत्नधामभि प्रियं मतिम्।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि
हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः॥

त्यं देवं दानादिगुणयुक्तम्। सवितारं सर्वस्य प्रसवितारम्। ओण्योः द्यावापृथिव्योः। कविक्रतुं मेधाविकर्माणं अभ्यर्चामि। सत्यसवं

अवितथसवम् । वरणीयाना रत्नानां धातारम् । अभि प्रियं आभिमुख्येन सर्वभूताना प्रियम् । मतिम् । ऊर्ध्वा यस्य अमति· आत्ममयी मति· आत्मरूपं वा । भाः स्वर्गलोकम् । . . . . . . सावित्री ऋक् ॥

अभ्यर्चामि अभिष्टौमि । त्यं तम् । देवं सवितारम् । ओण्योः अवन्योः द्यावाभूम्योः । रत्नधामिति सम्बन्धः । रत्नाना धनाना दातारम् । कविक्रतुं क्रान्तप्रज्ञम् । सत्यसव सत्यप्रज्ञ सत्यानुज्ञानम् । अभ्यर्चामि प्रिय सर्वस्य । मतिं मननीयं स्तुत्यम । यस्य सवितुः अमतिः । ज्मेरभिमवार्थादमतिः । अभिभवित्री तेजसाम् । भाः दीप्तिः । ऊर्ध्वा अदिद्युतत् द्योतते । सवीमनि अनुज्ञाने सर्वप्रवृत्तीनाम् । हिरण्यपाणिः सविता । दानार्थं पाण्योः हिरण्यं यस्य सः सदा सन्निहितहिरण्यपाणि· । अमिमीत स्वः स्वर्गं सर्वं वा जगत् । सुक्रतुः शोभनकर्मा । कृपा कृपया स्वेन ॥ (८)

अग्निं होतारं मन्ये दास्वन्तं वसो
सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊ. र्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु शुक्र शोचिष आजुह्वानस्य सर्पिष· ॥

विनियोगोऽस्यावभृथे प्रवर्ग्ये च । अग्निं होतारं आह्वातारम् ।' मन्ये दास्वन्तं दानवन्तम् । वसो धनस्य । सूनुं सहस बलस्य पुत्रम् । जातवेदसं जातधनं जातप्रज्ञं वा । विप्रं न । नशब्द उपमार्थीय· । विप्रमिव जातवेदसम् । य ऊर्ध्वया ऊर्ध्वं प्रयाति । आहुतिभि क्षिप्राभि. । स्वध्वरः शोभनयज्ञ । देव· दानादिगुणयुक्त । देवाच्या देवानञ्चन्त्या । कृपा कल्पनया दीप्त्या वा । आजुह्वानस्य सर्पिष. घृतस्य हूयमानस्य । विभ्राष्टिं विभ्राजते महानसि । अनु शुक्रशोचिष· । शुक्लदीप्तेः । . . . . . विस्तरेणोक्तमधस्तादासीत् । इदानीं ग्रन्थगौरवभयात् विभक्तिपरिणामो

रूपसिद्धिश्च न क्रियते । कुतः । आरणिका उत्तराश्च व्याख्येया । यदि सर्वस्य ग्रन्थराशेर्विस्तरः क्रियते तदा निरासाय गौरवं प्रसज्यते । एतस्मात्कारणात् पदार्थमात्रमुच्यते । विनियोगश्च यावन्मात्रमभिधीयते । आर्षच्छन्दोदैवतब्राह्मणानि च गायत्रप्रभृतीना साम्ना सवनभागेन । गायत्रं प्रातस्सवनम् । तत्र गायत्राणि सामानि ब्राह्मणेनोक्तार्थानि । माध्यन्दिने सवने त्रीणि छन्दांसि भवन्ति । गायत्री बृहती अनुष्टुबिति । तत्रामहीयवप्रभृतीनि सामानि । तेषामपि च साम्नामार्षच्छन्दोदैवतब्राह्मणानि ब्राह्मणोक्तानि । तृतीयसवने गायत्रीककुबुष्णिहावनुष्टुप् जगतीति छन्दांसि । तत्राप्यार्षादीनि ब्राह्मणोक्तानि । एवमेकाहाहीनसत्रप्रायश्चित्तक्षुद्रपर्यन्तेषु क्रतुषु सामान्येन मन्त्राः । तेषामार्षादीनि गृह्यन्ते । सर्वमुक्तम् । इदानीं पदार्थमात्रमेवोच्यते ॥

अग्निं होतारं ह्वातारं देवानाम् । मन्ये स्तौमि । दास्वन्तं दानवन्तम् । सर्वधातुभ्योऽसुन्प्रत्ययो भावे । वसोः प्रशस्तस्य । सहसो बलस्य । सूनुं पुत्रम् । प्राणाद्धि बलान्मथ्यमानोऽभिजायते इति । जातवेदसं प्रभूतधनम् । विप्रं मेधाविनम् । नेति सम्प्रत्यर्थे । पुनरुक्तयः व्याख्याता । यः देवः । ऊर्ध्वया उत्कृष्टया । देवाच्या देवान् अञ्चन्त्या । कृपा कृपया कल्पनया । कृपि कल्पनार्थः । स्वरः सुयज्ञः भवति । सोऽग्निः घृतस्य आज्यस्य सम्बन्धिनीम् । विभ्राष्टिं विशिष्टां दीप्तिम् । अन्विति उपसर्गदर्शनादाख्याताध्याहारः । अनुवष्टि इति बह्वृचाः । अनुकामयते । शुक्रशोचिषः शुक्रं दीप्तं शोचिरर्चिः भवति येन तस्य घृतस्य । आजुह्वानस्य आहूतस्य । लिटः कानच् । सर्पिषः । विविधं सर्पतीति सर्पिः । ईदृशेन घृतेन या विभ्राष्टिः तामनुवष्टि ॥ (९)

तव त्यं नर्यं नृतोप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
यो देवस्य शवसा प्रारिणा असु रिणन्नपः ।
भुवो विश्वमभ्यदेवमोजसा विदेदूर्जं शतक्रतुर्विदेदिषम् ॥

अन्धस· अन्नं सोमलक्षणम्। दिवि सत् भूमि आददे आदत्ते। उग्रं बलवत्। शर्म शरणम्। महि महत्। श्रव महत् अन्नं सोमलक्षणं यशो वा। एतदुक्तं भवति। आहुतिरसविपरिणामद्वारेण इमं लोकमागच्छति वृष्ट्यात्मना ॥

पवमानस्य सोमस्य तृतीय पर्वसंस्तव.।
उच्चा त इति गायत्र्यः चत्वारिंशच्चतुर्युताः ॥

अमहीयुः। उच्चा उपरिस्थितस्य। ते तव। अन्धसः अन्नभूतस्य देवानाम्। जातं प्रादुर्भूतं प्रभूतम्। दिवि स्वर्गे। सत् विद्यमानम्। भूम्याददे इत्यत्र भूमिः आ ददे इति पदत्रय आमनन्ति। विसर्जनीयलोपः साहितिकः। भूमिः भौमाः जनाः। अस्मादृशा इत्यर्थः। आददे आददीमहि। उग्र उद्गूर्णम्। शर्म सुखम्। महि महत्। श्रवः अन्न च आददे। त्वया देयं अन्नं सुखं च आददीमहि वयम् ॥ (१)

**स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पातवे सुतः ॥**

विनियोगोऽस्य ज्योतिष्टोमे। स्वादिष्ठया स्वादुमत्तमया। मदिष्ठया मादनीयतमया। हे सोम पवस्व धारया। किमर्थम्। इन्द्राय पातवे पानार्थम्। सुतः अभिषुत ॥

मधुच्छन्दाः। स्वादिष्ठया स्वादुतमया। मदिष्ठया अतिशयेन मादयित्र्या। धारया पवस्व क्षर दशापवित्रात् द्रोणकलशमभि हे सोम। इन्द्राय इन्द्रार्थम्। पातवे पातुम्। असमानकर्तृकेष्वपि छन्दसि तुमर्थीया दृश्यन्ते। सुतः अभिषुतः त्वम् ॥ (२)

**वृषा पवस्व धारया मरुत्वते च मत्सरः। विश्वा दधान ओजसा ॥**

विनियोगोऽस्य द्वितीयेऽहनि । वृषा सेक्ता । पवस्व धारया । मरुत्वते मरुद्भि तद्वते । मत्सर सोम । विश्वा विश्वानि भूतानि । दधान धारयन् । ओजसा बलेन ॥

भृगु वारुणि जमदग्निर्वा भार्गव । वृषा वर्षक त्वम् । पवस्व धारया मरुत्वते मरुद्भि सहिताय इन्द्राय । च इति पूरण । अन्येभ्यश्च देवेभ्य· सवनभागिभ्य इति वा । मत्सर मदकर. त्वम् । विश्वा विश्वानि भुवनानि । दधान धारयन् । आजसा बलेन ॥ (३)

## यस्ते मदो वरेण्यस्तेना पवस्वान्धसा । देवावीरघशंसहा ॥

विनियोगोऽस्य द्वितीयऽहनि । य मद ते तव । वरेण्य प्रार्थनीय । तेन पवस्व अन्धसा अन्नेन । देवावी । देवानवति तर्पयति इति देवावी । अघशसहा । अघ पाप य शसति तस्य हन्ता ॥

अहमीयु । य ते त्वदीय । मद रस । वरेण्य वरणीय । तेन अन्धसा अन्नभूतेन देवाना पवस्व । देवावी. देवकाम देवान् गच्छन् वा त्वम् । अघशसहा पापशसकाना शत्रूणा हन्ता ॥ (४)

## तिस्रो वाच उदीरते गावो मिमन्ति धेनवः । हरिरेति कनिक्रदत् ॥

नियोगोऽस्य तृतीयेऽहनि । ऋग्यजु सामाख्या वाच तिस्र उदीरते प्रेरयति । गाव मिमन्ति धेनव गाव यथा दुह्यमाना शब्द कुर्वन्ति एवम् । हरि हरितवर्ण । एति आगच्छति । कनिक्रदत् शब्द कुर्वन् ॥

त्रित । तिस्र· त्रिविधा । वाच ऋग्यजु सामलक्षणा । उदीरते उदीरयन्ति ऋत्विज । पवमानमभीति शेष । गाव आशीर्दुह । मिमन्ति शब्दा-

यन्ते। येनैव प्रीणयित्र्य । हरिः हरितवर्णः सोमश्च । एति पवते । कनिक्रदत् शब्दं कुर्वन् ॥ (५)

**इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । अर्कस्य योनिमासदम् ॥**

विनियोगोऽस्य षष्ठेऽहनि । इन्द्राय । किंविशिष्टाय । मरुत्वते मरुत्सहिताय । हे इन्दो मधुमत्तम रसवत्तम । अर्कस्य प्रदीप्तस्य । अर्को देव । देवस्य । योनिं स्थानम् । आसदं आसीदम् ॥

काश्यपः । इन्द्राय मरुत्वते पवस्व हे इन्दो मधुमत्तमः रसवत्तमः त्वम् । अर्कस्य अर्चनीयस्य स्तुत्यस्य इन्द्रस्य स्वभूतम् । योनिस्थानं द्रोण-कलशम् । आसदं आसत्तम् ॥ (६)

**असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः । श्येनो न योनिमासदत् ॥**

विनियोगोऽस्य पञ्चमेऽहनि । असावि अभिषुत अंशु । मदाय मदार्थम् । अप्सु वसतीवरीषु । दक्ष शीघ्र । गिरिष्ठा गिरौ पर्वते तिष्ठति इति गिरिष्ठा । श्येन न पक्षी इव । योनिं स्थानम् । आसदत् आसीदति ॥

जमदग्निः । असावि अभिषुतोऽभवत् । अंशुः सोमः । मदाय देवानाम् । अप्सु वसतीवरीषु । दक्षः समृद्धः । गिरिष्ठाः गिरौ स्थितः पूर्वम् । श्येनो न श्येन इव । योनिं स्थानम् । आसदत् आसीदत् ॥ (७)

**पवस्व दक्षसाधनो देवेभ्यः पीतये हरे । मरुद्भ्यो वायवे मदः ॥**

विनियोगोऽस्य चतुर्थेऽहनि । पवस्व दक्षसाधन शीघ्रसाधन । देवेभ्यः पीतये पानाय हरे । मरुद्भ्यः वायवे मदः मदनीय. ॥

इदच्युत आगम्य । पवस्व दक्षसाधन' बलसाधक: । देवेभ्यः देवाना अर्थाय । पीतये पानाय तेषाम् । हृ हरे हरितवर्ण । मरुद्भ्यः वायवे पवस्व । मद मदकर त्वम् ॥ (८)

परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् । मदेषु सर्वधा असि ॥

विनियोगोऽस्य षष्ठेऽहनि । परि स्वान सुत अभिषुत सोम. । गिरिष्ठा पवित्रे उर्णमये । सोम अक्षरत् क्षरितवान् । मदेषु सर्वधा सर्वम् । असि धापयति धारयति वा ॥

अन्या. परस्याश्च काश्यपोऽसितः । परि परित' । अक्षरत् क्षरति । स्वान. सुतः सोम. । सुनोतेः लिटः कानच् । अभ्यासाभावः छान्दसः । गिरिष्ठाः व्याख्यातः । पवित्रे दशापवित्रे । अथ प्रत्यक्षस्तुतिः । मदेषु स्तोत्रेषु सर्वधा सर्वकामप्रद असि त्वम् ॥ (९)

परि प्रिया दिव कविर्वयांसि नप्त्योर्हितः । स्वानैर्याति कविक्रतुः ॥

विनियोगोऽस्य चतुर्थेऽहनि । परि प्रिया दिवः कवि मेधावी । वयासि अन्नानि पक्षिणो वा । नप्त्यो द्यावापृथिव्यो अहोरात्रयोर्वा हित । स्वानै सुतै. । याति कविक्रतुर्मेधाविकर्मा ॥

परि याति प्रिया प्रियाणि । वयासि स्थानानि इति बहुवचनं स्वावयवापेक्षया । द्रोणकलशम् । दिवो लोकात् । दशापवित्रं द्यौः । मध्यमोऽवकाशः अन्तरिक्षम् । द्रोणकलशः पृथिवी इत्येवं त्रिलोकव्याप्तिः पवमानस्य द्रष्टव्या । कविः स्तुत्यः । कवतेः शब्दकर्मणः कवि' । नप्त्योः अधिषवणफलकयोः ।

हित: निहित: पूर्वम् । स्वानै सुन्वानै. अध्वर्युभि' । न पातयन: सोम धारयन्त्यौ इति नस्यौ । कविक्रतु. कान्तप्रज्ञ ॥ (१०)

इति पञ्चमे नवमी दशती

---

प्र सोमासो मदच्युतः श्रवसे नो मघोनाम् । सुता विदथे अक्रमुः ॥

विनियोगोऽस्य प्रथमेऽहनि । सोम मदच्युत । श्रवसे यशसे अन्नाय वा । न मघोना धनवता यजमानानाम् । विदथे यज्ञगृहे । सुता· अभिषुता । प्राक्रमु प्रगच्छेयु ॥

श्यावाश्व· । प्राक्रमु प्रक्रामन्ति प्रगच्छन्ति पवित्रम् । सोमास· सोमा. । मदच्युत: रमक्षरणा: । श्रवसे अन्नार्थम । न अस्माकम । मघोना हविष्मताम् । सुता· अभिषुता: । विदथे यज्ञे ॥ (१)

प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः । वनानि महिषा इव ॥

विनियोगोऽस्य प्रथमेऽहनि । सोमास सोमा । विपश्चित: प्राज्ञा: जिन्वन्ति । अप नयन्त उदकानि प्रेरयन्त । वनानि महिषा इव यथा वनानि महिषा नीयन्ते एवं ऊर्मय उदकैर्नीयन्ते ॥

त्रित: । प्रक्षरन्ति सोमास सोमा: । विपश्चित प्राज्ञा. । अपो न । अप इति षष्ट्या व्यत्ययेन द्वितीया । अपा ऊर्मय इव । यन्त गच्छन्त· । वनानि महिषा इव यथा च वनानि महिषा. ॥ (२)

**पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने । विश्वा अप द्विषो जहि ॥**

विनियोगोऽस्य द्वितीयऽह्नि । हे इन्दो वृषा सुत अभिपुत· पवम्व । कृधि न कुरु अस्मान् ज्ञानयशस्विन । विश्वा सर्वा द्विष अपजहि ॥

असर्हायुः । पवस्व हे इन्दो सुत अस्मासि वृषा त्वम् । कृधि कुरु । न अस्मान् । यशस· यशस्विन । मत्वर्थीयलोप । जने समूहे । विश्वा. द्विषः द्वेष्ट्री प्रजा अपजहि ॥ (३)

**वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे । पवमानः स्वर्दृशम् ॥**

वृषा सेक्ता । हि असि भानुना भवसि भानुना दीप्त्या । द्युमन्तं द्युतिमन्तम् । त्वा त्वाम् । हवामहे आह्वयाम । पवमान स्वर्दृशं स्वर्गलोक पश्यन्तम् ॥

भृगु· । वृषा हि असि भानुना दीप्त्या युक्त· । द्युमन्त दीप्तिमन्तम् । त्वा हवामहे । पवमानः स्वर्दृश सर्वदृशम् ॥ (४)

**इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः । सृजदश्वं रथीरिव ॥**

इन्दु पविष्ट पूत । चेतन चेतनावान् प्रिय· । कवीना मेधाविना मति । स एव सृजत् अश्व रथीरिव यथा रथी ससृजति अश्व तद्वत् ॥

काश्यप द्वयोः । इन्दु· सोमः । पविष्ट पवते । चेतनः ज्ञापयिता प्रियः । कवीना स्तोतृणाम् । मतिः स्तुत्यः । सृजत् सृजति च रसम् । अश्वं रथीरिव नेतेव ॥ (५)

**असृक्षत प्र वाजिनो गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥**

विनियोगोऽस्य षष्ठेऽहनि । प्रासृक्षत प्रसृष्टवन्त । वाजिन अन्नवन्त । गव्या गवेच्छया सोमास । अश्वया अश्वेच्छया । शुक्रास शुक्रा दीप्ता । वीरया वीरेच्छया । आशव शीघ्रा ॥

प्रासृक्षत प्रासृज्यन्त पवित्रे । वाजिन अन्नवन्त बलवन्तो वा । शुक्रास दीप्ता सोमा । गव्या गव्यया गोकामनया । अश्वया अश्वेच्छया । वीरया वीरेच्छया च । शव: शवसा बलेन वेगेन ॥ (६)

**पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः । वायुमा रोह धर्मणा ॥**

विनियोगोऽस्याष्टमेऽहनि । पवस्व देव आयुषक् सुनन्मना । इन्द्र गच्छतु ते तव । मद मदस्रवत्वम् । वायुमारोह धर्मणा कर्मणा ॥

निरुक्ति काश्यप । पवस्व देव द्योतमान त्वम् । आयुषक् आयुष्ठ मनुष्येषु सक्त मनुष्यै सेव्यमान इति वा । इन्द्र गच्छतु ते त्वदीय । मद रस । वायु आरोह धर्मणा धारकेण मदेन ॥ (७)

**पवमानो अजीजनद् दिवश्चित्रं न तन्यतुम् । ज्योतिर्वैश्वानरं बृहद् ॥**

विनियोगोऽस्य चतुर्थेऽहनि । पवमान अजीजनत् । दिव चित्र चायनीयम् । न तन्यतुम् । नशब्द उपमार्थीय । दिनमिव ततुं विस्तीर्णम । ज्योतिर्वैश्वानर वैश्वानरास्य तेज । इह लोके बृहत् महत् ॥

अमर्हीयु । पवमानः अजीजनत् अजनयत । दिव द्युलोकात् । ज्योति वैश्वानर वैश्वानराख्यम् । बृहत महत् । चित्र न चित्रमिव । तन्यतु अशनिम् ॥ (८)

परि स्वानास इन्दवो मदाय बर्हणा गिरा। मधो अर्षन्ति धारया ॥

विनियोगोऽस्य सप्तमेऽहनि । स्वानासः सुताः इन्दवः । मदाय मदार्थम् । बर्हणा परिवेष्टनेन । गिरा स्तुत्या । मधो । विभक्तिव्यत्ययः । मधव परि अर्षन्ति धारया ॥

असितः द्वयोः । परि अर्षन्ति परिक्षरन्ति । स्वानासः सुताः । इन्दवः दीप्ताः सोमाः । बर्हणा बृहत्वेन युक्ता. । गिरा । गृणन्ति शब्दायन्ते इति गिरः । धारायाश्च एतत् विशेषणम् । शब्दायमानया धारया पर्यर्षन्ति । मदाय देवानाम् । मधो इति विभक्तिव्यत्ययः । मधवः मधुराः इत्यर्थः ॥ (९)

परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः। कारुं बिभ्रत्पुरुस्पृहम् ॥

परिप्रासिष्यदत् समन्तात् स्यन्दितवान् । कविर्मेधावी । सिन्धोः ऊर्मौ अधि उपरि । श्रित स्थित । कारुं कर्तारम् । बिभ्रत् धृतवान् । पोषयति धारयति वा । पुरुस्पृहं बहुभि स्पृहणीयम् ॥

परि परितः । प्रासिष्यदत् प्रस्यन्दते । कविः स्तुत्यः शब्दायमान इति वा । सिन्धोः नद्याः । ऊर्मौ उदके । अधीति सप्तम्यर्थानुवादकः । श्रितः संसृष्टः सोमः । कारुं स्तोतारं बिभ्रत् । पुरुस्पृहं बहुभिः स्पृहणीयम् । अथवा कारु. शङ्खः । कार इति शङ्खनाम । कार एव कारुः । देवतात्मना शङ्खं बिभ्रत् इति । गोविन्दुर्दप्स आयुधानि बिभ्रत् (ऋ. वे. ९. ९६. १९) इति निगमः ॥ (१०)

इति पञ्चमे दशमी दशती

पञ्चमः प्रपाठकः

---

## षष्ठः प्रपाठकः

**उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् । इन्दुं देवा अयासिषुः ॥**

विनियोगोऽस्य नवमेऽहनि । उप । उ सु इति पदपूरणार्थौ । जातं अप्तुरं अप्सु भवतीति अप्तुरः । तम् । गोभिः गव्यैः संसृष्टम् । भङ्गं भज्यते ग्रावभिः । परिष्कृतं गव्यैः । इन्दुं सोमम् । देवाः संसदनमयासिषुः उपगतवन्तः । अथवा याचितवन्तः ॥

अमहीयुः । उप उ उपो । उप अयासिषुः उपगच्छन्ति स्तोत्रेण । देवाः स्तोतारः । देवा एव वा पानार्थं उपगच्छन्ति । सु सुष्ठु । जातं प्रादुर्भूतं अभिषुतम् । इन्दुं सोमम् । अप्तुरं अपां वसतीवरीणां तरितारम् । गोभिः गव्येन । परिष्कृतं अलङ्कृतम् । भङ्गं भञ्जकं असुररक्षसाम् ॥ (१)

**पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः । शुम्भन्ति विप्रं धीतिभिः ॥**

विनियोगोऽस्य चतुर्थेऽहनि । पुनानः पवमानः । अक्रमीत् क्रमितवान् । अभि परि समन्तात् । विश्वा मृधः सङ्ग्रामान् जेतुम् । विचर्षणिः विविधं पश्यति । सर्वं वा पश्यति । शुम्भन्ति शोभन्ति अलंकुर्वन्ति विप्रं मेधाविनम् । धीतिभिः कर्मभिः बुद्धिभिर्वा ॥

बृहन्मतिः । पुनानः पूयमानः सोमः । अक्रमीदभि अभिक्रामतु । विश्वाः मृधः हिंसित्रीः प्रजाः । विचर्षणिः विद्रष्टा । तमिमं विप्रं प्राज्ञम् । शुम्भन्ति दीपयन्ति । धीतिभिः स्तुतिभिः स्तोतारः ॥ (२)

**आविशन् कलश सुतो विश्वा अर्षन्नभि श्रिय । इन्दुरिन्द्राय धीयते ॥**

आविशन् कलश द्राणकलशम् । सुत अभिषुत विश्वा सवा । अर्पन् क्षरन्ति । अभि श्रिय सस्पृहणाया । इन्दु मोमा इन्द्राय धीयन ॥

जमदग्नि । आविशन् अवेक्षमाण । कलश द्राणकलशम् । सुत पूवम् । विश्वा श्रिय अभि उद्दिश्य । अपन अक्षरन् । इन्दु साम । इन्द्राय इन्द्राथम् । धीयते निधीयते दशापवित्रे अध्वयुणा ॥ (३)

**असर्जि रथ्यो यथा पवित्रे चम्वोः सुत । कार्ष्मन् वाजी न्यक्रमीत् ॥**

असर्जि रथ्य रथे हित अश्व । यथा पवित्रे अविवालमय । चम्वो द्रोणकलशयो । कार्ष्मन् अनडुह चर्मणि । सुत अभिषुत सोम । वाजी अन्नवान् न्यक्रमीत् ॥

प्रभूवसु । असर्जि सृज्यत सिच्यते पवित्रे । रथ्य रथवाह अश्व यथा । चम्वा अधिषवणफलकया सुत । कार्ष्मन् युद्धे । अश्व इव इति समन्वय । वाजी साम । न्यक्रमीत् नितरा क्रामति पवते ॥ (४)

**प्र यद्गावो न भूर्णय त्वेषा अयासो अक्रमु । घ्नन्तः कृष्णामप त्वचम् ॥**

विनियोगोऽस्य चतुर्थेऽहनि । गाव न चन्द्ररश्मय इव । भूर्णय भ्रमणशीला । त्वेषा दीप्ता महान्त । अयास गमनशीला । प्राक्रमु क्रमितवन्त । घ्नन्त कृष्णा रात्रिं कृष्णरूपाम् । अप त्वचम् अपर्णा रात्रे कृष्णा त्वचम् ॥

मेधातिथिः। प्राक्रमुः प्रगच्छन्ति। यत् यदा। गावो न अनड्वाह इव। भूर्णयः भर्तारः। त्वेषाः दीप्ताः। अयासः गमनशीलाः सोमाः। तदा इति शेषः। अपघ्नन्तो भवन्ति। कृष्णा त्वच कृष्णवर्णं राक्षसं अकर्माणं पापं वा ॥ (५)

अपघ्नन् पवसे मृधः क्रतुवित् सोम मत्सरः। नुदस्वादेवयुं जनम् ॥

विनियोगोऽस्याष्टमेऽहनि। अपघ्नन् मृधः सङ्ग्रामान् पाप्मनश्च। पवसे क्रतुवित् कर्मवित्। सोम मत्सरः मदनीयः भक्षणीयश्च। नुदस्व प्रेरयस्व। अदेवयुं जनम्। यो देवान् यष्टुं न कामयते सः अदेवयुः। तं दुष्टजनम् ॥

निघ्रुविद्वेयोः। मृधः शत्रून्। अपघ्नन् पवसे क्रतुवित् कर्मणा प्रज्ञाना वा लम्भनं हे सोम। मत्सरो मदकरः। नुदस्व बाधस्व। अदेवयुं देवानकामयमानं वेदबाह्यं जनम् ॥ (६)

अया पवस्व धारया यया सूर्यमरोचयः। हिन्वानो मानुषीरपः ॥

अया पवस्व धारया यया सूर्यमरोचयः दीप्तं कृतवान्। अथाप्यस्यैको रश्मिः चन्द्रमसमनुप्राप्तो भवति। हिन्वानः गमयन्। मानुषीः अपः मनुष्यलोकं प्रत्युदकानि। अया अनया। पवस्व पूयस्व। धारया यया सूर्यमरोचयः। रुच दीप्तौ.। सूर्यं दीपयसि। हिन्वानः सेवमानः। मानुषीः मनुष्याणां भवाः अपः ॥

अया अनया धारया पवस्व। यया धारया सूर्यमरोचयः। हिन्वानः प्रेरयन्। मानुषीः मनुष्येभ्यो हिताः। अपः वर्षाणि ॥ (७)

**स पवस्व य आविथेन्द्रं वृत्राय हन्तवे । वव्रिवांसं महीरपः ॥**

स पवस्व य आविथ । अवे तर्पणार्थस्य । तर्पयसि इन्द्रम् । किमर्थम् । वृत्राय हन्तवे । मेघाय वृत्राय हननार्थम् । किं कुर्वाणम् । वव्रिवास वरणस्वभावम् । मही महती । अप वृण्वान महत्त्वात् ॥

अमहीयु । स त्व पवस्व । य त्व आविथ ररक्षिथ इन्द्र अतर्पय इति वा । वृत्राय वृत्रम् । हन्तवे हन्तुम् । वव्रिवास आवृण्वन्तम । मही महती । अपो वृत्रम् ॥ (८)

**अया वीती परि स्रव यस्त इन्दो मदेष्वा । अवाहन् नवतीर्नव ॥**

विनियोगोऽस्याष्टमेऽहनि । वीती । वीति कान्ति मार्गो वा । तेन । परि स्रव परि समन्तात् स्रव । य ते तव । इन्दो सोम । मदेषु आ पुरतो व्यवस्थितेषु । अवाहन् शत्रूणा नवतीर्नव अष्टौ शतानि दशोत्तराणि ॥

अमहीयु । अया अनेन रसेन अनेन गन्त्रा इति वा । वीती वीतये अशनाय देवानाम् । परि स्रव हे इन्दो । य ते रस मदेषु जनितेषु । आ अभिगम्य । अवाहन् अवहतवान् । नवती नव पुरी इन्द्र प्रविष्ट सन् ॥ (९)

**परि द्युक्ष सनद्रयिं भरद्वाज नो अन्धसा । स्वानो अर्ष पवित्र आ ॥**

परि द्युक्षम् । द्युतौ क्षियन्ते इति द्युक्षम् । सनत् चिरन्तनम । रयिं धनम् । भरत् आभरत् सर्वत । वाजमन्नम् । न अस्मान् प्रति । अन्धसा तर्पित । स्वान सूयमान पवित्रे । अर्ष क्षर । आ अधि ॥

उचच्यः। पर्यर्ष परिक्षर कलशमभि। द्युम्नं दीप्तम्। सनदर्यि दीयमानं धनम्। वाजं बलम्। भरत् बिभ्रत्। नः अस्मदर्थम्। अन्वसा रसेन। स्वानः सुतः। पवित्रे आ आसिक्तः त्वम् ॥ (१०)

इति षष्ठे प्रथमा दशती।

---

अचिक्रदद्वृषा हरिर्महान् मित्रो न दर्शतः। सं सूर्येण दिद्युते ॥

विनियोगोऽस्य षष्ठेऽहनि। अचिक्रदत् शब्दं कृतवान्। वृषा सेक्ता। हरिः हरितवर्णः महान्। मित्रो न मित्र इव। दर्शतः द्रष्टा। सं सूर्येण दिद्युते दीप्यते ॥

मेधातिथिः। अचिक्रदत् क्रन्दति शब्दायते पवमानः। वृषा वर्षकः। हरिः हरितवर्णः महान्। मित्रो न मित्र इव। दर्शतः दर्शनीयः। सं सह। दिद्युते द्योतते सूर्येण ॥ (१)

आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे। पान्तमा पुरुस्पृहम् ॥

विनियोगोऽस्य सप्तमेऽहनि। ते दक्षं शीघ्रम्। मयोभुवं सुखभवम्। वह्निं वोढारम्। अद्य आवृणीमहे। पान्तं पालयन्तम्। पुरुस्पृहं बहुभिः स्पृहणीयम् ॥

भृगुः। आवृणीमहे प्रार्थयामहे। ते त्वदीयं रसम्। दक्षं समर्थयितारम्। मयोभुवं सुखस्य भावयितारम्। वह्निं वोढारं विश्वस्य। पान्तं पातव्यम्। आ

आवृणीमहे । पुरस्पृह बहुभिः स्पृहणीयम् । अद्य अस्मिन् अहनि आ आवृणीमहे ॥ (२)

अध्वर्यो अद्रिभिः सुतं सोमं पवित्र आनय । पुनाहीन्द्राय पातवे ॥

विनियोगोऽस्याष्टमेऽहनि । अध्वर्यो अद्रिभि सुतं ग्रावभिरभिषुतं सोमम् । पवित्रे अविमये आनय । पुनीहि पूतं कुरु । इन्द्राय पातवे इन्द्रस्य पानार्थम् ॥

उचथ्य. । हे अध्वर्यो अद्रिभिः ग्रावभिः । सुत अभिषुत सोमम् । पवित्रे आनय आधेहि । पुनाहि पुनीहि । इन्द्राय इन्द्रार्थम् । पातवे पानार्थं इन्द्रस्य ॥ (३)

तरत् स मन्दी धावति धारा सुतस्यान्धसः । तरत् स मन्दी धावति ॥

विनियोगोऽस्य षष्ठेऽहनि । चतुर्ऋचो भवति प्रतिष्ठायै । प्रतिष्ठायै यजमानाय । ध्वस्रे वै पुरुषं तीतरन्त । ध्वस्रावेभ्य स्त्रिय पुरुपन्त्यो बहुसम्भजन्त्यो बहुपुरुष तीतरन्त । पुरुमीढाभ्या ऋषिभ्या वैददश्विभ्या सहस्राणि अदित्सता दातुमिच्छताम् । तौ तरन्तौ पुरुमीढौ ईक्षेता मनसा ग्राह्यमग्राह्य कथं केन प्रकारेण नौ आवामिदं आत्तमप्रतिगृहीतं स्यादिति । तौ प्रत्येताम् । चतुर्ऋच प्रत्यर्थं ध्वस्रयो पुरुपन्त्यो रमन्त्यो आदद्महे सहस्राणि आत्तवन्तौ तरत् । तरत् प्रतिग्रहदोष स मन्दी सोम । धावति शोधयति । ततौ वैङ्गतयो आत्तं गृहीतमप्रतिगृहीतं भवति । अन्यत्रापि आत्तमस्य अप्रतिगृहीतं भवति । गृहीतमपि य एव विजानाति विनाशं सोऽनुभवति । तरन्त पुरुमीढौ उभयस्य अन्नाद्यस्यावरुद्ध्यै । मानुष्यस्य च दैवस्य च । मानुष्यस्य च अन्नस्य दैवस्य च अवने धनार्थम् । तथा च गौतमः

अप्रतिग्राह्यं प्रतिजिघृक्षत् प्रतिगृह्य वा चतुर्ऋचं तरत्समन्दीत्यप्सु जपेत् । तरत् सः मन्दी सोमः । धावति गच्छति वा शोधयति वा पापम् । न केवलं सोम. । धारा अपि । सुतस्य अन्धसः अन्नस्य सोमलक्षणस्य । तरत् तरति । स पापं यस्य मन्दी धावति शोधयति । उस्रा माध्यमिका वाक् धारा वा । वेद विजानाति । वसूना मर्त्यस्य देवी अवसः । एवंगुणविशिष्टा धारा । ध्वस्रयोरिति व्याख्याता । आ ययोः पुरुषन्त्योः । त्रिंशतं त्रिंशच्छतानि धनाना सहस्राणि च । आदद्महे । तरत स मन्दी धावति ॥

अवत्सारः । तरत् अतरत् प्राप्नुवन् लोकान् त्रीन् । उक्तं हि पूर्वमस्माभिः—पवित्रं द्युलोको मध्यं अन्तरिक्षं कलशः पृथिवीति । अथवा तरत् तारयत् पापात् । स सोमः । मन्दी मदकरः । धावति पवते । कथं सोमः पवते । धारारूपेण इत्याह । धारा पवते सुतस्य अन्धसः अन्नभूतस्य सोमस्य । तरत् स इति पुनरुक्तिरादरार्था ॥ (४)

आ पवस्व सहस्रिणं रयिं सोम सुवीर्यम् । अस्मे श्रवांसि धारया ॥

आ पवस्व सहस्रिणं रयिं धनम् । सुवीर्यं हे सोम । अस्मे अस्मासु । श्रवासि अन्नानि यशासि वा धारया ॥

निध्रुविः । आ अभि उद्दिश्य पवस्व । सहस्रिणं सहस्रसंख्याकम् । रयिं धनं हे सोम । सुवीर्यं शोभनवीर्ययुक्तम् । अस्मे अस्मासु । श्रवांसि अन्नानि धारया ॥ (५)

अनु प्रत्नास आयवः पदं नवीयो अक्रमुः । रुचे जनन्त सूर्यम् ॥

अनु प्रत्नासः पुरातना. । आयवः मनुष्याः वसिष्ठादय· । पदं पद्यते उत्पाद्यते संसाख्यम् । नवीयो नवतरं अस्मिन् कल्पे । अक्रमुः क्रमितवन्त । रुचे दीप्त्यर्थम् । जनन्त जनयन्ति सूर्यम् ॥

असित. । प्रत्नासः पुराणाः । आयवः गन्तारः सोमाः । अनु आनुपूर्वम् । नवीय. नवतर पदम् । अक्रमु. आक्रामन्ति निदधति कलशे च । रुचे दीप्त्यै । जनन्त जनयन्ति सूर्यम् ॥ (६)

अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् । सीदन् योनौ वनेष्वा ॥

विनियोगोऽस्य पञ्चमेऽहनि । अर्ष क्षर सोम द्युमत्तम । अभि द्रोणानि कलशादीनि अभियास्यसि । रोरवत् शब्दं कुर्वन् । सीदन् योनौ स्थाने । वनेषु आ उदकेषु अधि ॥

भृगुः । द्रोणानि द्रोणकलश अभि । अर्ष क्षर । हे सोम द्युमत्तमः दीप्तितमः त्वम् । रोरुवत् शब्दायमानः । आसीदन् योनौ स्थाने कलशे । वनेषु वृक्षेषु ॥ (७)

वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः । वृषा धर्माणि दध्रिषे ॥

वृषा सेक्ता । सोम । द्युमान् द्युतिमान् । असि भवसि । वृषा सेक्ता देव वृषव्रत सेक्तृकर्मन् । वृषा सेक्ता । धर्माणि धारणानि । दध्रिषे धारयसि ॥

काश्यपः द्वयोः । वृषा असि त्वं हे सोम । द्युमान् दीप्तिमान् । वृषासि हे देव । वृषव्रतः वृषकर्मा । वृषा त्वं धर्माणि धारकाणि कर्माणि । दध्रिषे विदधिषे विधत्से ॥ (८)

इषे पवस्व धारया मृज्यमानो मनीषिभिः। इन्दो रुचाभि गा इहि ॥

विनियोगोऽस्य तृतीयऽहनि। इष अन्नार्थम्। पवस्व धारया मृज्यमान शोध्यमान। मनीषिभि मनसा एषणशीलै। इन्दो रुचा दीप्त्या। अभि गा आ इहि आगच्छ ॥

इषे अन्नार्थम्। अस्मभ्य पवस्व धारया। मृज्यमान पाल्यमान। मनीषिभि ऋत्विग्भि। हे इन्दो रुचा रोचमानया धारया। अभाहि अभिगच्छ। गा गाचमाणि ॥ (९)

मन्द्रया सोम धारया वृषा पवस्व देवयुः। अव्या वारेभिरस्मयु ॥

मन्द्रया मदनीयया। सोम धारया। वृषा सेक्ता। पवस्व देवयु देवान् कामयते। अव्या वारभि अव्यै वालै पवस्व। अस्मयुः अस्मानपि कामयते ॥

असित। मन्द्रया मादयित्र्या धारया। पवस्व हे साम वृषा त्वम्। देवयु देवकाम। अव्या मेष्या। वारेभि वारै दशापवित्रगतै। अस्मयु अस्मत्कामश्च सन् ॥ (१०)

अया सोम सुकृत्यया महान्त्सन्नभ्यवर्धथाः। मन्दान इद्वृषायसे ॥

अया अनया। सोम सुकृत्यया शोभना कृति करणम्। तया। महान् सन् अभ्यवर्धथा। मन्दान इत् एव वृषायसे मत्तायसे ॥

कवि भार्गव। अया अनया। सुकृत्यया शामनेन कर्मणा अभिषवणा-दिना होमान्तेन। हे सोम महान् सन् महता देवान्। अभ्यवर्धथा अभिवर्तसे। मन्दान मादयन् देवान्। वृषायसे वृषवदाचरसि। वर्षसीत्यर्थ। इत एव ॥ (११)

अयं विचर्षणिर्हितः पवमानः स चेतति । हिन्वान आप्यं बृहत् ॥

अयं सोम. । विचर्षणिः सर्वं पश्यति । हितः निहितः । पवमानः पूयमान । स चेतति जानाति सम्यक् नयति वा । हिन्वानः गमयन् । आप्यं अप्सु भवम् । बृहत् महत् ॥

जमदग्निः । अयं स पवमानः । विचर्षणिः विद्रष्टा । हितः प्रहितः ऋत्विग्भिः । चेतति ज्ञायते । हिन्वानः प्रेरयन् । आप्यं आप्तव्यम् । बृहत् ब्रह्मान्नं वा ॥ (१२)

प्र न इन्दो महे तुन ऊर्मि न बिभ्रदर्षसि । अभि देवाँ अयास्यः ॥

प्र न इन्दो महे महते । तुने ऊर्मि न बिभ्रत् धारयत् । अर्षसि क्षरसि । अभि देवान् देवान् लक्षयित्वा । अयास्यः ऋषिराह ॥

अयास्य आङ्गिरसः । प्रार्षसि हे इन्दो । नः अस्माकम् । महे महते । तुने धनाय । तने इति बह्वृचाः । तना इति च धननामसु पठितम् । ऊर्मि रसं बिभ्रत् । नेति सम्प्रत्यर्थे । देवानभि तान् प्रीणयितुम् । अयास्यः गमनशील इति वा गन्तव्य उपगन्तव्यः इति वा ॥ (१३)

अपघ्नन् पवते मृधोऽप सोमो अराव्णः । गच्छन्निन्द्रस्य निष्कृतम् ॥

विनियोगोस्याष्टमेऽहनि । अपघ्नन् मृधः सङ्ग्रामं पाप्मनो वा । सोम अराव्णः अभिशस्तारः । तान् सोम अपजहि । गच्छन् इन्द्रस्य निष्कृतं सम्यक् संस्कृतं स्थानम् । समवायन् पूतमेवैनं यज्ञीय इन्द्रस्य नि कृतं गमयति ॥

अमहीयुः । मृधः हिंसकान् शत्रून् । अपघ्नन् पवते सोमः । अपघ्नन् अराव्णः अदातॄंश्च पवते । गच्छन्निन्द्रस्य निष्कृतं संस्कृतं द्रोणकलशम् ॥ (१४)

इति पञ्चमे द्वितीया दशती ।

---

इत उत्तरं बृहत्यः ।

**पुनानः सोम धारयापो वसानो अर्षसि ।**
**आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥**

विनियोगोऽस्य ज्योतिष्टोमे । पुनानः सोम धारया अपः वसानः उदकानि आच्छादयमानः । अर्षसि क्षरसि । रत्नधाः रत्नं धारयन् । योनौ स्थाने । ऋतस्य यज्ञस्य । आसीदसि । उत्सः कूपः । देव· हिरण्ययः अमृतमयः ॥

पुनानः सोमेति या द्वादशर्चः सप्तर्षयो बृहतीस्ता अपश्यन् ।
भरद्वाजः काश्यपो गौतमोऽत्रिर्विश्वामित्रो जमदग्निर्वसिष्ठः ॥

पुनानः पूयमानः त्वं हे सोम । धारया अर्षसि क्षरसि । अपः वसतीवरीः । वसानः आच्छादयन् । आसीदसि ऋतस्य यज्ञस्य । योनिं कलशम् । रत्नधाः रत्नप्रदः । उत्सः उत्सारयिता रसस्य । देवो दीप्तः । हिरण्ययः हितरमणीयः ॥ (१)

**परितो षिञ्चता सुतं सोमो य उत्तमं हविः ।**
**दधन्वाँ यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥**

विनियोगोऽस्य नवमेऽहनि । हे स्तोतार परिषिञ्चत सुतम् । सोम य उत्तम हवि दधन्वान् दधाति । योऽसौ दधन्वान् । य नर्य नृभ्यो हित । अप्सु अन्त मध्य । आसुषाव सोमम् । अद्रिभि ग्रावभि ॥

परिषिञ्चत इत इह पवित्रे । सुत सामम् । सोमो य उत्तम हवि उत्तम उत्कृष्टतम हवि भवति । दधन्वान् धारयिता विश्वस्य । नर्यो नरेभ्य यजमानेभ्य हित । अप्सु वसतीवरीषु । अन्त मध्ये । आ आविष्ट । य सुषाव सोम अद्रिभि ग्रावभि अध्वर्युभि ॥ (२)

आ सोम स्वानो अद्रिभिः तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥

विनियोगोऽस्य तृतीयऽहनि । स्वान आभिमुख्यन अभिपूयमाण सोम । तिर अध । वाराणि अव्यया अविमयानि वालानि । जनो न । नशब्द उपमार्थीय । परि उपरि । चम्वो अधिषवणफलकयो आनडुहचर्मणो । विशत् प्रविशत् । हरि हरितवर्ण । सद यज्ञसद । वनेषु उदकेषु । दध्रिषे ददाति ॥

अत्र तृतीय पाद परोक्षकृत । इतरत प्रत्यक्षकृतम् । आपवसे त्व हे सोम । स्वान सुत अद्रिभि । तिर तिरस्कुवन् । वाराणि अव्यया अव्ययानि अविमयानि । जना न जन इव । पुरि नगयाम् । चम्वो अधिषवणफलकयो । तदुपरि स्थिते कलशे । विशत विशति । हरि साम । हे सोम सद स्थानम । वनेषु वाक्षषु । दध्रिषे विधत्से त्वम् ॥ (३)

प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥

विनियोगोऽस्य प्रथमेऽहनि । देववीतये देवतर्पणाय । सिन्धुर्न । न-शब्द उपमार्थीयः । सिन्धुरिव । प्रपिप्ये प्रवर्धने पूर्यते वा । अर्णसा उदकेन । अंशो पयसा रसेन । मदिरो मदनीय । न सम्प्रति । जागृवि. जागरणशील अप्रमत्त· । अच्छ आप्तुम् । कोशं द्रोणकलशम् । मधुश्चुतं मधुस्राविणं रसता गतम् ॥

प्रपिप्ये प्रप्याय्यसे ह सोम । अंशोः अंशेन सुखकरस्य तव । पयसा रसेन । देववीतये यज्ञार्थम् । सिन्धुर्न सिन्धुरिव । अर्णसा उदकेन । मदिरः त्वम् । न सम्प्रति । जागृवि. प्रबुद्धः । अच्छ अभिगच्छसि । कोश स्थान द्रोणकलशम् । मधुश्चुत मदस्य क्षरणम् ॥ (४)

सोम उ ष्वाणः सोतृभिरधिष्णुभिरवीनाम् ।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥

विनियोगोऽस्य पञ्चमेऽहनि । स्वान. सूयमान. सोतृभि. । अधि उपरि । स्नुभि अभिषोतृभि । अवीना वालानाम् । अश्वया इव अश्वया यथा गन्ता शीघ्रं गच्छति तद्वच्छीघ्रगामिन्या । हरिता हरितवर्णया । धारया मन्द्रया बहुलया । याति धारया ॥

सोम· स्वान. सुतः । सोतृभि अध्वर्युभिः । उ अधि इतीमौ पादपूरणौ । अवीना सम्बन्धिभिः । स्नुभिः सानुभि उच्छ्रितप्रदेशैः पवित्रे । पूयमान इति शेषः । अश्वयेव वेगवन्या इव । हरिता हरितवर्णया । धारया याति मन्द्रया मादयित्र्या । याति धारया इति पुनरुक्तिरादरार्था ॥ (५)

तवाहं सोम रारण सख्य इन्दो दिवे दिवे ।
पुरूणि बभ्रो निचरन्ति मामव परिधीँ रति ताँ इहि ॥

विनियोगोऽस्य चतुर्थेऽहनि । सोम रारण रमयामि । अथवा रणति· स्तुतिकर्मा । तव स्तुतिं करोमि । सख्ये सखित्वे । हे इन्दो दिवे दिवे अहन्यहनि । पुरूणि बहूनि । बभ्रो बभ्रुवर्ण । निचरन्ति अभिचरन्ति दुष्कृतानि बहूनि । अथवा बहूनि यजमानकुले निचरन्ति । मामव पालय तेभ्य· परिधीन् अति । तान् इहि ये अन्ये यजमानाः परिचरन्ति तेभ्यः परिधींस्तरण अतीत्य आ इहि मदीयं यज्ञमायाहि । अथवा दुष्कृतानि ये कुर्वन्ति अतीत्यैतेषा परिधीनायाहि ॥

तव सख्ये अहं रारण रमये । हे इन्दो दिवे दिवे प्रतिदिनं अहर्गणेषु । पुरूणि बहूनि रक्षांसि । मा अवनिचरन्ति हे बभ्रो भर्तः विश्वस्य । तान् परिधीन् परितो निहितान् । अति अतिक्रम्य । इहि आगच्छ । परिधिशब्दस्य पुलिङ्गत्वात् तानिति पुलिङ्गता ॥ (६)

**मृज्यमानः सुहस्त्य समुद्रे वाचमिन्वसि ।**
**रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥**

विनियोगोऽस्य षष्ठेऽहनि । मृज्यमानः शोध्यमानः । सुहस्त्य सुहस्त शोभनहस्त । समुद्रे अन्तरिक्षे । वाचमिन्वसि व्याप्नोषि । अथवा समुद्रे द्रोणकलशे । रयिं धनम् । पिशङ्गं पिशङ्गवर्णं सुवर्णम् । बहुलं प्रभूतम् । पुरुस्पृहं बहुभि स्पृहणीयम् । पवमान शोध्यमान । अभि अर्षसि क्षरसि ॥

मृज्यमानः पूयमानः त्वम् । हे सुहस्त्य शोभनहस्तानां योग्य । समुद्रे अन्तरिक्षे पवित्रादधोभागे । वाचं शब्दम् । इन्वसि प्रेरयसि । स त्वं अस्मभ्यं रयिं धनम् । पिशङ्गं नानारूपं हिरण्यरजतादिभिः । बहुल प्रभूतम् । पुरुस्पृहं बहुभिः स्पृहणीयम् । अभि उद्दिश्य । अर्षसि क्षर हे पवमान ॥ (७)

अभि सोमास आयवः पवन्ते मद्यं मदम् ।
समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥

विनियोगोऽस्य तृतीयेऽहनि । सोमासः आयवः मनुष्याः । अभि पवन्ते मद्यं मदनीयं मदम् । समुद्रस्य अन्तरिक्षस्य । अथवा समुद्रस्य द्रोणकलशस्य । अधि उपरि विष्टपे स्थाने । मनीषिणः मत्सरासः मदच्युतः मदस्राविणः ॥

सोमासः सोमाः । आयवः गमनशीलाः । अभिपवन्ते अभिक्षरन्ति । मद्यं स्तुत्यम् । मदमभि देवाना मदार्थं इत्यर्थः । समुद्रस्य अन्तरिक्षस्य । अधि विष्टपे उच्छ्रिते देशे । सिक्ताः इति शेषः । मनीषिणः मनस ईशितारः । मत्सरासः मदकराः । मदच्युतः शत्रूणा मदस्य च्यावयितारः ॥ (८)

पुनानः सोम जागृविरव्या वारैः परि प्रियः ।
त्वं विप्रो अभवोऽङ्गिरस्तम मध्वा यज्ञं मिमिक्ष णः ॥

पुनानः सोमः जागृविः जागरणं कुरु । अव्या अवेः वारैः । परि सर्वतः । प्रियः प्रियतरः भूतानाम् । त्वं विप्रः मेधावी । अभवः भवसि । अङ्गिरस्तम । मध्वा मधुना रसेन यज्ञमस्मदीयम् । मिमिक्ष सिञ्च नः । अथवा मिश्रं कुरु ॥

पुनानः त्वं हे सोम जागृविः प्रबुद्धः । अव्याः मेष्याः वारैः । पवित्रे परि परिषिच्यसे । प्रियः देवानाम् । त्वं विप्रः प्राज्ञः । अभवः भवसि । हे अङ्गिरस्तम गन्तृतम । अङ्गेः गतिकर्मणः अङ्गिराः । स त्वं मध्वा रसेन । यज्ञं नः अस्मदीयम् । मिमिक्ष सिञ्च । अथवा यजमानं वृष्ट्युदकेन सिञ्च ॥ (९)

इन्द्राय पवते मदः सोमो मरुत्वते सुतः ।
सहस्रधारो अत्यव्यमर्षति तमीं मृजन्त्यायवः ॥

सुत सोम । मद मदकर । इन्द्राय मरुत्वते पवते । सहस्रधार बहुधार । अव्यं पवित्रम् । अति अतीत्य अर्षति । तं ईं एनम् । मृजन्ति पुनन्ति । आयव· मनुष्या ॥ (१०)

पवस्व वाजसातमोऽभि विश्वानि वार्या ।
त्वं समुद्र· प्रथमे विधर्मन् देवेभ्य सोम मत्सरः ॥

पवस्व वाजसातम अभि विश्वानि सर्वाणि । वार्या वरणीयानि उदकानि । त्व समुद्र समुद्रस्थानीय । प्रथमे अग्र्ये । विधर्मन् विधर्मणि विविधकर्मधारणे । देवेभ्य सोम मत्सर । मदेस्तृप्तिकर्मण । मदनीय ॥

पवस्व वाजसातम अन्नप्रदतम । अभि उद्दिश्य । विश्वानि वार्या वृरणीयानि धनानि । त्व समुद्र समुन्दन वर्षिता । प्रथमे मुख्ये श्रेष्ठे । विधर्मन् विधारके यज्ञे । देवेभ्य पवस्व हे सोम मत्सर त्वम् ॥ (११)

पवमाना असृक्षत पवित्रमति धारया ।
मरुत्वन्तो मत्सरा इन्द्रिया हया मेधामभि प्रयांसि च ॥

पवमाना असृक्षत क्षरन्ति पवित्रमतीत्य धारया । मरुत्वन्त मरुद्भि तद्वन्त सोमा । मत्सरा मदनीया । इन्द्रिया इन्द्रियवन्त । मेधा प्रज्ञाम् । अभि प्रयासि गच्छ ॥

पवमाना· सोमा । असृक्षत सृष्टा उद्युक्ता गच्छन्ति । धारया पवित्र अति अतीत्य । मरुत्वन्त स्तोतृमन्त । महत् रुवन्तीति मरुत स्तोतार· ।

मत्सरा: इन्द्रियाः इन्द्रियस्य हेतवः । हयाः गन्तारः । हि गतौ । मेधां प्रज्ञाम् । प्रयासि अन्नानि च । अभि उभयं यजमानेभ्यः कर्तुम् ॥ (१२)

इति षष्ठे तृतीया दशती ।

---

इत उत्तरं त्रिष्टुभः ।

**प्र तु द्रव परि कोशं निषीदन् नृभिः पुनानो अभि वाजमर्ष ।**
**अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥**

विनियोगोऽस्य ज्योतिष्टोमे । प्रद्रव रसेन । परि सर्वतः । कोशं द्रोणकलशं निषीदन् । नृभिः मनुष्यैः । पुनानः पूयमानः । अभ्यर्ष क्षर । वाजं अन्नं तव । अश्वं न त्वा अश्वमिव त्वाम् । वाजिनमन्नवन्तम् । मर्जयन्तः शोधयन्तः । अच्छ आप्तुम् । बर्हि प्रवृद्धम् । रशनाभिः नयन्ति प्रापयन्ति । यूपनियोजनी रशना ॥

त्रिष्टुभो विंशतिर्द्वे च प्र तु द्रव परीत्यृचः ।
ऋषींस्तु विप्रकीर्णत्वात् तत्र तत्राभिदध्महे ॥

उशनाः । प्र तु द्रव प्रक्षरतु क्षिप्रम् । कोशं कलशम् । परि उपरि निषीद । नृभिः अध्वर्युभिः । पुनानः पूयमानः । वाजं अन्नम् । अभि उद्दिश्य । यजमानस्य अर्ष गच्छ । अश्वं न अश्वमिव । वाजिनं वेगवन्तम् । त्वा त्वाम् । मर्जयन्तः शोधयन्तः । बर्हिः यज्ञम् । अच्छ अभि नयन्ति नराः । रशनाभिः अङ्गुलीभिः ॥ (१)

**प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।**
**महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥**

विनियोगोऽस्य सप्तमेऽहनि । काव्यं उशना इव ब्रुवाणः । देवः सोम. देवाना जनिमा जनिमानि जननानि कर्माणि वा विवक्ति । महिव्रत· महत कर्मण अन्नस्य वा धारयिता । शुचिबन्धुः शोभनबन्धुः शुद्धबुन्धुर्वा । पावकः शोधयिता । पदा वराहः सोमः । अभ्येति रेभन् स्तुवन् ॥

*वृषगणः वासिष्ठः । प्रविवक्ति प्रयैति । देवः सोमः । देवाना जनिमा जन्मानि । शेश्छन्दसि (पा. ६. १. ७०) इति लुक् । जनान् समूहान् अभि । काव्य स्तोत्र ब्रुवाण. ऋषिः । उशनेव महिव्रतः महाकर्मा । शुचिबन्धुः दीप्तस्तोत्रकः । पावक सोमः । पदा पदं स्थान कलशम् । अभ्येति रेभन् शब्दायमानः । वराह. वराणा धनाना आगमयिता सोमः ॥* (२)

**तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।**
**गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥**

विनियोगोऽस्य तृतीयेऽहनि । तिस्रो वाचः ऋग्यजु·सामानि । ईरयति प्रेरयति । वह्नि· वोढा सोम· । ऋतस्य धीतिं कर्म । ब्रह्मणो मनीषां मन्त्राणि वेदोक्तानि प्रेरयन्ति । गाव. यन्ति गोपतिं यजमानम् । दक्षिणासम्बन्धेन पृच्छमाना इव वृषभं वा । सोमं यन्ति मतयः बुद्धयः । वावशानाः कामयमानाः । यद्यपि पावमानीषु सोमं मुक्त्वा अन्या देवता न संभवति तथाप्यष्टादशे व्याख्यानेति कृत्वा तेनापि आत्मनानुस्मरणार्थमालिख्यते । तिस्रो वाच । ऋग्यजुःसामानि । अथवा तिस्रो वाचः सत्वरजस्तमांसि । अथवा जाग्रत्स्वप्नसुषुप्तिवृत्तयः । ईरयति प्रेरयति । उदकं रश्मींश्च वहतीति वह्निरादित्य· । ऋतस्य आदित्यस्य धीतिम् । अथवा ऋतस्य सत्यब्रह्मणः । अथवा ऋतस्यान्नस्य धीतिं यज्ञस्य वा आदित्यस्य वा । हया इव

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते इति। ब्रह्मणो मनीषां गावः रश्मयः तेन विसृष्टाः। अथवा उदकानि। एतमेव गोपतिं रश्मिस्वामिनं वा। पृच्छन्त इव सोमं यन्ति। पृथिवीं वावशाना आदित्यं यन्ति प्रविशन्ति। अध्यात्मं वा। वहिरात्मा भवति वश्यादिगुणसंयोगात्। सः तिस्रो वाचः प्रेरयति विद्याबुद्धिमनांसि। विद्या महान्। बुद्धिरहङ्कारो मन इति प्राधान्याद्बुद्धीन्द्रियाणि। ऋतस्यात्मनः। धीतिम्। मनसः इष्टानि कर्माणि प्रेरयन्ति। ब्रह्मण आत्मन। गावः यन्ति आत्मानं इन्द्रियाणां स्वामिनं पृच्छमानाः आत्मानम्। तदभिप्रायेण शब्दाद्यनुगमनात्। एत-मेवमात्मानं सोमं कामयमाना इव यन्ति मतयः तदर्थं प्रादुर्भवन्ति॥

पराशरः। तिस्रः त्रिविधाः मन्द्रमध्यमोत्तमाः। वाचः प्रेरयन्ति। वह्निः वोढा यज्ञस्य। ऋतस्य यज्ञस्य। धीतिं विधानं अनुष्ठानं च प्रेरयन्ति। सोमे अभिषुते कर्माणि प्रवर्त्यन्ते। ब्रह्मणः ब्राह्मणानाम्। मनीषां स्तुतिं च प्रेरयन्ति। सामान्यवाची ब्रह्मशब्दः नपुंसकलिङ्गः। गावः यन्ति अभि-गच्छन्ति। गोपतिं सोमम्। पृच्छमानाः अन्विच्छन्त्यः। सोमं यन्ति मतयः स्तुतयः। वावशानाः कामयमानाः॥ (२)

अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम्।
सुतः पवित्रं पर्येति रेभन् मितेव सद्म पशुमन्ति होता॥

विनियोगोऽस्याभिप्लवे। प्रेषा प्रकर्षेच्छया। हेमना सुवर्णेन। पूय-मानः देवः समपृक्त रसम्। देवेभ्यः सुत अभिषुतः। पवित्रं पूतम्। पर्येति रेभन् आविशति। मितेव सद्म उदकानि। पशुमन्ति होता। अथवा अस्य सोमस्य। प्रेषा प्रकर्षेण इच्छया। हेम्ना सुवर्णेन। पूय-मानः क्षाल्यमानः। देवः सोमः देवेभ्यो वस्वादिभ्यः। संपृच्यते निष्पाद-

यति रसम् । सुत अभिषुत दशापवित्रं परि समन्तात् । एति रेभन् सोम । मिता इव सद्म । मिता कर्ता । सद्म आत्मीयानि गृहाणि । पशुमन्ति होता देवानामाह्वाता ॥

वसिष्ठ. । अस्य आत्मन· । प्रेषा प्रेरयित्रा । हेमना गन्त्रा अध्वर्युणा । पूयमानः देव. सोमः देवेभि. देवैः । समपृक्त रसं योजयति रसं स्वम् । सुतश्च अय पवित्रं परि वर्जयित्वा अतिक्रम्य । एति कलशम् । रेभन् स्वन । मितेव मितानीव । सद्म सद्मानि यज्ञगृहान् । पशुमन्ति नियुक्तपशुकानि । होता यथा अग्निषु प्रेषादीन् वदति यज्ञगृहे स्थितः तद्वत् शब्दायते ॥ (४)

**सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।**
**जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥**

विनियोगोऽस्य चतुर्थेऽहनि । सोम पवते । अधियज्ञपक्षे पर्णसोमस्य पृथिव्यादीना जनयितृत्वेन सम्भवात् यज्ञद्वारेण स्थितिहेतुत्वात् जनयतीति जनिता । मतीना जनयिता । दिव· जनयिता । अग्नेर्जनयिता । सूर्यस्य जनयिता । इन्द्रस्य जनयिता । उत अपि च विष्णोर्व्याप्तिमत इति । जनयिता पृथिव्यादिभ्य· रसेन वर्धयिता । अधिदैवेन इन्द्र· सोमः यदात्मनि तदायमर्थ· । सर्वमिदं भवति । आत्मा सोम. पवते साधयति । भोक्तृत्वादात्मा सत्कारणं वा प्रधानभूतेन्द्रियाणां जनिता पृथिव्यादीना च । द्वयोर्ग्रहणेऽन्तरिक्षस्यापि । अग्न्यादीना चतु स्थानाना तिसृणा विष्णोश्च व्याप्तिमत ॥

प्रतर्दनः । सोमः पवते । जनिता जनयिता वर्धयिता । मतीना स्तोतृणाम् । जनिता दिवः द्युलोकस्य । जनिता पृथिव्याश्च । हवीरूपेण दिवः

वृष्टिरूपेण पृथिव्या इति । जनिता अग्नेः । जनिता सूर्यस्य । जनिता इन्द्रस्य । उत अपि च । विष्णोः जनिता । सोमेन हि देवा आप्याय्यन्ते ॥ (५)

अभि त्रिपृष्ठं वृषणं वयोधामङ्गोषिणमवावशन्त वाणीः ।
वना वसानो वरुणो न सिन्धुर्वि रत्नधा दयते वार्याणि ॥

विनियोगोऽस्याभिप्लवे । त्रयाणां पृष्ठानि सवनानि लोकः देवा वेदा वा । वृषणं सेक्तारम् । वयोधां अन्नानां दातारं यशसां वा । अङ्गोषिणं मतिसमूहम् । अभिवावशन्त अभिकामयन्त । वाणीः वाचः । वना वसानः उदकानि आच्छादयमानः । वरुणः सोम । न सिन्धुः समुद्र इव । वि रत्नधा विविधानां रत्नानां धाता दाता स्थापिता वा । दयते वार्याणि वरणीयानि धनानि ॥

वसिष्ठः । अभि अवावशन्त अभिकामयन्ते । त्रिपृष्ठं त्रिस्थानं सवनानि त्रीणि द्रोणकलशपूतभृदाहवनीयाख्यानि वा स्थानानि । वृषणं वर्षितारम् । वयोधा वयसः अन्नस्य दातारं सोमम् । अङ्गोषिणं आघोषिणम् । वाणीः वाण्यः स्तुत्यः । वना वनानि उदकानि वसानः । वरुणो न वरुण इव । सिन्धुः स्यन्दनात् । स्यन्दयिता । विदयते प्रयच्छति । वार्याणि वरणीयानि । रत्नधाः रत्नप्रदः सोमः ॥ (६)

अक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन् प्रजा भुवनस्य गोपाः ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ॥

विनियोगोऽस्य नवमेऽहनि । अक्रान् क्रान्तवान् समुद्रः । प्रथमे परमे उत्कृष्टे । विधर्मणि धारणे । जनयन् प्रजाः । प्रजायन्ते इति प्रजा देवाद्या । भुवनस्य गोपाः भूतानां रक्षिता । वृषा सेक्ता । पवित्रे वालमये ।

अधि उपरि। सानौ समुच्छ्रिते। अव्ये अविमये। बृहत्सोमः वावृधे वर्धते। स्वान अद्रि आदरण वज्रः। अक्रान् समुद्रः सामर्थ्यात् अत्यक्रमीत्। अतीत्य गच्छत्युदयादस्तं सदा समुद्रः आदित्यः। प्रथमे प्रकृष्टे व्योमन् सामर्थ्यादन्तरिक्षे। प्रजा जनयन् वर्षकर्मणा। भुवनस्य त्रैलोक्यस्य। गोपा रक्षिता। वृषा वर्षणशीलः। पवित्रे व्याप्तिमये। अधि सानौ अधिषिच्यमान सोम्यैः। वावृधे वर्धते। बृहदिति सोमविशेषणम्। स्वानः सुतः। अद्रिरादित्य आदरणः। अत्यक्रमीत् अधिष्ठितवान्। समुद्रः आत्मा। अभिद्रवन्ते तं भूतानि परमेभ्यः धने। भूतेन्द्रियमिश्रं शरीरे जनयन्। ज्ञानकर्मणा बोध्यमुत्पादयन्। प्रज्ञा वर्धयन्। भुवनस्य गोप्ता प्रकाशरूपत्वात्। वृषा पवित्रे सत्यमये। आत्मा वर्षिता भवति। शरीररूपेण पवित्रे ज्ञानमये। अवतेर्गत्यर्थस्य। गत्यर्थाश्च बुद्ध्यर्थाः। अधि सानौ सम्बध्यमानशब्दादिषु। महद्वावृधे सुष्ठु वर्धते। पवित्रे अद्रिः आदरणः॥

पराशरः। अक्रान् क्रन्दति। समुद्रः समुन्दनः सोमः। प्रथमे श्रेष्ठे यज्ञे। विधर्मन् विधारके। जनयन् प्रजाः सर्वाः। भुवनस्य गोपाः रक्षकः। वृषा वर्षिता। सानौ उच्छ्रिते। अव्ये अविमये पवित्रे अधि परिषिक्तः सन्। बृहत् अत्यर्थम्। वावृधे सोमः। स्वानः सुतः। अद्रिः आदारयिता असुररक्षसाम्॥ (७)

**कनिक्रदन्ति हरिरा सृज्यमानः सीदन् वनस्य जठरे पुनानः।**
**नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयन्त स्वधाभिः॥**

कनिक्रदन्ति। कन्दि शब्दे। एकवचनम्। शब्दं करोति। हरिः हरितवर्णः। सृज्यमानः संसृज्यमानः। आसीदन् वनस्य उदकस्य। जठरे

उदरे द्रोणकलशस्य । पुनानः पूयमान· । नृभिर्यत· मनुष्यैः संयमितः । कृणुने कारयति । निर्णिजं रूपम् । गा गवा रश्मीना उदकाना वा । अतः मतिं प्रज्ञां जनयन्त स्वधाभिरन्नैस्तर्पित्वा ॥

प्रस्कण्वः । कनिक्रदन्ति भृशं शब्दायते । क्रन्दतेः चर्करीते रूपं इदम् । हरिः सोमः । सृज्यमानः पवित्रे आसीदन् । वनस्य वार्क्षस्य जठरे । पुनानः पूयमानः । नृभिः ऋत्विग्भिः । यतः गृहीतः । गा गव्यं आशिरम् । निर्णिजं रूपं कृणुते । अतः एतस्माद्धेतोः । मतिं स्तुतिं जनयन्त सोमाय हे जनाः । स्वधाभिः बलैः ॥ (८)

एष स्य ते मधुमाँ इन्द्र सोमो वृषा वृष्णः परि पवित्रे अक्षाः ।
सहस्रदाः शतदा भूरिदावा शश्वत्तमं बर्हिरा वाज्यस्थात् ॥

एष स्य ते तव । मधुमान् स्वादुमान् । इन्द्रः सोमः वृषा सेक्ता । वृष्णः सेक्तुस्तव । परि सर्वतः । पवित्रे अक्षाः क्षरितवान् । किंविशिष्टः । सहस्रदाः शतदा अनेकदाता । भूरिदावा बहु प्रभूतं ददाति । शश्वत्तम नित्य । बर्हिः वाजी अन्नवान् । आ अस्थात् स्थितवान् ॥

उशनाः । एष स्य सः । मधुमान् रसवान् सोमः । हे इन्द्र ते तुभ्यम् । वृष्णः वर्षित्रे । चतुर्थ्यर्थे षष्ठी । पवित्रे परि परितः । अक्षाः इति क्षरतेः लडर्थे लुङि रूपम् । क्षरति । वृषा सोमः । सहस्रदाः शतदाः । किं बहुना भूरिदावा प्रभूतप्रदः । शश्वत्तमं पुराणतमम् । बर्हिः यज्ञम् । आ अस्थात् अधितिष्ठति । वाजी बलवान् ॥ (९)

पवस्व सोम मधुमाँ ऋतावापो वसानो अधि सानो अव्ये ।
अव द्रोणानि घृतवन्ति रोह मदिन्तमो मत्सर इन्द्रपानः ॥

पवस्व सोम मधुमान् स्वादुमान्। ऋतावा सत्यवान्। अपः वसान आच्छादयमान। अधि सानो समुच्छ्रिते। अव्ये अविमये। द्रोणानि द्रोणकलशादीनि। घृतवन्ति उदकवन्ति अवगाह। मदिन्तमः अतिशयेन मदनीय। मत्सरः सोम। इन्द्रपानः इन्द्रेण पानव्यः॥

प्रनर्दनः। पवस्व हे सोम मधुमान् मधुरः। ऋतवा यज्ञवान् यज्ञहेतुः। अपो वसानः अव्ये सानौ उपरि सक्तः। अवसीद द्रोणानि कलशं इत्यर्थः। घृतवन्ति दीप्तिमन्ति। मदिन्तम. मदयिता अतिशयेन। मत्सरः हर्षकरः। इन्द्रपानः इन्द्रेण पानव्यः॥ (१०)

इति षष्ठे चतुर्थी दशती।

---

प्र सेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना।
भद्रान् कृण्वन्निन्द्रहवान्त्सखिभ्य आ सोमो वस्त्रा रभसानि दत्ते॥

प्र सेनानी। सेनां नयति इति सेनानी.। शूरः विक्रान्त.। अग्रे रथानां ये देवरथा। गव्यन् इच्छन् धनं पृथिव्यां भवम्। प्रैति प्रयाति। हर्षते अस्य सेना। भद्रान् भन्दनीयानि। कृण्वन् कुर्वन्। इन्द्रहवान् इन्द्राह्वानानि। सखिभ्य ऋत्विग्भ्यः। एवंगुणविशिष्टः सोमः वस्त्राणि रभसानि पतन्ति। आदत्ते परमेभ्येभ्यः। अथवा सेनानी. स्कन्दः। शूरः विक्रान्त। अग्रे पुरतः देवरथानाम्। गव्यन् इच्छन् पृथिव्यां भवं धनम्। एति गृह्णाति ददाति सैन्येभ्यः। सोम इव रश्मीन् वस्त्राणि सैन्येभ्यो ददाति॥

प्रनर्दनः। प्रैति गच्छति। सेनानी' सेनाया नेता सन्। शूरः सोमः यजमानार्थं युध्यन्। अग्रे प्रमुखे रथानाम्। गव्यन् गा इच्छन् शत्रूणाम्।

हर्षते हृष्यति। अस्य सेना या अग्नौ नयति सा। स सोमः यज्ञेषु मद्रान् कल्याणान्। इन्द्रहवान् इन्द्रस्य आह्वानानि। कृण्वन् कुर्वन्। सखिभ्यः यजमानेभ्यः। आहूतो हि इन्द्र सोम पीत्वा कामान् प्रयच्छति। आदत्ते सोमः वस्त्रा वस्त्रस्थानीयानि वयानि। रभसानि वेगकराणि इन्द्रस्य ॥ (१)

**प्र ते धारा मधुमतीरसृग्रन् वारं यत् पूतो अत्येष्यव्यम्।**
**पवमान पवसे धाम गोनां जनयन्त्सूर्यमपिन्वो अर्कैः ॥**

प्र ते धारा । मधुमती रसवती अनृग्रन् । अव्यं वाल क्षरसि । पवमान पूयमान । पवसे क्षरसि । धाम गोना गवा रश्मीनामुदकाना वा । जनयन् उत्पादयन् । कम् । सूर्यम् । अपिन्व अतर्पय । अर्कैर्मन्त्रैर्वा ॥

पराशरः। प्रासृग्रन् प्रसृज्यते। ते तव। धाराः मधुमतीः मधुराः। अव्यं अविमयम्। वारं पवित्रम्। यत् यदा। पूत त्व अत्येषि अतीत्य गच्छसि। हे पवमान त्व पवसे। धाम। धीयते पीयते इति धाम पयः। गोना गवा पयः अभिकामयमान. पवसे। जनयन् सूर्यं अपिन्वः पूरयसि। अर्कैः स्तोत्रैः ॥ (२)

**प्र गायताभ्यर्चाम देवान्त्सोमं हिनोत महते धनाय।**
**स्वादुः पवतामतिवारमव्यमा सीदतु कलशं देव इन्दुः ॥**

प्र गायत अभ्यर्चाम देवान् स्तोत्रैर्गत्रैश्च । सोमं हिनोत गमयत । महते धनाय । स्वादु स्वादुमान् । पवतामतीत्य वारम् । अव्यं अविमयम् । आसीदतु कलशं द्रोणकलशम् । देव इन्दु सोम ॥

इन्द्रप्रमितिः वासिष्ठ । प्रगायत सोमम्। अभ्यर्चाम अभिष्टुम वय देवान्। पवमानो हि प्रथमं स्तूयते। पश्चात् अन्ये देवाः स्तूयन्ते। सोमं

हिनोत प्रेरयत पवित्रे। महते धनाय अस्माकम्। अयं च स्वादुः पवतां अति अतिक्रम्य। वारं अव्यं पवित्रम्। आसीदतु कलशम्। देवः दीप्तः इन्दुः ॥ (३)

**प्र हिन्वानो जनिता रोदस्यो रथो न वाजं सनिषन्नयासीत्।**
**इन्द्रं गच्छन्नायुधा संशिशानो विश्वा वसु हस्तयोरादधानः ॥**

प्र हिन्वान. प्रीणान· गच्छन् वा। जनिता रोदस्योः द्यावापृथिव्यो । रथ न रथ· इव । वाजं अन्नम् । सनिषन् सम्भजमानः । अयासीत् गतवान् । इन्द्रं गच्छन् आयुधा आयुधानि । संशिशानः तीक्ष्णानि कुर्वाणः । विश्वा विश्वानि । वसु वसूनि धनानि । हस्तयोः आदधानः ॥

वसिष्ठः। प्रायासीत् प्रयातः सोमः। हिन्वानः प्रेर्यमाणः। जनिता जनयिता रोदस्योः। रथो न रथ इव। वाजं युद्धम्। सनिषन् सेवमानः। इन्द्र गच्छन् गमिष्यन्। आयुधा आयुधानि। संशिशानः संशितानि कुर्वन्। विश्वा विश्वानि। वसु वसूनि। हस्तयोः आदधानः दानार्थम् ॥ (४)

**तक्षद्यदी मनसो वेनतो वाग्ज्येष्ठस्य धर्म द्युक्षोरनीके।**
**आदीमायन् वरमा वावशाना जुष्टं पतिं कलशे गाव इन्दुम् ॥**

तक्षन् करोति। यदि मनसः चेतसः। वेनत·। वेनतेः कान्तिकर्मणः। वाक् सखित्वम्। ज्येष्ठस्य प्रशस्तस्य। धर्म धर्मणः कर्मणः। द्युक्षोः अनीके मुखे। आत् ईं आ आयन् वरं वरणीयम्। वावशानाः कामयमानाः। जुष्टं पतिं पत्नीव। कलशे द्रोणकलशे। गावः रश्मयः उदकानि वा। इन्दुं सोमम् ॥

मृडीकः वासिष्ठः। तक्षत् अतक्षत् संस्करोति। यदि यदा सोमम्। मनसः। मन्यतेः स्तुतिकर्मणः मनः। स्तोत्रस्य। वेनतः कामयमानस्य। वाक् स्तुतिः। ज्येष्ठस्य प्रशस्यस्य। धर्म कर्मणि यज्ञे। द्युक्षोः दीप्तस्तुतिकस्य। टुक्षु शब्दे इत्यस्मात् क्षुः। अनीके प्रमुखे सवनस्य। यदा यज्ञेषु सवनमुखे स्तोतारः स्तुवन्ति सोममित्यर्थः। आत् अनन्तरम्। ईं एनं सोमम्। आ आयन् अभियन्ति। वरं वरणीयम्। वावशानाः कामयमानाः गावः। जुष्टं पर्याप्तं पतिम्। कलशे स्थितं इन्दुम्। आशीराागच्छतीति वा आशीर्दुहो गाव आगच्छन्तीति वा॥ (५)

साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः।
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी॥

विनियोगोऽस्याभिप्लवे। साक्मुक्षः सह वहतो. द्वयोः। मर्जयन्तः स्वसारः भगिन्यः दश। धीरस्य धीतयः धीमस्य अङ्गुलयः। धनुत्रीः। धनुः त्रायन्त्यः। हरि हरितवर्ण। पर्यद्रवत् रसभावेन। जाः अपत्यं सूर्यस्य। द्रोणं द्रोणकलशम्। ननक्षे व्याप्नोति। अश्व इव वाजी वेगवान्। वेगवान् अश्वः यथा व्याप्नोति आमं तद्वत्॥

नोधाः। साकमुक्षः साकं सिञ्चन्त्यः। दश स्वसारः अङ्गुलयः। मर्जयन्त शोधयन्ति सोमम्। धीरस्य नोधसः। धीतयः विधात्र्यः कर्मणाम्। धनुत्रीः। धिनोतेर्धनुत्र्यः। प्रीणयित्र्यः। धन्वतेर्वा गतिकर्मणः। प्राप्नुवन्त्यः प्राप्तव्यानि। हरिः सोमः। पर्यद्रवत् परितो धावति पवित्रम्। जाः जनयिता सूर्यस्य। जन जनने इत्यस्मात् धातोर्विट्प्रत्यये विड्वनोः इत्यनुनासिकः स्यात् इति आकारः।

जनिताग्नेर्जनिता सूर्यस्य (ऋ. वे. ९. ९६. ५)

इति च भवति। द्रोणं द्रोणकलशम्। ननक्षे व्याप्नोति। नक्ष व्याप्तौ। अत्यो न अश्व इव। वाजी वेगवान्॥ (६)

अधि यदस्मिन् वाजिनीव शुभः स्पर्द्धन्ते धिय सूरे न विशः।
अपो वृणानः पवते कवीयान् व्रज न पशुवर्धनाय मन्म ॥

अधि यदस्मिन् वाजिनी अन्नवती इव यज्ञे । शुभ शोभनाः । धिय प्रज्ञा कर्माणि वा । स्पर्धन्ते अन्योन्यातिशयेन । विश न प्रजा इव स्पर्धन्ते मा प्रति उदेति । अप वृणान आच्छादयमानः । पवते कवीयान् कवितर । व्रज मार्गम् । पशुवर्धनाय पशुवृद्धयर्थम् । मन्म मन्त्र ॥

कण्वः । अस्मिन् सोमे अधि । यत् यदा । स्पर्धन्ते धियः स्तुतयः अहमहमिकया अभिगच्छन्ति । वाजिनीव अश्वे इव । शुभोऽलङ्कारः । सूरे न सूर्य इव । विशो जना. उपस्थाने । अय च सोमः अप. वसतीवरी. । वृणानः आच्छादयन् । पवते कवीयान् कवीन् स्तोतॄन् कामयमानः । व्रज न व्रजमिव । पशुवर्धनाय । यथा व्रज गोष्ठ गोपः पशूना वर्धनाय गच्छति तद्वत् । मन्म अभिमतं यजमानस्य उद्दिश्य ॥ (७)

इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन् मदाय ।
हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन् वृजनस्य राजा ॥

विनियोगोऽस्य पञ्चमेऽहनि । इन्दुः वाजी अन्नवान् पवते । गोन्योघा गवा न्योघा सङ्घा । इन्द्रे सोम सह इन्वन् प्रीणयन् । मदाय मदार्थम् । हन्ति रक्ष रक्षासि हिंसति । परिबाधते अरातिं अकर्माण शत्रुम् । वरिव धनानि कृण्वन् वरिष्ठानि । वृजनस्य । व्यत्ययेन सप्तम्यर्थे षष्ठी । सङ्ग्रामे । राजा दीप्यन्ते शोभन्ते ॥

मन्यु वसिष्ठ । इन्दुः दीप्तः । वाजी वेगवान् । गोन्योघाः । गमनशीलः नीचीनोऽप्याङ्मुख ओघ' प्रवाह' यस्य स गोन्योघा. । सोमः पवते इन्द्रे सहः

वलम्। इन्वन् प्रेरयन्। मदाय तम्य। हन्ति रक्षः। परिबाधते च अरातिं शत्रुम्। वरिवः धनं कृण्वन् परिचारकाय। वृजनस्य बलस्य यज्ञस्य वा। राजा ईश्वरः ॥ (८)

अया पवा पवस्वैना वसूनि मांश्चत्व इन्दो सरसि प्र धन्व ।
ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥

विनियोगोऽस्य षष्ठेऽहनि । अया पवा अनेन पवनेन पवस्व । एना वसूनि धनानि । मांश्चत्वे अश्वे आरूढः । हे इन्दो सरसि उदके । प्रधन्व प्रगच्छसि । मांश्चत्वे वा सरसि । प्रधन्वः धारणशीलः । ब्रध्नः ब्रध्नः सविता वा महान् वा । चित् अन्तः । यस्य वातो न वातस्येव चित्स्वभावस्य इव । जूतिं गतिम् । पुरुमेधाः बहुप्रज्ञः चित् । तक्वे । तकुः स्तोता । तस्मै कवये । नरं अपत्यम् । धात् स्थापयति । अथवा अया पवा अनेन मार्गेण । पवस्व वसूनि धनानि । मांश्चत्वे हे इन्दो सरसि उदके गमनसंयुक्ते । प्रधन्व पवस्व । ब्रध्नश्चित् । ब्रध्नः सविता । चिदिति पदपूरण । यस्य वात न जूतिं वातस्येव जूतिः वेग । पुरुमेधा ऋषिः । चिदिति पदपूरण । तक्वे । यो नरं यजमानमवति रक्षति । नरं धात् ॥

कुत्सः । अया अनया । पवा पवमानया धारया । पवस्व क्षर । एना एनानि वसूनि । माश्चत्वे अभिमन्यमानान् । शत्रून् चातयति नाशयति इति माश्चत्वम् । तस्मिन् । सरसि कलशे । प्रधन्व प्रगच्छ हे इन्दो । ब्रध्नश्चित् आदित्यश्च । वातो न वात इव । जूतिं जूतं वेगितम् । पुरुमेधाश्चित् बहुयज्ञश्च इन्द्रः अत्र अस्मिन् यज्ञे । तक्वे । तकेर्गतिकर्मणः तकुः । उपगन्त्रे मह्यम् । नरं नेतारं पुत्रम् । धात् दधातु धारयतु हे सोम त्वया समर्पितौ सन्तौ ॥ (९)

महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥

महत् महदेवैतत् आश्चर्यमेतत् कर्म । सोमस्य महिषः महनीयस्य । चकार कृतवान् । . . . . . . ओजः बलम् । जनयन् जनितवान् सूर्ये । ज्योतिः प्रकाशम् । इन्दुः सोम । अधिदेवपक्षे महत् सोमः आदित्यः । महिषः पूजनीय. महत्त्वात् । महत् कर्म चकार । अपा यद्गर्भो देवानामाधिपत्यम् । अवृणीत । आच्छादयत् देवान् तेजसा । किंच अदधादिन्द्रे पवमानः सोमात्मना । ओज बलं पीत सन् । अजनयत् सूर्ये सरणमण्डले । ज्योतिरिन्दुरादित्य. । अध्यात्मम् । सोमः अहो महदसम्भाव्यं तत्कर्म । महिषः पूजनीय । अपा यत् गर्भः दर्शनमात्रम् । पञ्चाना भूतानां गर्भः अधिष्ठानं भूत्वा । अवृणीत अधिष्ठितवान् । देवानिन्द्रियाणि अवृणीत शरीरमध्ये तिष्ठतीति कृत्वा । अदधादिन्द्रे आत्मनीश्वरे पवमानः पूयमान. विषयप्रमाणेन । ओजः बलमणिमादि । अजनयच्च सूर्ये ज्योतिः । तथाचोक्तम्—येन सूर्यस्तपति तेज इन्द्र ॥

पराशरः । महत् तत् महान्ति तानि कर्माणि । सोमः महिषः महान चकार । कानि तानि । यत् यम् । अपा गर्भः रसभूतः । अवृणीत देवान् असुरपरित्यागेन । अदधाच्च यत् इन्द्रे ओजः बलं पवमानः । यच्च अजनयत् सूर्ये ज्योतिः इन्दुः दीप्तः ॥ (१०)

असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमा मनीषा ।
दश स्वसारो अधि सानौ अव्ये मृजन्ति वह्निं सदनेष्वच्छ ॥

असर्जि सृष्टवान् । वक्वा वक्ता । अश्वो न रथ्यः रथे हित. । वाजी वेगवान् । धिया प्रज्ञया कर्मणा वा । मनोता । ओतानि मनांसि देवानां यस्मिन् सोमे सः मनोता । प्रथमा मनीषा मनस. एषणः । दश

स्वसारो भगिन्यः । अधि उपरि । सानौ समुच्छ्रिते । अव्ये अविमये । मृजन्ति शोधयन्ति अङ्गुल्यः । वह्निं वोढारम् । सदनेषु अच्छ आप्तुम् ॥

काश्यपः । असर्जि सृज्यते प्रेर्यते । रथ्ये रथयोग्ये । आजौ यथा रथः सृज्यते । वक्ता स्तोत्रा । वचेर्वक्तुः । धिया । विदधाति इति धीः । तया कर्म्या । मनोता यस्या देवाना मनांसि ओतानि सा मनोता । प्रथमा श्रेष्ठा । मनीषा स्तुतिः । किंच दश स्वसारः अङ्गुल्यः । अव्ये अविमये । सानौ स्थाने पवित्रे । अधि उपरि । मृजन्ति क्षिपन्ति सोमम् । वह्निं वोढारं यज्ञस्य । सदनेषु कलशेषु । अच्छ अभि ॥ (११)

अपामिवेदूर्मयस्तर्तुराणाः प्र मनीषा ईरते सोममच्छ ।
नमस्यन्तीरुप च यन्ति सं चा च विशन्त्युशतीरुशन्तम् ॥

अपां इव इत् ऊर्मयः सङ्घाता । तर्तुराणा तरमाणा. । प्र मनीषा ईरते । कम् । सोमम् । . . . . . . कामयमानम् ॥

प्रस्कण्वः । अपामूर्मय इव तर्तुराणाः मनीषाः स्तुतयः । प्र ईरते प्र गच्छन्ति । सोमं अच्छ अभि । नमस्यन्तीः परिचरन्त्यः । उपयन्ति समीपे गच्छन्ति च । संयन्ति सह गच्छन्ति च सर्वाः । आविशन्ति च सोमम् । उशन्तं कामयमानम् । उशतीः उशन्त्यः मनीषाः ॥ (१२)

इति षष्ठे पञ्चमी दशती ।

---

इत उत्तरमनुष्टुभः ॥

पुरो जिती वो अन्धसः सुताय मादयित्नवे ।
अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥

विनियोगोऽस्य ज्योतिष्टोमे । पुरः अग्रत । जिती जित्यै । अन्धसः अन्नस्य सोमलक्षणस्य । सुताय सोमाय । मादयित्वने मदनशीलाय । अपश्नथिष्टन श्वानं अपघ्नत हे सखाय· । किंविशिष्टम् । दीर्घजिह्वयम् । अथवा श्नथिष्टन शिथिलीकरोतु इन्द्रम् । हे सखायः ऋत्विजः । अथवा शिथिलीकरोतु सोमम् । श्वानं कश्चिदुपद्रवकर्तारमपघ्नत ॥

पुरोजिती नवर्चोऽत्र बृहत्या हर्यताय या ।
अथावनुष्टुभः शिष्टा वक्ष्यन्ते ऋषयः पृथक् ॥

अनानतः पारुच्छेपिः । पुरः स्थितस्य जनस्य अन्धसः अन्नभूतस्य । चतुर्थ्यर्थे षष्ठी । सुताय अभिषुताय । मादयित्नवे मदनशीलाय सोमाय । तदर्थम् । श्वानं उपघातकम् । दीर्घजिह्व दीर्घजिह्वम् । अथवा दीर्घजिह्वीयं चासुरीम् । अपश्नथिष्टन अपबाधध्वम् । अनुपघाताय हे सखायः वः यूयम् । श्रूयते हि शाट्यायनक च । दीर्घजिह्वी ह वा आसुर्यः । स सहाह स्म सोमं लेढि इत्यादिना ॥ (१)

अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥

विनियोगोऽस्य द्वितीयेऽहनि । पूषा पुष्णातेः सोमः । रयिः धनं भग । स एव सोम शोभनः । अथवा पूषा आदित्य । पुनानः पूयमानः । अथवा पुनानः रश्मिभि· । अर्षति क्षरति आदित्यात्मना गच्छति । पति स्वामी विश्वस्य । पूषा च विश्वस्य सर्वस्य भूमनः बहुत्वस्य । व्यख्यत् प्रकाशयति । रोदसी द्यावापृथिव्यौ । उभे उभौ सोमापूषणौ ॥

नहुषो मानवः । अय सोमः पूषा पोषकः । रयिः धनवत् प्रियः । भगः भजनीयः । पुनानः पूयमानः पवित्रे । अर्षति गच्छति द्रोणकलशम् । पतिः

विश्वस्य भूमनः भूतजातस्य । व्यख्यत् विचष्टे विजानाति विख्यापयति प्रकाशयति इति वा । रोदसी उभे ॥ (२)

सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
पवित्रवन्तो अक्षरन् देवान् गच्छन्तु वो मदाः ॥

विनियोगोऽस्य तृतीयेऽहनि । सुतास अभिषुता । मधुमत्तमा. अतिशयेन रसवत्तमा· सोमा । इन्द्राय मन्दिन मदनवन्त स्तुत्या च तद्वन्तः । पवित्रवन्त· दशापवित्रपूता । देवान् वस्वादीन् । गच्छन्तु व· युष्माकं मदा· ॥

ययातिः नाहुष । सुतासः अभिषुताः । मधुमत्तमाः मधुरतमाः सोमाः । इन्द्रस्य मन्दिनः स्वभूताः । पवित्रवन्तः दशापवित्रेण ससृष्टाः अक्षरन् । ते मदाः मदकराः सोमाः देवान् गच्छन्तु । वः युष्मदीयाः हे यजमानाः ॥ (३)

सोमाः पवन्त इन्दवो ऽस्मभ्यं गातुवित्तमाः ।
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥

*मनुः सावरणः । सोमाः पवन्ते इन्दवः दीप्ताः अस्मभ्यम् । गातुवित्तमाः अतिशयेन मार्गलम्भनाः । मित्राः मित्रभूताः । स्वानाः सुताः । अरेपसः अपापाः । स्वाध्यः शोभनाध्याना. । स्वर्विदः सर्वज्ञाः सर्वकामलम्भना वा ॥ (४)

अभी नो वाजसातमं रयिमर्ष शतस्पृहम् ।
इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥

* Madhava's Commentary is missing for verses 4 and 5 and for part of the sixth verse

ऋजिश्वाम्वरीपथ्र। अभ्यर्ष अभिक्षर। नः अस्मभ्यम्। वाजसातमं अतिशयेन बलप्रद रयिम्। शतस्पृह बहुभिः स्पृहणीयम्। हे इन्दो सहस्रभर्णसं बहूना पोषक। तुविद्युम्नं बह्वन्नम्। विभासहं विदीप्ताना शत्रूणा अभिभवितारम्॥ (५)

अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम्।
वत्सं न पूर्व आयुनि जातं रिहन्ति मातरः॥

. . . . . . . . .

प्रियमिन्द्रस्य पेयतम इन्द्रस्य। काम्यं इन्द्रोऽपि कामयते। वत्सं न वत्समिव। पूर्वे आयुनि आयुषि। जात रिहन्ति लेलिहन्ति आस्वादयन्ति। मातरः रश्मयः उदकानि वा॥

रेफश्च सूनुश्च काश्यपः द्वयोः संहैव। अभी नवन्ते अभिष्टुवन्ति स्तोतारः। अद्रुहः मित्रभूता. परस्परम्। प्रिय इन्द्रस्य काम्यं कमनीयं सोमम्। जातं सुत एन मातरः गावः। रिहन्ति पयोरूपेण। वत्सं न वत्समिव। पूर्वे प्रथमे। आयुनि वयसि तिष्ठन्त गावः॥ (६)

आ हर्यताय धृष्णवे धनुष्टन्वन्ति पौंस्यम्।
शुक्रा वि यन्त्यसुराय निर्णिजे विपामग्रे महीयुवः॥

हर्यताय। हर्यति प्रेप्साकर्मा। प्रेप्सितव्याय। धृष्णवे धर्षणशीलाय। आ धनुष्टन्वन्ति विस्तारयन्ति किञ्चिच्छब्दं कुर्वन्ति वा। पौंस्यं सामर्थ्ययुक्तम्। शुक्रा. शुचिष्मन्त। वियन्ति असुराय सुखाय असुदानवते। निर्णिजे निर्णेजनार्थम्। विपां प्रज्ञानाम्। अग्रे प्रथमम्। महीयुवः महत् सोमं मिश्रयन्ति रश्मय उदकानि वा॥

